विक्रमप्रियतमापि यदेक—स्तम्भसौधमुषिता कुलटाऽभूत् ।
स्त्रीजनस्तदुचितोऽप्यतियत्ना—त्स्वैरतां न विजहात्यतिलोलः ॥ १ ॥

इति परशास्त्रविदितं ज्ञातमुक्त्वा श्रीहेमगुरुश्चौलुक्यसिंहं प्रोचे—"अत्रार्थे त्वमपि मा निर्बन्धं विधेहि । यदि च वारितोऽपि संदेहं न जहासि तदाऽद्य सायं मृतस्य वसुदत्तस्य विप्रस्य ज्वलनार्थं समुत्सुकायाः प्रियायाश्चरित्रं हरगृहे गत्वा निभालय" । गुरुणा वारितोऽपि हठतो नक्तं मृतकदाहो न स्यादिति हरौकसि पतिमस्तकमुत्सङ्गे निधाय योषितस्तस्याश्चरित्रं निदध्यौ । अथ स्वैरिणीनां शिरोमणिः साऽपि तत्रस्थितेनैकेन मधुरस्वरेण गानपरेण मोहिता सती तेन सह संभोगं व्यधात् । राजाऽपि तस्या एतद्दृशमनुचितं चरितं निरीक्ष्य "धन्या गुरव" इति ध्यायन्नुषसि गृहं ययौ । अथोदिते रवौ गृहादागत्य राज्ञा चितां प्रवेष्टुमुद्यता सेति शिक्षिता—"हे सुभगे ! किमिदं विमुक्तज्ञानाचरणं करोषि ? यतः—

कोइ कंत कारण काष्ठभक्षण करे, मिलस्युं कंतने धाय ।
ए मेलो किहांइ नवि संभवे, मेलो ठाम न थाय ॥ १ ॥

अनेनाचरणेन चिन्तितं सफलं स्याच्चेत्तदा दीपवर्तीलुब्धशलभादीनामपि भवेत् । पूर्वोपार्जितकर्मगतिगामुकौ सङ्ख्यातयोजनान्तरितौ भिन्नभिन्ननामदेशस्थानजातिप्राप्तौ दम्पती तयोः परस्परेप्सितमिलनं कदापि न जायते । किमर्थं देहं दहसि ? अविनाशिपरमात्मध्याने मनो निधेहि" इत्यादिनृपवचांसि

न मानितानि, तदा नृपेण कर्णे प्रविश्य लग्नं तन्नक्तचरित्रं प्रोच्य हक्किता—"अधुना चैवं करोषि?"। इति श्रुत्वा सा राजानं दूरीकृत्य लोकसमक्षमाह—"भो लोकाः! यदसौ कुमारपालः परमधार्मीकस्तन्मिथ्या, यत्कर्णे प्रविश्य ममेति वक्ति—हे सुन्दरि! मा त्वमग्नौ प्रविश, मदन्तःपुरमलंकुरु, त्वामहमग्रमहिषीं करिष्ये, अहं भोगसुखनिःस्पृहा आबाल्यतः पतिव्रताऽयोग्यं न करोमि, अश्राव्यं किं वदसि? एतावदनेकसौख्यैर्लब्धैरपि त्वं तृप्तो नाभूः? अहं सीतादिसतीशीलशीला" इत्यादि बाढस्वरेण जनानां पुरः प्रतिपाद्य सा चितां प्राविशत्। धिग्धिगिति लोकैर्निन्दितोऽञ्जनदिग्धमिव श्याममुखं पिधाय वज्राहत इव हृदि पीडितः पार्थिवो नगरान्तरागत्य सौधं प्रविष्टः। "ज्वलनोद्यतां महासतीमसौ राजा भृशमनुचितमूचे" इति चत्वरादिषु लोकैर्विधीयमानेयं वार्ता सलिले तैलबिन्दुरिव सकलेऽपि पुरे प्रथिता। एनमुदन्तमाकर्ण्य गुरवोऽपि सौधे गत्वा राजानमूचिरे—"हे नृप! दृष्टं स्त्रीचरित्रं?"। इत्युक्ते राजोचे —"हे भगवन्! भवदाज्ञाभङ्गफलं लब्धं, अथ सकलङ्कैर्मम प्राणैरलं इत्यनशनं कृत्वा प्राणांस्त्यक्ष्यामी"ति वदन्तं गुरुराह—"किं खेदं वहसि? त्वमाजन्मतः परनारीसहोदरोऽसि, श्रीमत्पूरमात्मवाक्यानुसारेण स्वकुमतिकल्पनां त्यक्त्वा यानि शास्त्राणि रचितानि तेषु न्यस्तवाक्यानि सर्वाणि अश्रेयानि, एकं स्वल्पं वाक्यं श्रुत्वा त्वया यद्यस्थैर्यं स्वीकृतं तर्हि सूक्ष्मपदार्थेषु मनःस्थितिः कथं भाविनी?"। नृपः प्राह—"स्वामिन्! ममापराधं क्षमस्व, परमेतदलीकं मनस्यजस्रं खाट्करोति"।

गुरुराह—"एकः पङ्गुर्नरस्तद्वारपालः सर्वमेतत्स्वरूपं जानाति" । ततो लोकसमक्षं पङ्गुराकार्य गुरुणा पृष्टः, स रात्रिजातं स्त्रीचरित्रं यथाजातं जगौ । लोकोऽपि तदुक्तं निशम्य "धिग्धिक्तां स्वैरिणीं" इति निन्दां विधाय नृपमस्तवीत् ।

श्रीयोगशास्त्रे गदितं चरित्रं, श्रुत्वाङ्गनानां कविनोक्तमेतत् ।
कूटं दधानं गुरुहेमसूरिः, स्थिरीचकारेति कुमारपालम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंशस्तम्भे चतुःसप्तत्यधिकद्विशततमं २७४ व्याख्यानम् ॥



## पञ्चसप्तत्यधिकद्विशततमं २७५ व्याख्यानम् ॥

अथ पुनः स्थिरीकरणस्वरूपमाह—

सदनुष्ठानसम्यक्त्वमनःशुद्ध्यादयो गुणाः । तेषां तत्त्वार्थमाख्याय धर्मे क्ष्मापः स्थिरीकृतः ॥ १ ॥

स्पष्टः । भावार्थस्तु ज्ञातेन ज्ञेयः । तथाहि—पत्तने वङ्गे श्रीकुमारपालनृपः साङ्ख्यबौद्धकपिलजैमिनीयचार्वाकादिशास्त्ररहस्यानि श्रुत्वोत्पन्नसंशयः आबाल्यब्रह्मचारिणं श्रीहेमसूरिं स्माह—"स्वामिन् । सर्वेऽपि मतवादिनः स्वस्वपक्षं स्तुवन्ति, स्वस्वानुष्ठानादिकं कुर्वन्ति, अत्र कः प्रमाणपक्षः ?" । गुरुराह—"एकान्तवादिनः सर्वेऽपि परमात्मगदिततत्त्वपराङ्मुखा ज्ञेयाः । अपि चानुष्ठानानि तु पञ्चवि-

धानि सन्ति । आहारोपधिपूजार्धिप्रभृतीहलोकभोगाशंसान्वितं कृतं शीघ्रं सच्चित्तहन्तृत्वाद्विषानुष्ठानमुच्यते । यथाऽहिफेनवत्सनागादिस्थावरविषं जङ्गमविषं सर्पादिकं च भक्षितं तत्क्षणं हन्ति, तथेदमपीति १ । भवान्तरदिव्यभोगाभिलाषेण यत्कृतं तद्गरलानुष्ठानं, कालान्तरे स्वादृष्टपुण्यफले प्राप्ते सति, यथाऽलर्कश्वानविषं कुद्रव्यसंयोगजनितं गरलसंज्ञकं विषं कालान्तरे हन्ति, तथेदमपि तत्त्वत इति २ । प्रणिधानाद्यभावेन समूर्छिमजीववृत्त्याभ्रं अन्योऽन्यानुष्ठानं, अत्र द्वे संज्ञे अन्तर्भवतः—लोकं सूत्रं गुरुवाक्यं चानपेक्ष्य किञ्चिदनवध्यवसितं शून्यमनस्कं ओघसंज्ञया ज्ञानं विना कुरुते तदोघसंज्ञा कथ्यते। अधुना काले शुद्धक्रियान्वेषणेन तीर्थोच्छेदः स्यादिति वादिनां लोकाचाराद्(रे)अश्रद्धा सा लोकसंज्ञेति गीयते । तीर्थोच्छेदभियाऽविशुद्धाचरणेन गतानुगतिकत्वतः सूत्रक्रियाविलोपः स्यात् । धर्मक्रियाममूं बहवो जनाः कुर्वन्ति अतो वयमपि कुर्मस्तदा मिथ्यादृशां धर्मः कदाचन न त्याज्यः स्यात् ।

तस्माद्गतानुगत्या यत् क्रियते सूत्रवर्जितम् । ओघतो लोकतो वा तदननुष्ठानमेव हि ॥ १ ॥

एतदनुष्ठानं तु अकामनिर्जराया अङ्गमुदितं कायक्लेशादिहेति ३ । स्वोपयोगपूर्वं मार्गानुसारीभूय सदनुष्ठानरागरूपं तद्धेत्वनुष्ठानं ज्ञेयं । एतच्चतुर्थं चरमपुद्गलपरावर्तशेषे सति समायाति । अयं चरमावर्तस्तु धर्मस्य यौवनकालो ज्ञेयः, तदन्यः समस्तो बालकालश्च । यथा तारुण्यप्राप्तं नरं प्रति अखिला बालक्रीडा लज्जारूपा स्यात्, तथा धर्मरागेण सयौवनं जीवं प्रति असत्क्रिया ह्रिये स्यादिति ४ । स्याद्वादपद्धाज्ञां पुरस्कृत्य संवेगगर्भचित्तशुद्धितः क्रियादरस्तदमृतानुष्ठानं । यत्र सम्यक् प्रणिधानं काला-

दिपक्षहेतुर्यथार्थग्रहणं च वर्तेत इति ५ । सर्वमपि सदनुष्ठानं सम्यक्त्वान्वितमेव फलं ददाति । यतः—

सम्यक्त्वसहिता एव शुद्धा दानादिकाः क्रियाः । तासां मोक्षफले प्रोक्ता यदस्य सहकारिता ॥ १ ॥

अपि च सम्यक्त्वक्रियामिच्छता मनःशुद्धिरवश्यं कार्या । यतः—

उचितमाचरणं शुभमिच्छतां, प्रथमतो मनसः खलु शोधनम् ।
गदवतां ह्यकृते मलशोधने, कमुपयोगमुपैति रसायनम् ॥ १ ॥

जिनवचोघनसारमलिम्लुचः, कुसुमसायकपावकदीपकः ।
अहह कोऽपि मनःपवनो बली, शुभमतिद्रुमसंततिभङ्गकृत् ॥ २ ॥

मनसि लोलतरे विपरीततां, वचननेत्रकरेङ्गितगोपना ।
व्रजति धूर्ततया ह्यनयाऽखिलं, निबिडदम्भपरैर्मुषितं जगत् ॥ ३ ॥

मनसो यदि चपलता तदा सर्वाङ्गचेष्टा विपर्यासं लभन्ते ।

प्रथमतो व्यवहारनयस्थितो—ऽशुभविकल्पनिवृत्तिपरो भवेत् ।
शुभविकल्पमयव्रतसेवया, हरति कण्टक एव हि कण्टकम् ॥ ४ ॥

कण्टकः कण्टकमपनयतीतिन्यायेन शुभविकल्पोऽशुभविकल्पमपनयतीति ।

तदनुकाञ्चननिश्चयकल्पना—विगलितव्यवहारपदावधिः ।
न किमपीतिविवेचनसंमुखी, भवति सर्वनिवृत्तिसमाधये ॥ ५ ॥

प्राप्तनिश्चयविचारणया विघटितव्यवहारमर्यादश्चिन्तयति तदा न किमपि संकल्पविकल्पो जायते इति । अपि चासङ्ग्रहे स्वीकृते न मनःशुद्धिः, न मिथ्यात्वहानिः, न तत्त्वाश्वासिश्च स्यात् ।

असङ्ग्रहाग्निज्वलितं यदन्तः, क्व तत्र तत्त्वव्यवसायवल्लिः ।
प्रशान्तिपुष्पाणि हितोपदेश—फलानि चान्यत्र गवेषयन्तु ॥ १ ॥
व्रतानि चीर्णानि तपोऽपि तप्तं, कृताऽपि यत्नेन च पिण्डशुद्धिः ।
अभूत् फलं यत्तु न निह्नवाना—मसङ्ग्रहस्यैव हि सोऽपराधः ॥ २ ॥

असङ्ग्रहत्यागेनैव क्रियायोगज्ञानयोगयोः शुद्धिः स्यात् । क्रियायोगस्तु शरीरादिचपलतात्यागहेतुक्षमः । ज्ञानयोगस्तु इन्द्रियार्थोन्मनीभावादात्मरत्येकलक्षणो ज्ञेयः ।

न ह्यप्रमत्तसाधूनां क्रियाऽप्यावश्यकादिका । नियता ध्यानशुद्धत्वाद्यदन्यैरप्यदः स्मृतम् ॥ १ ॥

अन्यशास्त्रेऽप्युक्तं च—

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १ ॥

अस्मिन् ज्ञानयोगेऽरत्यानन्दयोः प्रवेशो नास्ति, यतः—

अवकाशो निषिद्धोऽस्मिन्नरत्यानन्दयोरपि । ध्यानावष्टम्भतः क्वास्तु तत्क्रियाणां विकल्पनम् ॥ १ ॥
देहनिर्वाहमात्रार्था याऽपि भिक्षाटनादिका । क्रिया सा ज्ञानिनोऽसङ्गान्नैव ध्यानविघातिनी ॥ २ ॥
अत एव दृढस्वान्तः कुर्याच्छास्त्रादिना क्रियाम् । सकलविषयप्रत्याहरणाय महामतिः ॥ ३ ॥

ज्ञानी समस्तविषयान् जेतुं समयोक्तां क्रियां तनोति, नान्यः कोऽपि हेतुः ।

या निश्चयैकलीनानां क्रिया नातिप्रयोजनाः । व्यवहारदशास्थानां ता एवातिगुणावहाः ॥ १ ॥

ज्ञानयोगवान् ध्यानमग्नतां शुद्धां करोति, यतः—

निर्भयः स्थिरनासाग्रदत्तदृष्टिर्व्रते स्थितः । सुखासनः प्रशस्योऽन्यदिशश्चानवलोकयन् ॥ १ ॥

देहमध्ये शिरोग्रीवमवक्रं धारयन् बुधः । दन्तैरसंस्पृशन् दन्तान् सुश्लिष्टाधरपल्लवः ॥ २ ॥

आर्तरौद्रे परित्यज्य धर्मे शुक्ले च दत्तधीः । अप्रमत्तो रतो ध्याने ज्ञानयोगी भवेन्मुनिः ॥ ३ ॥

तत्रार्तध्याने आद्यत्रयलेश्यानां संभवः अनतिक्लिष्टभावानां कर्मणां परिणामतः स्यात् । एतद्ध्यानं प्रमत्तान्तगुणस्थानानुगं तिर्यग्गतिप्रदं सर्वप्रमादमूलत्वात् महात्मना त्याज्यं । रौद्रं त्वतिसंक्लिष्टरूपाणां कर्मणां परिणामत आद्यत्रिलेश्यान्वितं नरकदुःखदं देशविरतिपर्यन्तस्थितिकं धीरैस्त्याज्यं । लोकोत्तरे प्रशस्ते अन्त्ये द्वे ध्याने स्वीकार्ये । शुभध्यानी नेन्द्रादिपदं वाञ्छति । यतः—

यत्र गच्छति परं परिपाकं, पाकशासनपदं तृणकल्पम् ।
स्वप्रकाशसुखबोधमयं तद्ध्यानमेव भवनाशि भजध्वम् ॥ १ ॥
आतुरैरपि जडैरपि साक्षात्, सुत्यजा हि विषया न तु रागः ।
ध्यानवाँस्तु परमद्युतिदर्शी, तृप्तिमाप्य न तमृच्छति भूयः ॥ २ ॥

आत्मनो हि परमात्मनि योऽभू—भेदबुद्धिकृत एव विवादः ।
ध्यानसन्धिकृदमुं व्यपनीय, भागभेदमनयोर्वितनोति ॥ ३ ॥

ध्यानमिलापकारणभूमोऽमुं विवादमपनीयात्मपरमात्मनोरभेदं विस्तारयतीति । अथ सर्वेषु ध्याने-
ष्वात्मध्यानमेव श्रेष्ठं । यतः

आत्मध्यानं फलध्यानमात्मज्ञानं च मुक्तिदम् । आत्मज्ञानाय तन्नित्यं यत्नः कार्यो महात्मना ॥ १ ॥
ज्ञाते ह्यात्मनि नो भूयो ज्ञातव्यमवशिष्यते । अज्ञाते पुनरेतस्मिन् ज्ञानमन्यन्निरर्थकम् ॥ २ ॥
नवानामपि तत्त्वानां ज्ञानमात्मप्रसिद्धये । येनाजीवादयो भावाः स्वभेदप्रतियोगिनः ॥ ३ ॥

अजीवादितत्त्वानि जीवभेदसंबन्धीनि ज्ञेयानि । धर्मास्तिकायादयश्चलनाद्युपष्टम्भेनात्मानमेव
सर्वे उपकुर्वन्ति ।

प्रभानैर्मल्यशक्तीनां यथा रत्नादभिन्नता । ज्ञानदर्शनचारित्रलक्षणानां तथात्मनाम् ॥ ४ ॥

नैर्मल्यवतां रत्नानां प्रभागुणो यथा रत्नान्न भिन्नस्तथेति ।

आत्मनो लक्षणानां च व्यवहारेण भिन्नता । षष्ठ्यादिव्यपदेशेन मन्यते न तु निश्चयः ॥ ५ ॥

आत्मनो गुणा लक्षणानि च ज्ञानादय इति संबन्धः षष्ठीविभक्तिव्यपदेशेन ज्ञेयः । वस्तुतस्तु गुणा
न स्वात्मनः पृथक्, अन्यथाऽऽत्माऽनात्मा स्यात् । ज्ञानाद(द्य)पि जडीभवेदिति चैतन्यलक्षण एक
आत्मा इति महासत्तासामान्येन ज्ञेयो निश्चयमतेन । व्यवहारस्त्वेकेन्द्रियादिभेदत आत्मनां नानात्वं

मन्यते, न चैतन्निश्चये युक्तं । अखिलो नामकर्मकृतो भेद उपाधिजो ध्येयः । अपि चात्मा एकक्षेत्र-स्थितोऽपि न कर्मरूपतां प्राप्नोति अनन्यस्वभावत्वाद्धर्मास्तिकायवत्, यतः

उष्णस्याग्नेर्यथा योगाद् घृतमुष्णमिति भ्रमः । तथा मूर्त्ताङ्गसंबन्धादात्मा मूर्त्त इति भ्रमः ॥ ६ ॥

दृशाऽदृश्यं हृदाऽग्राह्यं वाचामपि न गोचरः । स्वप्रकाशं हि यद्रूपं तस्य का नाम मूर्त्तता ॥ ७ ॥

सन्निकृष्टान्मनोवाणीकर्मणामपि पुद्गलात् । विप्रकृष्टाद्धनादेश्च भाव्यैवं भिन्नताऽऽत्मनः ॥ ८ ॥

मनोवाक्प्रमुखकर्मपुद्गला आत्मनः समीपे सन्ति, धनादिकपुद्गलास्तु दूरे विद्यन्ते, सर्वेऽप्यात्मनः पृथग्ज्ञेया इति आत्मनः पञ्चाजीवद्रव्येभ्यो भिन्नत्वं । नयादेशादजीवत्वमपीष्यते द्रव्यप्राणदशकजीव-नव्यतीताः सिद्धा ज्ञानादिभावप्राणयुक्ताश्चाजीवाः । अपि चात्मा पुद्गलात्मकपुण्यपापाभ्यामपि व्यति-रिक्तः । अत्राह शिष्यः—

पुण्यकर्म शुभं प्रोक्तमशुभं पापमुच्यते । तत्कथं नु शुभं जन्तून् प्रपातयति जन्मनि ॥ १ ॥

पुण्यकर्म यदि शुभं तर्हि तत्कथं जीवान् संसारावटे पातयति ? गुरुराह—

न ह्यायसस्य बन्धस्य तपनीयस्य तस्य च । पारतन्त्र्याविशेषेण फलभेदोऽस्ति कश्चन ॥ २ ॥

लोहनिगडं यथा बन्धनं तथा स्वर्णनिगडमपि बन्धनं पारवश्याभेदेन ।

सर्वं पुण्यफलं दुःखं कर्मोदयकृतत्वतः । तत्र दुःखप्रतीकारे विमूढानां सुखत्वधीः ॥ ३ ॥

देहपुष्टेर्नरामर्त्यनायकानामपि स्फुटम् । महाजपोषणस्येव परिणामोऽतिदारुणः ॥ ४ ॥

जलौकाः सुखमानिन्यः पिबन्त्यो रुधिरं यथा। भुञ्जाना विषयान् यान्ति दशामन्तेऽतिदारुणाम् ॥ ५ ॥

नरामरेशानामपि देहपुष्ट्यादिसौख्यं तत्सर्वं परिणामकाले विपाकावसरे सेडुकविप्ररचितमेषपोषणस्ये-
वातिदुःखप्रदमिति ।

तीव्राग्निसङ्गसंशुष्यत्पयसामयसामिव । यत्रौत्सुक्यात्सदाऽक्षाणां तप्तता तत्र किं सुखम् ॥ ६ ॥

यथा तीव्राग्नितापेन शोषितजललोहानामिव तथौत्सुक्यरूपतापतः सदेन्द्रियाणां तप्तता, तत्र न
किमपि सौख्यं तत्त्वत इति ।

स्कन्धात्स्कन्धान्तरारोपे भारस्येव न तत्त्वतः । अह्लादेऽपि दुःखस्य संस्कारो विनिवर्तते ॥ ७ ॥

एकस्कन्धादन्यस्कन्धे भारो न्यस्तः, परं भारोत्पाटनं तत्त्वतो न गतं, तथाऽन्यत्किञ्चिद्दुःखत्यागार्थ-
मिन्द्रियसौख्यं प्रकटीकृतं पुनररतिस्पर्शात्तेन च दुःखसंस्कारो न गत इति ।

क्रुद्धनागफणाभोगोपमो भोगोद्भवोऽखिलः । विलासचिह्नरूपोऽपि भयहेतुर्विवेकिनाम् ॥ ८ ॥

इष्टमेकत्वमापन्नं फलतः पुण्यपापयोः । ताभ्यां भिन्नश्चिदानन्द आत्मा निश्चयशुद्धितः ॥ ९ ॥

तत्तुरीयदशाव्यङ्ग्यरूपमावरणक्षयात् । भात्युष्णोद्योतशीलस्य घननाशाद्रवेरिव ॥ १० ॥

तदात्मस्वरूपमयोगिगुणस्थाने उज्जागरतातुरीयदशाप्राप्तौ समस्तकर्मक्षयाज्जायत इति । अपि च
कर्मबन्धस्तु रागद्वेषाभ्यां स्यादित्याह—

लोहः स्वक्रिययाऽभ्येति भ्रामकोपलसन्निधौ । यथा कर्म तथा चित्तं रक्तद्विष्टात्मसन्निधौ ॥ ११ ॥

यथा चमकपाषाणो लोहमाकर्षयति, लोहश्च क्रियया तत्र मिलति, तथा रागद्वेषे समीपे सति कर्माण्यात्मानं मिलन्ति इति ।

कृष्णः शोणोऽपि चोपाधिर्नाशुद्धः स्फटिको यथा । रक्तो दिष्टस्तथैवात्मा संसर्गात् पुण्यपापयोः ॥१२॥

यथा स्फटिकशिला कृष्णरक्तपुष्पसंपृक्तेन(संपर्केण)कृष्णा रक्ता वोपाधिना दृश्यते तथाऽऽत्माऽपीति ।

तद्ध्यानं सा स्तुतिर्भक्तिः सैवोक्ता परमात्मनः । पुण्यपापविहीनस्य यद्रूपस्यानुचिन्तनम् ॥ १३ ॥

शरीररूपलावण्यवप्रछत्रध्वजादिभिः । वर्ण्यते वीतरागस्य वास्तवी नोपवर्णना ॥ १४ ॥

वीतरागस्य प्रातिहार्यादिवर्णनं तद्वस्तुगतवर्णनं नेति ।

व्यवहारस्तुतिः सेयं वीतरागात्मवर्तिनाम् । ज्ञानादीनां गुणानां तु वर्णना निश्चयस्तुतिः ॥ १५ ॥

पुण्यपापविनिर्मुक्तं तत्त्वतस्त्वविकल्पनम् । नित्यं ब्रह्म सदा ध्येयमेषा शुद्धनयस्थितिः ॥ १६ ॥

आश्रवः संवरश्चापि नात्मा विज्ञानलक्षणः । यत्कर्मपुद्गलादाननिरोधाश्रवसंवरः ( रौ ) ॥ १ ॥

आश्रवसंवरौ आत्मा न ज्ञेयौ । यस्मात्कर्मपुद्गलग्रहणमाश्रवः, एषां रोध एव संवरः अत इति ।

आत्माऽऽदत्ते तु यैर्भावैः स्ववशः कर्मपुद्गलान् । मिथ्यात्वाविरतियोगकषायास्ते तदाश्रवाः ॥ २ ॥

भावनाधर्मचारित्रपरीषहजयादयः । आश्रवोच्छेदिनो धर्मा आत्मनो भावसंवराः ॥ ३ ॥

संवरस्य सप्तपञ्चाशद्भेदा आश्रवरोधकाः सन्तीति ।

कर्माश्रवः संवरश्च नात्मा भिन्नैर्निजाशयैः । करोति न परापेक्षामलंभूष्णुः स्वतः सदा ॥ ४ ॥

कर्माश्रवः च पुनः संवर आत्मा न । आत्मा तु भिन्नैर्निजपरिणामैः परापेक्षां न करोति, स तु स्वभावतोऽजस्रं समर्थोऽस्तीति ।

निमित्तमात्रभूतास्तु हिंसाऽहिंसादयोऽखिलाः । ये परप्राणिपर्याया न ते स्वफलहेतवः ॥ ५ ॥

परजीवहिंसनं हिंसा, तेषां रक्षणं चाहिंसा, इत्यादयो ये परप्राणिपर्यायाः, तद्धिंसाऽहिंसाकरणक्षणे परापेक्षा समायाति, अतस्ते स्वात्मचिद्रूपप्रकटने न हेतवः । आत्मस्वरूपप्रकटीकरणे आत्मैव स्वयं समर्थः, परापेक्षाकरणं अस्य धर्मो न, परं निमित्तमात्रभूतास्ते न निषिद्धा इति ।

व्यवहारविमूढस्तु हेतुस्तानेव मन्यते । वाह्यक्रियारतस्वान्तस्तत्त्वं गूढं न पश्यति ॥ ६ ॥

हेतुत्वं प्रतिपद्यन्ते न वैते नियमस्पृशः । यावन्त आश्रवाः प्रोक्तास्तावन्तो हि परिश्रवाः ॥ ७ ॥

ये निश्चयपक्षिणस्ते शुभाशुभहेतून् कारणत्वेन स्वीकुर्वते न वा, यस्माद्यावन्ति वाधककारणानि तानि साधकभावेन संवरभावेन च परिणमन्ति अन्यथा वेति ।

तस्मादनियतं रूपं वाह्यहेतुषु सर्वथा । नियतो भाववैचित्र्यादात्मैवाश्रवसंवरौ ॥ ८ ॥

शास्त्रगुर्वोश्च विनयं क्रियामावश्यकानि च । संवराङ्गतया प्राहुर्व्यवहारविशारदाः ॥ ९ ॥

प्रशस्तरागयुक्तेषु चारित्रादिगुणेष्वपि । शुभाश्रवत्वमारोप्य फले भेदं वदन्ति ते ॥ १० ॥

अशुद्धनयतश्चैवं संवराश्रवसंकथा । संसारिणां च सिद्धानां न शुद्धनयतो भिदा ॥ ११ ॥

निर्जरा कर्मणां शाटो नात्मासौ कर्मपर्ययः । येन निर्जीयते कर्म स भावलक्षणवस्त्वः ॥ १ ॥

कर्मनिर्जरा तु कर्म पर्यायोऽस्ति ततः सा नात्मा । येन भावेन कर्म निर्जीर्यते स भावतस्त्वात्मैवेति ।

स (त) त्तपो द्वादशविधं शुद्धज्ञानसमन्वितम् ।
आत्मशक्तिसमुत्थानं (मुद्भूतं) चित्तवृत्तिनिरोधकृत् ॥ २ ॥

आत्मशक्तितः समुद्भूतं मनोविगतिरोधकं तत्तप इति ।

यत्र रोधः कषायाणां ब्रह्म ध्यानं जिनस्य च । ज्ञातव्यं तत्तपः शुद्धमवशिष्टं तु लङ्घनम् ॥ ३ ॥

बुभुक्षा देहकार्श्यं वा तपसो नास्ति लक्षणम् । तितिक्षाब्रह्मगुप्त्यादिस्थानं ज्ञानं तु तद्वपुः ॥ ४ ॥

परीषहसहनब्रह्मगुप्तिसमित्यादि स्थलं यस्य तत्, तु पुनर्ज्ञानं तस्य तपसो वपुः शरीरमिति ।

कर्मतापकरं ज्ञानं तपस्तन्नैव वेत्ति यः । प्राप्नोतु स हृतस्वान्तो विपुलां निर्जरां कथम् ॥ ५ ॥

ज्ञानयोगस्तपः शुद्धमित्याहुर्मुनिपुङ्गवाः । तस्मान्निकाचितस्यापि कर्मणो युज्यते क्षयः ॥ ६ ॥

यदिहापूर्वकरणं श्रेणिः शुद्धा च जायते । ध्रुवः स्थितिक्षयस्तत्र स्थितानां प्राच्यकर्मणाम् ॥ ७ ॥

इह सम्यक्त्वप्राप्तिसमयेऽपूर्वकरणं करोति, चापरं (च पुनः) शुद्धा श्रेणिः प्राप्यते तत्रावश्यं प्राक्कर्मणां क्षय इति ।

तस्माज्ज्ञानमयः शुद्धतपस्वी भावनिर्जरा । शुद्धनिश्चयतस्त्वेषा सदाशुद्धस्य काऽपि न ॥ ८ ॥

बन्धः कर्मात्मसंश्लेषो द्रव्यतः स चतुर्विधः । तद्धेत्वध्यवसायात्मा भावतस्तु प्रकीर्तितः ॥ १ ॥

वेष्टयत्यात्मनात्मानं यथा सर्पस्तथाऽसुमान् । तत्तद्भावैः परिणतो बध्नात्यात्मानमात्मना ॥ २ ॥

शङ्खश्वैत्यानुमानेऽपि दोषात् पीतत्वधीर्यथा । शास्त्रज्ञानेऽपि मिथ्याधीसंस्काराद्बन्धधीस्तथा ॥ ३ ॥
श्रुत्वा मत्वा मुहुः स्मृत्वा साक्षादनुभवन्ति ये । तत्त्वं न बन्धधीस्तेषां नात्मा बन्धः (न्धः) प्रकाशते ॥४॥
द्रव्यमोक्षः क्षयः कर्मद्रव्याणां नात्मलक्षणः । भावमोक्षस्तु तद्धेतुरात्मा रत्नत्रयान्वयी ॥ १ ॥
ज्ञानदर्शनचारित्रैरात्मैक्यं लभते यदा । कर्माणि कुपितानीव भवन्त्याशु तदा पृथक् ॥ २ ॥
भावलिङ्गात्ततो मोक्षो भिन्नलिङ्गेष्वपि ध्रुवम् । कदाग्रहं विमुच्यैतद्भावनीयं मनस्विना ॥ ३ ॥
अशुद्धनयतो ह्यात्मा बद्धो मुक्त इति स्थितिः । न शुद्धनयतस्त्वेष बध्यते चापि मुच्यते ॥ ४ ॥
अन्वयव्यतिरेकाभ्यामात्मतत्त्वविनिश्चयम् । नवभ्योऽपि हि तत्त्वेभ्यः कुर्यादेवं विचक्षणः ॥ ५ ॥
गुह्याद्गुह्यतरं तत्त्वमेतत्सूक्ष्मनयाश्रितम् । न देयं स्वल्पबुद्धीनां ते ह्येतस्य विडम्बकाः ॥ ६ ॥
तेऽध्यात्मदूषका इति ।

जनानामल्पबुद्धीनां नैतत्तत्त्वं हितावहम् । निर्बलानां क्षुधार्तानां भोजनं चक्रिणो यथा ॥ ७ ॥
ज्ञानांशदुर्विदग्धानां तत्त्वमेतदनर्थकृत् । अशुद्धमन्त्रपाठस्य फणिरत्नग्रहो यथा ॥ ८ ॥
ज्ञानलवं प्राप्य कुपण्डितानां परमार्थवस्तुतत्त्वाविज्ञानामेतदध्यात्मस्वरूपमनर्थकरं स्यात् कुमन्त्रविदः फणिमणिग्रहणमिवेति । अपि च हे भावुक ! सर्वे नया एकान्तेन स्वपक्षं लक्ष्यीकृत्य स्याद्वादं दूषयन्ति, परं जिनेन्द्रवाक्यं तु समस्तनयैर्गुम्फितं । यतः—
बौद्धानामृजुसूत्रतो मतमभूद्वेदान्तिनां सङ्ग्रहात्, साङ्ख्यानां तत एव नैगमनयाद्योगश्च वैशेषिकः ।

शब्दब्रह्मविदोऽपि शब्दनयतः सर्वैर्नयैर्गुम्फिता, जैनी दृष्टिरितीह भारतरता प्रत्यक्षमुद्वीक्ष्यते ॥ १ ॥
इत्यादि गुरुमुखपङ्कजत आप्तवाक्यं निःशङ्कं प्रतिपद्य जैनधर्मे स्थिररागो जातः कुमारनृपः ।

तत्त्वाच्च भिन्नं निजतत्त्वलीनं, रहस्यमध्यात्मगुरुप्रयुक्तम् ।
संकल्पजालैः प्रगतं चिदाढ्यं, श्रुत्वा स्थिरोऽभूत्परमार्हतः सः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंश-
स्तम्भे पञ्चसप्तत्यधिकद्विशततमं २७५ व्याख्यानम् ॥

## षट्सप्तत्यधिकद्विशततमं २७६ व्याख्यानम् ॥

अथ वात्सल्यं दर्शनस्य सप्तमाचारमाह—

जिनैः समानधर्माणः साधर्मिका उदाहृताः । द्विधाऽपि तेषां वात्सल्यं कार्यं तदिति सप्तमः ॥ १ ॥
समानधार्मिकान् वीक्ष्य वात्सल्यं स्नेहनिर्भरम् । मात्रादिस्वजनादिभ्योऽप्यधिकं क्रियते मुदा ॥ २ ॥

स्पष्टौ । अत्रार्थ इयं भावना—साधर्मिकवात्सल्यं कार्यं । तत्र समानधर्माणः साधर्मिकाः, ते च प्रवचनलिङ्गाभ्यां साधुसाध्व्यः, प्रवचनेन तु श्रावकश्राविका अपि । तेषु साधुसाध्वीनां विशिष्य चाचार्यग्लानप्राघूर्णकतपस्विबालवृद्धशैक्ष्यादीनां पुष्टालम्बनाद्यपेक्षया श्राद्धादीनामपि सर्वशक्त्या वात्सल्यं वत्सलत्वं द्विधाऽपि द्रव्यभावाभ्यां तत्तदुपकारकरणादिना कार्यं । श्राद्धेन च श्रावकश्राविकाणामपि यथार्हं कुमारनरेन्द्रवत्कार्यं । तथाहि—श्रीपत्तने श्रीपरमार्हतेन अष्टादशशतव्यवहारिका

द्रव्याढ्याः स्वनिष्पाद्यमानस्नात्रपूजापौषधकार्येषु सहायिनः सुखीकृताः । प्रतिवर्षं द्विसप्ततिलक्षमितः श्राद्धकरो मुक्तः । भग्नसाधर्मिकस्य गृहागतस्य सहस्रदीनारदानं । एकस्मिन् वर्षे कोटिर्लग्ना । एवं चतुर्दशवर्षाणि यावत्कृतं । एकदा तद्राज्ये माहेश्वरश्राद्धेनैकेन दानचौर्यं कृतं तद्द्रव्यग्राहकेण माणवीकेशेन ज्ञातं । ततो रज्ज्वादिभिर्बद्ध्वा ताड्यमानः स नृपाग्रे नीतः । सोऽपि लब्धलक्ष्यो जीवनोपायोऽन्यो नास्तीति मत्वा जिनार्चासमये श्रावका उदरोरःकण्ठभालस्थले यादृशानि चत्वारि तिलकानि कुर्वन्ति तादृशानि चन्दनघुसृणस्य विहितानि । ततो नृपचरैः प्रोक्तं—"हे पृथ्वीनाथ ! अनेन भवदाज्ञोल्लङ्घिता, को दण्डोऽस्य क्रियते ?" । तदा वेपमानस्य तस्याभिमुखं नृपेण वीक्षितं । भालस्थले तिलकं दृष्ट्वा नृपतिर्दध्यौ—"नूनमयं श्राद्धः परमात्मभक्तिकारकः श्राद्धसंबन्धी करस्तु मया प्रत्याख्यातोऽस्ति, अतोऽयं निरागा" इति ध्यात्वा बन्धनान्मोचितः । ततो नृपचरैः प्रोक्तं—"स्वामिन् ! नायं श्राद्धः, अयं त्वद्भक्त्यादिभक्तो माहेश्वरमार्गरक्तश्छद्मना श्राद्धलिङ्गमुत्तरासनकं भाले तिलकं च कृत्वा समेतोऽस्ति । तदा नृपः प्राह—"अतज्योऽयं धन्यः पुण्यवान्, कुतः? अस्य भाले तिलकाङ्कितं वीक्ष्य मम मनस्ययं परमेश्वरभक्तिकृदस्तीति आगतं, अतो मुक्तः सुखेन गच्छतु स्वस्थले" । ततः सोऽपि श्राद्धवेषं स्तुवन् जैननृपमभिवन्द्य स्वगृह आगात् ।

साधर्मिकस्वरूपं यद्व्यलीकमपि भूभृता । संमानितं सभायां तत्तर्हि सत्यस्य का कथा ॥ १ ॥

इति ज्ञातं श्रुत्वाऽवश्यं साधर्मिकवात्सल्ये सर्वशक्त्या यतनीयं । प्रागुदायिनृपेण स्वदासीपतिरित्य-

धरावद्यङ्कितत्तालस्थलश्चण्डप्रद्योतश्चारकगृहे निधापितः । पश्चात्सेवकमुखात्साधर्मिकं विज्ञाय तद्गुणं बहु मानितः । साधर्मिकस्तु इत एव कारणात्स्वजनादिभ्योऽप्यतिसंमान्यः, यतः—

सुहिसयणमाइआणं उवरयणं भवपबंधवुड्ढिकरं । जिनधम्मपवन्नाणं तं चिय भवभङ्गमुवणेइ ॥ १ ॥

इह साधोः साधर्मिकवात्सल्ये श्रीवज्रस्वामी भीष्मदुर्भिक्षेण मार्गेषु व्युच्छिन्नेषु पटविद्यया सुभिक्ष-पुर्यां सङ्घस्य प्रापको ज्ञातं । अथवा विष्णुकुमारादयो दृष्टान्ताः स्वयमभ्यूह्याः । तथा च काचित्पति-व्रता श्राविकाऽपि लोकोत्तरवात्सल्यं स्वपतौ तनोति, तथाहि—पृथ्वीपुरवास्येकः सुभद्रो वणिग्द्वादश-व्रतधरो वाणिज्यार्थं राजपुरे गतः । तत्रैको जिनदासनामा श्राद्धः स्वसुतां साधर्मिकं विनाऽन्यस्य न ददातीतिनियमभृदासीत् । अन्यदा तं सुभद्रं भोजनशयनासनजल्पनचङ्क्रमणवार्ताकरणादिचेष्टाभिः सुसाधर्मिकं मत्वा तस्य स्वपुत्री परिणायिता महोत्सवेन । साऽपि सुशीला गृहकार्यं कुर्वन्त्यप्यन्तर्नि-र्मला प्रभुमार्गज्ञा नित्यं स्वपतिमुपासते । एकदा तत्पतिनाऽतीव रूपवती कृतोद्भटशृङ्गारा निजपत्न्या एव सखी दृष्टा, गाढमभ्युपपन्नश्च तस्यां, परं लज्जादिना किमपि वक्तुं न शक्नोति, तत्प्राप्तिचिन्तया च प्रतिदिनमतीव दुर्बलीभवन्निर्बन्धेन पृष्टः कारणं स्वभार्यया । कथितं च कथमपि तेन । तया चाती-वदक्षतया प्रतिबोधपक्षमन्यमपश्यन्त्या प्रोक्तं—"एतावन्मात्रेऽप्यर्थे किं खिद्यते ? प्रथममेव मे तत्किं न कथितं ? स्वाधीना हि मम सा, आनयामि सत्वरमेवेति" । ततोऽन्यदिने भर्ता भणितः—"अभ्युपगतं सहर्षतया तया युष्मत्समीहितं, प्रदोषे चागमिष्यति, परं लज्जालुतया वासभुवनप्रविष्टमात्राऽपि प्रदीपं

विध्यापयिष्यति" । तेनोक्तं—"एवं भवतु, किमित्थं विनश्यति ?" । ततः सा दध्यौ—नूनं विषयमहाप्रेताविष्टो जीवो दीनत्वं जृम्भात्वं निःश्वासमोचनं तद्गतचित्ताध्यवसानादि चापद्यं च किं किं न विधत्ते ? अहो ! अनन्तसौख्यदव्रतमपि उपेक्षते, यदीदृशः सुज्ञोऽपि सुशीलोऽपि विषयपरवशो जातः । धिग्धिग्विषयदशां पराशां चेति । परं चासौ गृहीतव्रतभङ्गतः श्वभ्रादिदुःखं प्राप्स्यति । अतोऽहमेव तत्स्वरूपं विधाय तदीप्सितं पूरयामि । भावतस्तु तस्य व्रतखण्डनं भावि, परं द्रव्यतस्तु न । एवमेकपक्षपालनमपि कदाचित्ससूकानां गुणाय जायते" । इत्याद्यग्रे विविधलाभं विचार्य वयस्यायाः सकाशात् किञ्चिन्निमित्तमुद्भाव्य याचितानि तया तदीयानि स्वभर्तृदृष्टपूर्वाणि प्रधानवस्त्राभरणानि । ततो गुटिकाप्रयोगतो विहितसखीसदृशस्वरादिस्वरूपा तथैव कृतशृङ्गारा तत्सदृशललितेन विलासैश्चान्विता तस्यैव श्राद्धस्य भार्यया रचितवरकुसुमताम्बूलश्रीखण्डागुरुकर्पूरकस्तूरिकादिसमस्तभोगाङ्गे विहितामलप्रदीपालोके रमणीये वासभुवने सविलासमन्वविशत् । ततो दृष्टा सोत्कण्ठविस्फारितदृशा त्रिदशकल्लोलिनीपुलिनप्रतिस्पर्धिपल्यङ्कोपविष्टेन झटित्येव नयनमनसोरमृतवृष्टिमिव दधाना तेनैषा । तया च दृष्टमात्रया विध्यापितो दीपः । क्रीडितं च विविधगोष्ठीप्रबन्धपूर्वकं तया सह निर्भरं तेन । गतायां च तस्यां प्रत्यूषसमये चिन्तितमनेन, यतः—

सयलसुरासुरपणमियचलणेहिं जिणेहिं जं हियं भणियं । तं परभवसंबलयं अहह मए हारियं सीलं ॥१॥
मनस्यन्यद्वचस्यन्यत् क्रियायामन्यदेव च । यस्यास्तामपि लोलाक्षीं साध्वीं वेत्ति ममत्ववान् ॥ १ ॥

चर्माच्छादितमांसास्थिविण्मूत्रपिठरीष्वपि । वनितासु प्रियत्वं यत्तन्ममत्वविजृम्भितम् ॥ २ ॥

विण्मूत्रहंडिकेति ।

गणयन्ति जनुः समर्थव—त्सुरतोल्लाससुखेन जोगिनः ।
मदनाहिविषोग्रमूर्छना—ऽऽमयतुल्यं तु तदेव योगिनः ॥ १ ॥

समर्थवत् विषयिजना विषयं संप्राप्य जन्मसाफल्यं जानन्ति । योगिनस्तु स्मरसर्पस्य विषमूर्छा-रोगतुल्यं विदन्तीति । पदार्थे प्रियाप्रियत्वं स्वमनःकल्पितं, निश्चयेनेष्टं वाऽनिष्टं वा न किञ्चिद्विद्यते, समस्तविकल्पोपरमे न मतिभेदश्च, यतः—

समतापरिपाके स्याद्विषयाग्रहशून्यता । यया विशदयोगानां वासीचन्दनतुल्यता ॥ १ ॥

इत्यादिसंवेगवशादुत्पन्नपश्चात्तापो महानलतप्यमानान्तःकरणः प्रतिदिनं स्वभार्यां वीक्ष्य न्यग्मुखं विलोकयति । तदा भार्या दध्यौ—“अद्यापि लज्जां न जहात्ययमतः शीघ्रं धर्मं प्रापिता, सर्वथा निर्लज्जो वाचाटस्त्वयोग्यः, नायं तथाविधोऽस्ति” । ततो भार्या प्रत्यहं पुनः पुनः सामायिकस्वाध्याय-पठनपाठनादिषु सर्वत्र व्रतग्रहणखण्डनफलं स्तौति । व्रतग्रहणं सुकरं, परं पालनं तु दुष्करं । अत्रार्थे चतुर्भङ्गी विधेया । इत्यादि श्रुत्वा स्त्रीस्वभावं स्तुत्वा चाजस्रं तद्दुःखं स्वात्कुरुते । तेनाधिकतरं दुर्बलो भवत्यसौ । ततो निर्बन्धेन भार्यया पृष्टो निःश्वस्य सखेदं ब्रवीति स—“हे प्रिये! यतश्चिरकालानुपा-लितशिवसौख्यहेतुव्रतखण्डनेनामुना कृतं मया क्षणकालस्थितिकं स्वकल्पितसौख्यार्थं तदकार्यं यद्वा-

लिशानामप्यविधेयं, ततः कृशीजवाम्यहमनया चिन्तया । अथ ज्रष्टस्य मम को व्रतप्रायश्चित्तं दास्यति । मङ्गावनाव्यतिकरस्तु कुम्जकृद्धृहदत्तमिथ्याडुष्कृतक्षुल्लकवदजूत्, जीवान् हत्वा च मयाऽहो डुष्ठु कृतं इति, ध्यानं वैराग्यकरणं च व्यर्थं वन्ध्यं च" इत्यादि स्वजावशुद्धेन विलपन्तं तं मत्वा, न पुनर्बाह्यनीत्या स्त्रीमुखदाक्षिण्यरक्षणार्थं सम्पूर्णपरीक्षाप्राप्तं संवेगवशीजूतमिन्द्राप्सरोजिरप्यपराजवनीयं तच्चेतो विज्ञाय ततो जार्यया कथितः सङ्गावः, साजिज्ञानकथनादिजिश्च समुत्पादिता प्रतीतिस्तस्य । ततः स्वस्थीजूतो दध्यौ—"अहो! धन्येयं जार्या लोकोत्तरधर्मकुशला । मम स्वामी परदारसङ्गान्मा पततु श्वज्रोदधौ इति जयेन सुशीलेयमान्तरीयचिन्तान्विता मिलिता । अस्याः स्थैर्यं गाम्जीर्यं च न वाग्गोचरं" । इत्यादि संस्तूय गुरुपार्श्वं एत्य च क्रमेण जार्याज्ञया स्वपरदारागमनं सर्वथा निषिध्य च तत्पापमालोच्य प्रतिक्रम्य च स्वपुत्रे गृहकार्यं निवेश्य संयमतपोजिस्तौ दम्पती अचिरेण यत्कार्ये कृतोद्यमौ तत्कार्यं संपूर्णं चक्रतुरिति ॥

वात्सल्यजेदा बहुधा जवन्ति हि, लाजं समीक्ष्यैव सुधीः प्रवर्तते ।
साधर्मिकोऽर्च्यश्च समग्रशक्तिजि—र्मान्योऽन्वहं दर्शनसप्तशीलकैः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंशस्तम्जे षट्सप्तत्यधिकद्विशततमं २७६ व्याख्यानम् ॥

## सप्तसप्तत्यधिकद्विशततमं २७७ व्याख्यानम् ॥

अथाष्टमदर्शनाचारमाह—

अष्टौ प्रोक्ता निशीथादौ शासनस्य प्रभावकाः । मार्गानुसारिण्या शक्त्या त एवोद्भासयन्ति तत् ॥१॥

स्पष्टः । नवरं सूत्रोक्तप्रभावका निशीथसूत्रगाथया दर्श्यन्ते—

अइसेसिड्ढि १ धम्मकही २ वाइ ३ आयरिय ४ खवग ५ नेमित्ती ६ ।
विज्जा ७ रायगणसम्मओ अ ८ तित्थं पभाविंति ॥ १ ॥

व्याख्या—अतिशेषिता अपरेभ्यः परमोत्कर्षं नीता ऋद्धयस्तेजोलेश्यादिलब्धयो येन सोऽतिशेषितर्द्धिः । अत्रार्थे कुब्जिकश्रेष्ठिशिक्षाकृन्मुनिपतिज्ञातं भविष्यत्सुमङ्गलमुनिज्ञातं वा पञ्चदशशतके गदितं इत्यादि स्वयमभ्यूह्यं १ । धर्मकथी—व्याख्यानलब्धिमान्, वेश्यागृहस्थितोऽपि श्रीनन्दिषेणः प्रत्यहं दशदशजनप्रतिबोधदो द्वादशवर्षैस्त्रिचत्वारिंशत्सहस्रद्विशतनटविटनरा वेश्यागृहे मदनातुराः समेतास्तान् धर्मकथाभिः प्रतिबोध्य श्रीवीरपार्श्वे दीक्षार्थं मुमोच, "अहं कर्मवशेन पतितोऽस्मि परमन्येषां प्रत्यहं दिग् ( १० ) नृणां समुद्धारमकृत्वाऽशनं नो विधेयं" इत्यभिग्रहं संपूर्णमपालयत् । तेषु नृष्वपि मध्ये कोऽपि तस्य प्रत्यक्षदोषग्राहको नाभूत्, प्रत्युत त एवं चिन्तयन्ति स्म—"अहो अयं धर्मकथी महत्तरः, यो मोहज्वालायां पतितोऽपि स्वगुणं भस्मतां न नयति, कज्जलकुटीरके वसन्नपि नात्मस्वभावं कज्जल-

वर्णं तनोति, धन्योऽस्यात्मा केनचित्कारणेनात्र पतितोऽपि, ध्रुवमचिरेण निस्सरिष्यति, सुष्ठु अस्मदीयज्ञाननेत्राण्युन्मीलितान्यनेन, अस्मिन्मोहसमुद्रे मज्जितोऽपि न मज्जितप्रायः । ईदृशः कोऽपि नास्ति, योऽस्योपमानेनोपमीयते । अथवा नूनमस्मादृशां पापरतानां तारणार्थं अत्र वेश्यागृहे प्रवहणीभूय स्थितोऽस्ति, नान्यः कल्पितः कोऽपि हेतुर्दृश्यते" । इत्यादिनानावदातैरतिशयधर्मकथिकं तं स्तुवन्ति स्मेति २ । वादी—परवादिजेता, अत्रार्थे वृद्धवादिमल्लवादिवादिदेवसूरिसिद्धसेनार्कवादिवेतालश्रीशान्तिसूरिप्रभृतयोऽवदाताः प्रभावकचरित्रतो ज्ञेयाः ३ । आचार्यः—गच्छस्तम्भः षण्णवत्यधिकद्वादशशतगुणालङ्कृतः । अत्रार्थे प्रभवस्वामिशय्यंभवादयोऽवदाता विज्ञेयाः ४ । क्षपकः—प्रकृष्टतपस्वी । अत्रार्थे [1]षष्टिवर्षशतषष्ठकृद्विष्णुकुमारषण्मासीतपःकृड्ढणकुमारषष्टिवर्षसहस्राचाम्लकृत्सुन्दरीवर्षकायोत्सर्गस्थबाहुबलिविषमाभिग्रहग्राहिबहुमुनिएकादशलक्षाशीतिसहस्रपञ्चशतमासक्षपणकारकनन्दनसाधुषोडशवर्षाचाम्लकारिश्रीजगच्चन्द्रसूरिगुणरत्नसंवत्सरतपःकारिस्कन्दकर्षिप्रमुखा अवदातास्तपश्चरित्रतो ज्ञेयाः ५ । नैमित्तिकस्त्रिकालज्ञानवेत्ता । अत्रार्थे वराहमिहराधःकरणार्थं प्ररूपितनिमित्तभद्रबाहुस्वामिचरित्रं ज्ञेयं, यद्वा दत्तमातुलकालिकाचार्याख्यानं चेत्याद्यवदाता अत्र वाच्याः इति ६ । विद्यावान् सिद्धविद्यामन्त्रयन्त्रबुद्धिसिद्धचूर्णाञ्जनयोगौषधपादलेपादिसमन्वितः । तत्र मन्त्रविद्यावन्तो महिषवधप्रिया कण्टकेश्वरी देवी यैर्वशीकृता ते श्रीहेमचन्द्रसूरयः । यद्वा श्रीपालनृपं प्रति श्रीसिद्धचक्रयन्त्र-

[1] षष्टिवर्षशतं तपः तप्तवान् विष्णुकुमारः, इति त्रिषष्टिशलाकापुरुषचरित्रे ।

दायकगुरवश्च । अथवा क्वापि पुरे सुरूपा साध्वी राज्ञा धृता, सङ्घेन बहूक्तेऽपि न मुक्ता । ततो मन्त्रसिद्धेन नृपाङ्गणे स्तम्भा अभिमन्त्र्य खे नीताः खटखटन्ति, प्रासादस्तम्भा अपि कम्पिताः । ततो भीतेन राज्ञा सा मुक्ता । अथवा पाक्षिकसूत्रतुर्यालापके रागेण वा दोसेण (द्वेषेण) वा मैथुनं न सेव्यं । अत्र शिष्यप्रश्नः—"स्वामिन्! रागयुक्ता एव सर्वे विषयाननुभवन्ति, न तु द्वेषेण, अत्र दोसेणेतिपदं कथं न्यस्तं?" । गुरुराह—तद्वृत्तौ वक्ष्यमाणसंबन्धोऽस्ति, तथाहि—एकत्र पुर एका तपोधनी परिव्राजिकाऽनेकचमत्कारधराऽऽसीत् । तया राजादयः स्वायत्तीकृताः, ते सर्वे जैनसाधूनजस्रं निन्दन्ति । एकदा नृपः स्वराज्ञीं प्रति तस्याः शीलादिस्वरूपं पुनः पुनः स्तौति स्म । राज्ञी जैनसाधुगुणरता न किमपि राज्ञोक्तं श्रद्दधाति । एकदा नृपपत्न्या पुरोद्यानसमागता गुरव इति चोदिताः—"हे पूज्य । एतन्नृपसहितसमस्तपुरजनास्तापस्या स्वशीलादिगुणैर्वशीकृताः सन्तः प्रत्यहं जैनसाधुनिन्दां तन्वन्ति ! नगरमध्ये समागतजैनमुनीनामाहारादिकमपि न ददति । मिथ्यात्वव्याप्तं पुरं जातं । यूयं यद्युद्धरथ तदा वरं" । इति श्रुत्वैको मन्त्रादिविद्यासिद्धः संजातकोपः साधुस्तापसीशीलभञ्जनार्थं तामाकर्षणविद्ययाऽऽकर्षयत् । साऽपि साधुं विजने स्थितं वीक्ष्य महास्मरविह्वला वेपमानाङ्गा "मत्स्मरज्वरभेषजं कुरु" इतिदीनवादिनी सा स्वयमालिलिङ्ग तं । मुनिरपि तन्महत्त्वच्छेदनार्थं जैननिन्दकां तां द्वेषेणासेवत । ततः सा नंष्ट्वा गता । क्रमेण जलोदरसमा गर्भवती जाता । जनतायां पूर्वं यादृग्गुणस्तुतिस्तादृग्दोषस्तुतिः प्रससार । राजपत्नी च नृपं स्माह—"प्राणेश! पश्य तत्र परिव्राजिकाया ब्रह्मचर्यं ।

पापं दम्भौघं च प्रकटं जातं । शीलसन्नाहधारणे जैनमुनय एव क्षमाः, नान्ये," । इति श्रुत्वा नृपः प्राह—"मा त्वरिष्ठाः, अग्रे तेषामपि स्वरूपं दर्शयिष्ये" । ततो भूपः स्वसेवकमशिक्षयत्—"त्वमेकां सुरूपां लावण्यादिगुणान्वितां सूर्यकान्तिनाम्नीं वारवधूमादायोपवने कामदेवकुलचैत्ये रात्रौ व्रज । तत्र चैत्ये केनापि धर्ममिषेणामुकमुनिं प्रलोभ्य संस्थाप्य त्वया बहिर्निःसृत्य द्वारे पिधाय तालकं दृढं देयं । अनेकचुवाचन्दनतल्पतूलिकादिभोगसामग्री मध्ये विरचनीया" । ततस्तेन तथा कृतं । मुनिर्निर्दम्भस्तत्राविशत् । निर्गमनमार्गमदृष्ट्वा मुनिर्दध्यौ—"अहो ! अनाभोगेन मोहजालेऽहं पतितः । अस्या हावभावादिभ्यो न तिलतुषमात्रं मे भयं । परं प्रभातेऽपभ्राजना शासनस्य भाविनीति खाट्-करोति" । ततो वेश्ययाऽनेकधा स विडम्बितोऽपि स्वधैर्यं नामुचत् । दध्यौ च—"प्राग्मया द्वेषेण कारणे उत्पन्ने इदमयोग्यमाचरितं, अधुना रागेण क्रियते तदा महाव्रतगुणहानिः स्यात्, अतो नाहं मम यावज्जीवपर्यन्तदेवगुरुसाक्षिस्वीकृतपञ्चमहाव्रतभञ्जनं, पालनं च सुयोग्यं" । इति ध्यात्वा स स्वसाधुवेषं रजोहरणादिकं दीपाग्निना भस्मीचकार, भावलिङ्गमध्यात्मामृतेन सम्यग्बभारेति । अग्रे लाभं दृष्ट्वा तद्रक्षां स्वाङ्गेऽलेपयत् । अवधूतवेषेण कूर्मवत्स्वेन्द्रियाणि संगोप्य समग्ररात्रौ स्वध्यानतत्परः स्थितः । वेश्या तु स्वपराक्रमं समस्तं प्रदर्श्य श्रान्ताऽन्योपायमलभमाना निद्रां चकार । अथ प्रभाते स्वपक्ष्याद्यनेकजनपरिवृतो भूपस्तत्र समागात् । सेवकेन तत्तालोद्घाटनं कृतं, मध्यतः "अलक्ष्यनिरञ्जनजगन्नाथाय नमः" इतिशब्दं महता स्वरेण कुर्वन्नग्नयोगधारी अविकारी सोऽवधूतो भस्मच्छन्नसर्वगात्रोऽलम-

स्तसमो निःसृतः । तं वीक्ष्य सर्वे चमत्कृताः । तदा पत्नी नृपं प्राह—"स्वामिन्! युष्मदुक्तं व्यलीकं जातं, अयं तु कश्चिद्योगी निःसृतः, न जैनसाधुरूपवान्" । ततो नृपः स्वोपजीविनं पप्रच्छ—"त्वया किमेतद्विपर्ययः कृतः?" । स आह—"स्वामिन्! मया तु युष्मदाज्ञानुसारेणैव सर्वं विहितं, तदनु संजातस्वरूपं नाहं वेद्मि" । पुनः क्ष्मापो वेश्यां स्माह—"कथय रात्रिवृत्तं" । "स्वामिन्! किं वच्मि? अहं भोगाय सर्वं सामर्थ्यं विस्तार्य श्रान्ता, अनेन तु महायोगशक्तिरप्सरोभिरप्यस्खलनीया दर्शिता, त्रिभुवन एतादृशो महामुनिर्नास्ति" । इत्यादि सर्वं ज्ञातं निशम्य प्रबुद्धः स्वचित्तं वित्तं पुरजनांश्च जैनधर्ममयाँश्चकार । शासनसाधोर्ज्ञानध्याननिरीहतात्यागादिगुणा नगरे न मान्ति स्म । स साधुः स्वविद्यया शासनोन्नासनां विधाय पुनः स्वीकृतद्रव्यवेषोऽल्पकालेन स्वात्मधर्मं प्रकटीचकारेति विद्यासिद्धः । बुद्धिसिद्धा अभयकुमाराद्याः । योगः स्वर्णसिद्ध्यादिकः श्रीकालिकाचार्यादिवत् । इत्यादयोऽवदाता विद्यासिद्धौ विज्ञेयाः इति ७ । राजगणसंमतो नरेन्द्रप्रमुखजनाभीष्टः ८ । एते तीर्थं जैनपदं उद्योतयन्तीत्यर्थः । एतेषां प्रभावकाणामभावे जिनमतोत्सर्पणाऽधिकतरा न जायते, अत इमे शासनरूपप्रासादे स्तम्भसमा निर्धार्या इति ॥

श्रीतीर्थकार्येषु समग्रशक्तिः, प्रभावकैः शासनमेढिभूतैः ।
उन्ना विधेया न च भक्तियुक्तैः, सद्दर्शनाचारविचारविज्ञैः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंशस्तम्भे सप्तसप्तत्यधिकद्विशततमं २७७ व्याख्यानम् ॥

## अष्टसप्तत्यधिकद्विशततमं २७८ व्याख्यानम् ॥

अथाष्टौ चारित्राचारानाह—

याश्च चारित्रपुत्रस्य मातरोऽष्टौ प्रकीर्तिताः । ता एव चरणाचाराः समुपास्या मुमुक्षुभिः ॥ १ ॥

स्पष्टः । नवरं चरणस्याचरणं चारित्राचारः, स च पञ्चविधसमितित्रिविधगुप्तिभेदैरष्टभेदः । यदाहुः—

पणिहाणजोगजुत्तो पंचहिं समिइहिं तिहिं गुत्तीहिं । एस चरित्तायारो अठविहो होइ नायबो ॥ १ ॥

अथ तत्पञ्चविधसमितिरूपचारित्राचारस्याद्यभेदवर्णनमाह—

युगमात्रावलोकिन्या दृष्ट्या सूर्यांशुभासिते । पथि यत्नेन गन्तव्यमितीर्यासमितिर्भवेत् ॥ १ ॥

स्पष्टः । नवरं मार्गे यतनापूर्वकं गमनं कार्यं । अत्रार्थ इयं भावना—इह च मुख्यवृत्त्या साधुना निरवद्यस्थानस्थितेन स्वाध्यायादिधर्मकृत्यं कार्यं । ननु तर्हि साधूनां नित्यं नवकल्पविहारकरणादि किमिति भगवद्भिरुपदिष्टं? उच्यते—तदपि बहुगुणहेतुत्वेन धर्मवृद्ध्यर्थमेव । रात्रौ ह्यचक्षुर्विषयत्वेन पुष्टतरालम्बनं विना नानुज्ञातमिति । दिवसे षड्जीवनिकायविराधनावर्जनार्थं लोकैरतिक्षुण्णे मार्गे न तून्मार्गे, मार्गेऽपि पादादारभ्य चतुर्हस्तप्रमाणयुगमात्रक्षेत्रं यावद्विलोक्य भूदकहरितबीजादिस्थावर-

कुन्थुपिपीलिकादित्रसजन्तुरक्षार्थं पदे पदे सम्यग्निरीक्षमाणस्य ईरणमीर्या गतिस्तस्यां समितिरीर्यासमितिः, सम्यग्जिनवचनानुसारितया इतिः आत्मनश्चेष्टाप्रवृत्तिरूपेति । वक्ष्यमाणा गुप्तयस्तु प्रवृत्तिनिवृत्तिरूप इति कथञ्चिद्भेद इति । आलम्बनेन कालेन मार्गेण यतनया च एभिश्चतुर्भिः कारणैः संयत ईर्यां—गतिं कुर्यात् । तत्रालम्बनं ज्ञानादि, तत्र ज्ञानं सूत्रार्थोभयरूप आगमः, दर्शनं चरणं च । प्रत्येकं ज्ञानादीन्याश्रित्य द्विकादिसंयोगेन वा गमनमनुज्ञातं । ज्ञानाद्यालम्बनं विना तन्नेति १ । कालश्च प्रस्तावादीर्याविषयो दिवस उक्तो जिनैः २ । मार्ग इहोत्पथवर्जित उक्तः ३ । यतना च द्रव्यादिभेदैश्चतुर्धा, द्रव्यतो द्रव्यमाश्रित्येयं यतना यच्चक्षुषा प्रेक्षते जीवादिद्रव्यं, युगमात्रं च प्रस्तावात्क्षेत्रं प्रेक्षते इति क्षेत्रतो यतना, कालतो यतना यावन्तं कालं गच्छेत्तावत्कालमानेति, भावत उपयोगपूर्वं गच्छेत्. इन्द्रियार्थान् शब्दादीन् विवर्ज्य स्वाध्यायं च पञ्चविधं वर्ज्यं, तस्यापि गत्युपयोगघातित्वात्, तत्रान्यव्यापार एव नार्हः, पार्श्वयोः पृष्ठतश्चोपयोगं ददानस्यातिदूरविलोकने सतामपि जन्तूनामदर्शनं, अत्यासन्नविलोकने सम्मुखागच्छत्पशुशकटाद्यास्फालनादिसंभवः, अत उपयोगपूर्वं गमनं योग्यं ४ । एवंविधेर्यासमित्या गच्छतश्च मुनेः कथञ्चित्प्राणिवधेऽपि तत्पापं न भवति । न केवलं चङ्क्रमत एवेर्यासमितिः, किं तु स्थितस्यापि भङ्गबहुलादिश्रुतेषु परावर्तमानेषु भङ्गकादिरचनायां या हस्तादीनां चेष्टा साऽपि परिस्पन्दरूपत्वादीर्यासमितिः । इयं समितिर्वरदत्तर्षिवत्पाल्या, तथाहि—कुत्रापि गच्छे वरदत्तर्षिरीर्यासमितिरतः । शक्रोऽस्य प्रशंसां चकार । मिथ्यात्विसुर एकोऽश्रद्दधानः सुरेन्द्रं प्रोचे—"जीवितव्यार्थं जीवन् स कथं

समितिरतो नविता? अहं समितिन्रष्टं करिष्ये" इति प्रोच्यागतो नुवि । देवेन मक्षिकादेहप्रमाणमण्डू-
कीपुञ्जे विकृते साधुः पथि निरन्तरं मण्डूकीदर्शनादीर्यापरो बनूव । इतश्च देवमायया गजोपद्रवं तुमुलं
सर्वत्र प्रचक्रे । साधुर्न नयविह्वलोऽनूत्, नापि द्रुतगतिः उत्प्लुत्य गमनं चातनोत् । तदा सुरनरैरि-
त्युक्तं—"हे ऋषे! गजाच्छीघ्रं दूरं वेगेन गच्छ" । साधुस्तु स्वनावस्थोऽनूत् । ततो गजेन गृहीतः खे
प्रोच्छालितः पतन् नुवि क्षमाश्रमणः स्वान्तेऽचिन्तयत्—"हा हा अप्रमार्जितनूमौ मण्डूकीसंकुलायां
मम देहेन वधो नावी" । ततो देवः स्वशक्तिं सर्वां प्रदर्श्य स्वयमेव श्रान्तो ज्ञानेन शक्रवाक्येन च तन्ना-
वनिश्चयं ज्ञात्वा प्रकटीनूय स्वापराधमक्षामयत् । सर्वस्वरूपं यथाजातमुक्त्वा सम्यक्त्वरत्नं प्राप्य स्वर्गतः ॥

पाल्योऽसौ प्रथमाचारो वरदत्तानूचानवत् । तल्लीलां वीक्ष्य देवोऽनून्मिथ्यारिक्तः सुदृष्टिनृत् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंश-
स्तम्नेऽष्टसप्तत्यधिकद्विशततमं २७८ व्याख्यानम् ॥

## नवसप्तत्यधिकद्विशततमं २७९ व्याख्यानम् ॥

अथ द्वितीयाचारनाषासमितिस्वरूपमाह—

हितं यत्सर्वजीवानां त्यक्तदोषं मितं वचः । तद्धर्महेतोर्वक्तव्यं नाषासमितिरित्यसौ ॥ १ ॥

स्पष्टः । नवरं त्यक्ताः क्रोधाद्यष्टदोषा यत्र तत्त्यक्तदोषं, तथाहि उत्तराध्ययने २४—

कोहे माणे अ माया य लोभे अ उवउत्तया । हासे भए मोहरीए विगहासु तहेव य ॥ १ ॥
एआइं अठ ठाणाइं परिवज्जित्तु संजओ । असावज्जं मिअं काले भासं भासिज्ज पन्नवं ॥ २ ॥

तत्र क्रोधे यथा कश्चिदतिकुपितः पिता प्राह—न त्वं मम सुतः पार्श्ववर्तिनो वा तं प्रति प्राह बध्नीत बध्नीतैनमित्यादि, अत्रार्थेऽमरदत्तमित्रानन्दादिसंबन्धाः १ । माने यथा कश्चिदभिमानयुक्तो मरीचिवन्न कश्चिन्मम जात्यादिभिस्तुल्य इति वक्ति २ । मायायां यथा परवञ्चनार्थं वक्ति मल्लिनाथप्राग्भववच्चण्ड-प्रद्योतप्रेषितवेश्यावदभयकुमारानयनार्थं वेति ३ । लोभे यथा परकीयमपि भाण्डादिकमात्मीयमभि-धत्ते, अत्रार्थे धर्मबुद्धिपापबुद्धिप्रमुखसंबन्धाः ४ । हासे यथा यदि महाविदेहे विहरमानजिनाः सन्ति तर्हि भरतक्षेत्र उपकारकृते कथं न समागच्छन्ति ? क्षणमत्र स्थित्वा जनमनःसंदेहानपनीय पश्चाद्व्रजन्ति तदा श्रेयस्तरं ५ । भये यथा तथाविधमकार्यं कृत्वा केनचित्पृष्टः प्राह—नाहं, कोऽप्यन्योऽस्ति इति ६। मौखर्ये यथा मुखरतया यत्किञ्चित्परपरिवादादिकं वक्ति रभसा, वक्ष्यमाणसंबन्धरज्जार्यावद्यथा तथा वदति ७ । विकथासु स्त्र्यादिकथायां अहो ! अस्याः कटाक्षविक्षेपा लावण्यं चेत्यादिकं भुवनभानुकेव-लिजीवरोहिणीस्त्रीवद्वा जल्पतीति ८ ।

अत्र रज्जासाध्वीज्ञातं चेदं संप्रदायादागतं श्रीमहानिशीथसूत्रे श्रीवीरस्वामिना प्रोक्तं—“एककुवच-नोक्त्या रज्जार्या महादुःखं प्राप्ता” तदा गणभृद्विज्ञप्तिं चकार—“भगवन् ! का सा रज्जार्या ? किं वा तया वाङ्मात्रेण पापमर्जितं ? यस्य विपाक एवं वर्ण्यते ?” । इत्युक्ते भगवानूचे—हे गौतम ! अत्रैव

भरते भद्रो नामाचार्योऽभूत् । तस्य पञ्च शतानि साधवो द्वादश शतानि निर्ग्रन्थ्यश्च । तस्य गणे त्रीण्येव नीराणि—त्रिदण्डोत्कलितमायामं सौवीरं चेति, चतुर्थं न परिभुज्यते । एकदा रुद्रार्याया वपुः पूर्वकर्मानुभावेन कुष्ठव्याधिना विनष्टं । तद्वीक्ष्य शेषाः संयत्यो भणन्ति—"दुष्करकारिके ! किमेतत् ?" इति । ततस्तया पापकर्मावृतया रुद्रया भणितं—"अनेन प्रासुकोदकेन मे वपुर्विनष्टं" इति । तदाकर्ण्य सर्वासां साध्वीनां हृदयानि क्षुब्धानि "वयं वर्जयामः प्रासुकोदकं" इति । तत्रैकया संयत्या ध्यातं—"यदि मम वपुः सम्प्रत्येव विनश्येन्महारोगैस्तथाप्येतत्प्रासुकोदकं नाहं परिहरामि, उष्णजलव्यापारणधर्मोऽनाद्यनन्तकः कृपावद्भिः संस्तुतः, तन्न मिथ्या । एतस्या वपुस्तु पूर्वार्जितकर्मभिर्विनष्टं । तदहोऽज्ञानेनानयाऽनन्ततीर्थकृदाज्ञाविलोपकं घोरदुःखप्रदं कीदृशं दुष्टवचनमुक्तं ?" इत्यादि चिन्तयन्त्या विशुद्धिविशेषेण केवलज्ञानमुत्पेदे । देवैः केवलिमहिमा विदधे । ततो धर्मदेशनानन्तरं रुद्रया प्रणम्य केवली पृष्टः—"भगवन् ! केन कर्मणाहं कुष्ठादिव्याधिभाजनं जाता ?" । केवलिनोक्तं—"शृणु, त्वया रक्तपित्तदूषितया स्निग्धाहार आकण्ठं भुक्तः कौलिमिश्रश्च सोऽभूत् । अपरं च त्वया श्राद्धसुतस्य वदनं श्लेष्मलालान्वितं मोहवशात्सचित्तोदकेन प्रक्षालितं, तच्च न क्षान्तं शासनसुर्या । ततोऽपरेषामपि तत्प्रसङ्गनिवृत्तये तव तत्कर्मफलं दर्शितं, न तु प्रासुकोदकदोष उद्भाव्यः" । ततस्तयोक्तं—"भगवन् ! यद्यहं यथोक्तं प्रायश्चित्तं गृह्णामि तदा मम वपुः सज्जं भवेत ?" । केवल्याह—"यदि कोऽपि प्रायश्चित्तं दत्ते तदा सज्जं भवेत्" रुद्रोवाच—"त्वमेव प्रयच्छ, अन्यः क ईदृशो महानुभावः ?" । केवली प्राह—"बाह्यरो-

गनिवारणसमीहां करोषि, परमात्मनि भावरोगः प्रसृतः स कथं गमिता ? अपि च प्रयच्छामि ते प्रायश्चित्तं, नवरं प्रायश्चित्तमेव नास्ति, येन तव शुद्धिर्भवेत्, यतस्त्वया संयतीवृन्दस्य पुरः प्रासुकोदकेन मे वपुर्विनष्टं इत्युक्तं तन्महापापपिण्डप्रायं तद्वाक्यं श्रुत्वा संक्षुब्धाः सर्वाः सत्यः, एतद्वचनदोषेण च त्वया यदर्जितं पापं तत्त्वया कुष्ठभगन्दरजलोदरवायुगुल्मश्वासनिरोधार्शःकंठमालाद्यनेकव्याधिमग्नदेहया दारिद्र्यदुःखदौर्गत्यापयशोऽभ्याख्यानसंतापोद्वेगप्रज्वालितयाऽनन्तैर्भवैरहर्निशमनुभविष्यते सुदीर्घकालं" इति श्रुत्वा सर्वा अन्या मिथ्यादुष्कृतादिना स्वपापं तत्यजुः ॥

भाषासमित्या परिशुद्धवाक्यं, जल्पन्ति ते ज्ञानमवाप्नुवन्ति ।
रुजा तदाचारविहीनभावा, प्रत्यूहव्यूहं ( जातं ) कुगतिष्ववाप ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंशस्तम्भे नवसप्तत्यधिकद्विशततमं २७९ व्याख्यानम् ॥

---

## अशीत्यधिकद्विशततमं २८० व्याख्यानम् ॥

अथैषणासमित्याह्वतृतीयसंयमाचारमाह—

सप्तचत्वारिंशता यद्दोषैरशनं वर्जितम् । भोक्तव्यं धर्मयात्रायै सैषणासमितिर्भवेत् ॥ १ ॥

स्पष्टः । भावार्थस्तु वक्ष्यमाणज्ञातेन ज्ञेयः । तथाहि—अवन्त्यां धनमित्राभिधो वणिक् श्रीमद्गुरुवाणीं समाकर्ण्य गुरुवैराग्यमग्नो धर्मशर्माह्वसुतेन सह दीक्षां जग्राह । क्रमेण द्वावपि श्रुतपाठिनौ जातौ अन्यदा व्रतिव्रजैः सह तौ मध्यंदिने एलगपुराध्वनि प्रस्थितौ । तदा च भीष्मग्रीष्मार्ककरसंपाततापितः पिपासापीडितो बालः शनैः शनैश्चचाल । अन्ये मुनयोऽग्रतो जग्मुः । धनमित्रमुनिः पुनः सूनोः प्रेमपाशनियन्त्रितः पश्चाच्चचाल । इतश्च तत्र मार्गे तरङ्गिणी समाययौ । तां निरीक्ष्य पिता पुत्रमलपत्—"हे वत्स! चेष्टया पिपासापराजितं त्वां जानामि, मदन्यर्णे च प्रासुकमम्भो नास्ति, तत्किं करोमि? योग्यक्षेत्रातीतं कालातीतं जलं न कल्प्यते मुनीनां । तदिदानीं नदीनीरं पीत्वा तृषां हन्यतां आपदि धीधनैर्निषिद्धमपि हि कार्यं कार्यं । यदुक्तं—

निषिद्धमप्याचरणीयमापदि, क्रिया सती नावति यत्र सर्वथा ।
घनाम्बुना राजपथेऽतिपिच्छिले, क्वचिद्बुधैरप्यपथेन गम्यते ॥ १ ॥

मृत्युदामिमामापदं कथञ्चनोल्लङ्घ्य पश्चात्सद्गुरोः समीपे इदं पापमालोचयेः" । इत्युदीर्य नदीं समुत्तीर्य स इति दध्यौ—"नूनं मद्दर्शने पुत्रो ह्रिया नोदकं पास्यति । ह्रीमानकार्यं कुर्वन् स्वच्छायातोऽपि शङ्कते, अतोऽस्य दर्शनपथादपसरामि" । इति ध्यात्वा स पुरोऽचालीत् । क्षुल्लोऽथ निम्नगां प्राप, परं तृषार्त इति दध्यौ—"श्रीपरमात्मभिरनेषणीयाशनपानादिग्रहणं निषिद्धं । यत एषणा त्रिधा—गवेषणा १ ग्रहणैषणा २ परिभोगैषणा ३ आहारोपधिशय्यासु विषये एतास्तिस्र एषणा विशोधयेत् ।

तत्रोद्गमदोषा आधाकर्मादयः षोडश, उत्पादनादोषा अपि धात्र्यादयस्तावन्त एव १६ इति प्रथमगवेषणायां शोधयेत्, द्वितीयायामेषणादोषान् शङ्कितादीन् दश, तृतीयायां तु अङ्गारादिपञ्चदोषान् शोधयेदिति यतमानो यतिः। अत्र सप्तचत्वारिंशता दोषैरदूषितमत एव नवकोटिविशुद्धमन्नपानाद्याहारमौधिकौपग्रहिकरूपं द्विविधमुपधिं च वसतिं च यन्मुनिरादत्ते सा एषणासमितिः, तद्विमुक्तमनादेयमपि वारि कथञ्चित् पिबामि साम्प्रतं। पश्चाद्गुरुसन्निधौ प्रायश्चित्तं ग्रहीष्यामि"। इति विमृश्याञ्जलिना जलं समुत्पाट्य पातुं यावन्मुखस्याग्रे निन्ये तावता सोऽध्यासीत्—"अधुनाऽहं जलादिजीवानामत्ययं ददामि? किं वा तृषाच्छेदनार्थं स्वजीवसौख्यं करोमि? यदि स्वजीवे ऐहिकं सौख्यं तनोमि तदा परेषां जीवानां महादुःखं स्यात्। तेन चातुर्गतिकसंसारपरावर्तनं प्रवर्धते, तथा चानन्तजिनाज्ञालोपो भवेत्। अपि चामी जीवाः सर्वे आत्मसंबन्धिनः आत्मकुलं मदीयात्मा एषु कुलेष्वनेकधा संस्थितः। श्रीमद्वीतदोषैस्तु षट्कायजीवानां दया संयमधारकोत्सङ्गे स्थापिता। अथवा श्वभ्रविपाके इतोऽनन्तगुणाधिका तृषा पराधीनत्वेन त्वयाऽनन्तशः सोढा। अधुना तु स्ववशोऽसि त्वं। हे जीव! किमर्थं स्वात्मगुणभ्रंशं त्वं तनोषि? अथवा निजैकजीवार्थेऽनेकजीववधभयमपि न समीहसे? धिग्धिग्भवच्चित्तमौढ्यं प्रत्यक्षं क्षणिकसुखदं तृषाच्छेदरूपं निर्मलं शीतलं जलममृतमिव त्वं धारयसि, परं नेदममृतमयं निश्चयेन विषधारापानसमं पानकं ज्ञेयं। यत एकत्रोदकबिन्दौ असङ्ख्यजन्तून् जिनाः प्रवदन्ति, सेवाललवसमन्वितं तदनन्तजीवात्मकं भवेत्। उक्तं च

त्रसाः पूतरमत्स्याद्याः स्थावराः पनकादयः । नीरे स्युरिति तद्धाती सर्वेषां हिंसको नवेत् ॥ १ ॥
तत्कियद्भिर्दिनैर्यान्ति रक्षिता अपि ये ध्रुवम् । तान् प्राणान् रक्षितुं दक्षः परप्राणान्निहन्ति कः ॥ २ ॥
सजीवं जीवनमिदं सर्वथा न पास्यामि"। इति निर्णीय शनैः शनैर्नद्यामञ्जलेर्जलं मुमोच विवेकपूर्वं बहूनां जलजीवानां बाधा न स्यात्तथा। स बालोऽप्यबालधैर्यस्तटिनीमुत्तीर्य तृषया यातुमक्षमस्तत्तीर एवापतत्। तदा दध्यौ सः—"अधुना तृषावेदनीयकर्म कण्ठताल्वादिशोषणं कृत्वा मदात्मगतरत्नत्रयीसुधाशोषणं वाञ्छति, परं तत्र तव(स्य)प्रवेशलेशोऽपि न प्रसरति, समाधिसंतोषस्वस्वरूपध्यानमग्ने मयि तव(स्य) प्रचारो न स्यादिति प्राचीनपूज्यैर्महदालम्बनं निर्मापितं"। इत्यादिशुनध्यानपरो विपद्य त्रिदिवं ययौ। तत्रोत्पत्त्यनन्तरमेवावधिज्ञानं प्रयुज्य पुरो गत्वा स्थितं तातं प्रेक्ष्य स्वाङ्गे प्रविश्य धनमित्रर्षिमन्वगात्। ततः सुतं समायान्तं वीक्ष्य सोऽपि हृष्टः पुरोऽचलत्। अथोदन्याव्यथार्तानां मुनीनां नक्त्या स सुरो नूरिगोकुलान्यध्वनि व्यधात्, तेन्योऽधिगत्य तक्रादि साधवः स्वास्थ्यमासदन्। ततोऽग्रे गच्छतां तेषां मध्यात्कस्यापि विंटिकां स सुरः स्वं जिज्ञापयिषुस्तत्र व्यस्मारयत्। दूरं गत्वा विंटिकां स्मृत्वा व्रती स्खलितः, व्याघुट्योपधेर्विंटिकां स्वां तत्रापश्यत्, न तु गोकुलं। तामादायर्षिनिर्मिलितः स्वोपधिलानं गोकुलाप्रेक्षणं चावदत्। तदाकर्ण्य जाताश्चर्याः सर्वे इति व्यमृशन्—"नूनं दिव्यानुनावेनात्र वने गोकुलान्यनवन्"। अत्रान्तरे स सुरः प्रादुर्भूय पितरं विहायान्यान्मुनीन्ननाम। "एनं कुतो न नमसि? इत्युक्तो व्रतिन्निः स स्वीयं व्यतिकरं सर्वं निवेद्य सुरोऽवदत्—"सजीवाम्नोऽपि

पातुं यत्तदाऽसौ मे मतिं ददौ तत्पूर्वभवभवापि एष साधुर्न वन्द्यते, असौ स्नेहाद्रिपुवत्कार्यं कृतवान्, एतद्वचनादहं तदा सचित्ताम्बु अपास्यं चेत्तदा मेऽनन्तभवभ्रमणमभविष्यत् । यतः—

स एव हि बुधैः पूज्यो गुरुश्च जनकोऽपि च । शिष्यं सुतं च यः क्वापि नैवोन्मार्गे प्रवर्तयेत् ॥१॥"

स सुपर्वैवमुदीर्य त्रिविष्टपमगात् । साधवोऽपि तद्गुणान् स्तुवन्तोऽग्रे विजहुः ॥

क्षुल्लो यथा श्रीधनशर्मनामा, अनेषणीयं न पपौ तदाम्बु ।
एवं समग्रैरपि संयतैस्त—च्छीलं समाराध्यमवद्यमुक्तैः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंश-स्तम्भेऽशीत्युत्तरद्विशततमं २८० व्याख्यानम् ॥

## एकाशीत्युत्तरद्विशततमं २८१ व्याख्यानम् ॥

अथ चतुर्थमादाननिक्षेपसमित्याख्यमाचारमाह—

ग्राह्यं मोच्यं च धर्मोपकरणं प्रत्युपेक्ष्य यत् । प्रमार्ज्य चेयमादाननिक्षेपसमितिः स्मृता ॥ १ ॥

स्पष्टः । अत्रार्थे इयं भावना—औघिकं रजोहरणमुखवस्त्रिकादि, औपग्रहिकं संस्तारकदण्डकादि, अन्यदपि यत्किञ्चित्प्रयोजनविशेषे लेष्टुकाष्ठादि संलिख्य प्रतिलिख्य च हस्तादौ गृह्णीयात् तथैव भूम्यादौ

निक्षिपेद्वा, तत्सर्वं प्रथमं चक्षुषा निरीक्ष्य सम्यग्रजोहरणादिना प्रमृज्यैव च, न त्वन्यथा, पनककुन्थुकीटिकादिहिंसातः संयमविराधनाया जातु वृश्चिकादिघट्टने चात्मविराधनादेरपि संभवात्। वस्त्रादीनां प्रतिलेखनाऽपि तथैव विधेया, यथा वायुकायादयो नेषदपि विराध्यन्ते, प्रमार्जनाप्रतिलेखनयोर्जीवदयार्थमेव क्रियमाणत्वात्, तेनोभयत्र साधुना भृशमप्रमत्तेन भाव्यं। यदार्षे—

पडिलेहणं कुणंतो मिहो कहं कुणइ जणवयकहं वा। देइ च पच्चक्खाणं वाएइ सयं पडिच्छइ वा ॥ १ ॥
पुढवि आउक्काए तेऊवाऊ वणस्सइ तसाणं। पडिलेहणपमत्तो छन्नंऽपि विराहओ होइ ॥ २ ॥

एवं वपुःप्रमार्जनादावपि अप्रमत्तेन भाव्यं। श्रीप्रसन्नचन्द्रबन्धुर्वल्कलचीरिर्धूल्यावगुण्ठितवस्त्राणि प्रमार्जयन् सन् जातिस्मृत्या केवलज्ञानं प्रापेति। अथवैकः सोमिलद्विजो दीक्षां जग्राह। सोऽन्यदा ग्रामान्तरप्रस्थितैर्गुरुभिः प्रोक्तः—"पात्रादिकं प्रतिलेखय" इत्युक्ते प्रतिलेखितं तेन। ततः कस्मिंश्चित्कारणे उत्पन्ने गुरवो न चलिताः प्राहुः—"पात्रादिकं प्रमार्जनापूर्वं स्वस्थाने मुञ्च"। स स्माह—"प्रतिलेखितान्यधुनैव, किं पात्रादिमध्ये सर्पोऽस्ति? यत्पुनः पुनः प्रत्युपेक्षणादिकं विधीयते?"। इत्यनर्हं वाक्यं श्रुत्वा रुष्टेन शासनसुरेण पात्रमध्ये सर्पो विकुर्वितः। तद्वीक्ष्य स भीतो गुरुमक्षामयत्। गुरुराह—"अस्मत्कृतिर्न ज्ञेया"। ततः सुरः स्माह—"त्वद्बोधार्थमिदं मया रचितं, यतः सर्वाण्यपि कार्याणि मुनिभिः प्रमार्जनादिपूर्वं विधेयानि" इति श्रुत्वा तत्समितिधारकः स क्रमेण केवलज्ञानं प्रापेति।

अथ परिष्ठापनिकासमित्याख्यं पञ्चमाचारमाह—

निर्जीवेऽशुषिरे देशे प्रत्युपेक्ष्य प्रमार्ज्य च । यत्त्यागो मलमूत्रादेः सोत्सर्गसमितिः स्मृता ॥ १ ॥

स्पष्टः । अत्रार्थे इयं भावना—श्रीसंयतिः सर्वमपि परिष्ठापनार्हं वस्तु उच्चारं पुरीषं प्रश्रवणं श्लेष्म कर्णाक्षिमलादिकमशनपानवस्त्रपात्रादि च हरितबीजपनककुन्थुकीटिकादिवर्जितेऽचित्ते स्थण्डिले यतनया परिष्ठापयेत् । यतना चैवं—मूत्रजलादि स्तोकं स्तोकं पृथक् पृथक् प्रदेशे त्याज्यं, यथा प्रवाहो न स्यात्तत्कालं च शुष्यति । अशनादि संमर्द्य तथा परिष्ठाप्यं यथा मर्कोटकादिविषयो न स्यात् । वस्त्रादि तु सूक्ष्मशकलीकृत्य यथा गृहस्थव्यापारणादिदोषो न स्यात् तथा परिष्ठाप्यं । स्थण्डिलगुणा उत्तराध्ययन एवं—"अणावायमसंलोए" इत्यादिनोक्ताः । तथाहि—अनापातमसंलोकं—न विद्यत आपातः स्वपरोभयपक्षसमीपागमरूपो यत्र तदनापातं स्थण्डिलं । नास्ति संलोको दूरस्थस्यापि स्वपक्षादेरालोको वृक्षादिछन्नत्वाद्यत्र तदसंलोकं १ । अत्र चतुर्भङ्गी कार्या, तत्राद्यः शुद्धः, यत्र द्वयेऽपि दोषा न सन्ति तत्र गमनं कार्यं चेति १ । तथाऽनुपघातकं—उपघातः कुट्टनादिना उड्डाहादिर्न यत्र तत्, उपघातस्त्रिविधः—संयमस्य प्रवचनस्यात्मनश्चेति २ । तथा समस्थण्डिलं निम्नोन्नतत्वहीनं, विषमे हि पुरीषं प्रश्रवणं वा प्रलोठत् षट् कायान् मर्दयतीति संयमविराधना स्यात् ३ । तथाऽशुषिरं तृणपर्णाद्यनाकीर्णं, शुषिरे हि संज्ञादि[1] व्युत्सृजतो वृश्चिकादिर्दशति ४ । तथा चिरकालकृतं, अयमर्थः—यानि स्थण्डिलानि यस्मिन्नृतौ

---

१ पुरीषादि ।

अग्निप्रज्वालनादिभिः कारणै रचितानि कृतानि तस्मिन्नेवर्तौ तान्यचिरकालकृतानि द्विमासिके ऋतौ द्वितीयर्तौ तन्मिश्रं स्यात्। यत्र पुनरेकं वर्षाकालं सजनो ग्राम उषितस्तत्र द्वादश वर्षाणि यावत्स्थण्डिलं चेति, ततः परमस्थण्डिलं ५। तथा विस्तीर्णं जघन्यमायामविष्कम्भाभ्यां हस्तप्रमाणं, उत्कृष्टं द्वादश योजनानि, तच्चक्रिसैन्यनिवेशो ज्ञेयं, शेषं तु मध्यममिति ६। तथा दूरवगाढं गम्भीरं यत्राधस्ताच्चत्वार्यङ्गुलान्यग्नितापादिनाऽचित्ता भूमिस्तज्जघन्यं, यस्य पुनरधस्तात्पञ्चाङ्गुलप्रभृतिकं तदुत्कृष्टं ७। तथाऽनासन्नं आरामादेर्नातिसमीपस्थं, इहासन्नं द्विधा–द्रव्यासन्नं भावासन्नं च। तत्र द्रव्यासन्नं देवकुलहर्म्यग्रामारामक्षेत्रमार्गादीनां निकटं, तत्र द्वौ दोषौ संयमोपघात आत्मोपघातश्च, तथाहि–स देवकुलादिस्वामी तत्साधुव्युत्सृष्टं पुरीषं केनचित्कर्मकरेणान्यत्र त्याजयति, ततस्तत्प्रदेशविलेपने हस्तप्रक्षालने च संयमोपघात आत्मोपघातश्च स गृहाद्यधिपतिः प्रद्विष्टः कदाचित्ताडयतीति। भावासन्नमतिवेगे आसन्नमेव व्युत्सृजति ८। बिलवर्जितं भूमिरन्ध्रादिरहितं ९। तथा त्रसप्राणबीजरहितं स्थावरजङ्गमजन्तुजातवियुक्तं १०। एषां च पदानामेकद्विकादिसंयोगैश्चतुर्विंशत्यधिकं सहस्रं १०२४ भङ्गाः स्युः। तत्रान्त्यो दशभङ्गनिष्पन्नो भङ्गको मुख्यवृत्त्या शुद्ध इति स्थितं। ईदृशे स्थण्डिले उच्चारादीनि व्युत्सृजेत्, इति परिष्ठापनिकासमितिः श्रीषष्ठाङ्गवर्णितश्रीधर्मरुचिसाधुवत्पालनीया। तथाहि—

श्रीधर्मघोषसूरिशिष्येण धर्मरुचिनाऽनगारेण नागश्रीदत्तं कटुकालाबुकव्यञ्जनं गृहीतं, गुरुभ्यो दर्शितं, गुरुस्तदयोग्यं प्राणहरं विज्ञाय शिष्यं प्राह–"इदं शुद्धस्थण्डिले परिष्ठापय"। शिष्यः पूर्वोक्तनिर्दोषभूमौ

गत्वा दध्यौ—"अस्मिन् व्यञ्जने को दोषोऽस्ति ? यद्गुरुभिर्व्युत्सर्जनाज्ञा दत्ता ?" । ततस्तन्मध्यादेकं बिन्दुं पृथिव्यां निदधे, तद्गन्धलोलुपा अनेकशः पिपीलिकाः समेतास्ताः शीघ्रं पञ्चत्वं प्रापुः । तद्वीक्ष्य संजातकृपो दध्यौ—"निर्दोषभूमावपि पिपीलिकादिजीवा दूरत आजग्मुः, तदा किमपि तादृशं स्थण्डिलं नाप्यते, अतो गुरुभिरित्थमुक्तं यच्छुद्धस्थले त्वं गत्वा परिष्ठापय, तर्हि मदात्मसदृशं शुद्धस्थलं क्वापि न पश्यामि, अत्रैवेदं निधेयं" इति ध्यात्वा तद्व्यञ्जनं स्वयमेवाहारयत् । तदैवानशनं विधाय सर्वार्थसिद्धे विमाने देवोऽभूत् । अत्र विशेषं वक्तव्यं तत् षष्ठाङ्गतो ज्ञेयं । अत्र ढण्ढणर्षिज्ञातं सिंहकेसर्षिज्ञातं च, अत्र मोदकव्युत्सर्जनरूपं निर्धार्यं । अथवा पुष्पमालाप्रकरणवृत्तिगदितधर्मरुचिज्ञातं ज्ञेयं । तथाहि—

कुत्रापि गच्छे धर्मरुचिः साधुः । परोपकारव्यग्रतयाऽनेनान्यदा स्थण्डिलं न प्रतिलिखितं । निशि प्रश्रवणपीडा जाता । प्राणसंशये देवतया प्रकाशो दर्शितः, तेन स्थण्डिलं गृहीतं, ततः पुनरन्धकारे जाते ज्ञातं देवकृतं मिथ्यादुष्कृतं दत्तं । इत्याद्यनेकावदाता बहुशास्त्रतो विज्ञेया इति ।

यत्स्थण्डिलं श्लाघितं दिग्विशेषणैः, शुद्धं सुशोध्यं मुनिधर्मबुद्धिवत् ।
अन्त्यासमित्याचरणे मुमुक्षुभि-रालस्यमत्र व्रतिभिर्न धार्यम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंशस्तम्भे एकाशीत्युत्तरद्विशततमं २८१ व्याख्यानम् ॥

## द्व्यशीत्युत्तरद्विशततमं २८२ व्याख्यानम् ॥

अथ मनोगुप्तिनामानं षष्ठं संयमाचारमाह—

कल्पनाजालनिर्मुक्तं सद्भूतवस्तुचिन्तनम् । विधेयं यन्मनःस्थैर्यं मनोगुप्तिर्भवेत्त्रिधा ॥ १ ॥

स्पष्टः । नवरं त्रयो भेदाश्चामी—आर्तरौद्रध्यानानुबन्धिकल्पनासमूहविरहिताऽऽद्या १ । आगमानुसारिणी समस्तलोकहिता धर्मध्यानानुबन्धिनी माध्यस्थ्यपरिणतिर्द्वितीया २ । शुभाशुभमनोवृत्तिनिरोधेन योगनिरोधावस्थाभाविन्यात्मारामता तृतीया ३ । इयं मनोगुप्तिर्जिनदासश्रेष्ठिवत् पाल्या तथाहि—चम्पायां जिनदासः शून्यागारे पौषधे सति प्रतिमायां स्थितः । इतश्च तत्पत्नी कुशीला तमज्ञातवती सकीलकपल्यङ्कपादकं तत्पादोपरि न्यवेशयत् । जारस्त्रीभारपीडां प्राप्य मनोगुप्त्या दिवं गतः इति १ ।

अथ वाग्गुप्तिनामानं सप्तमं चारित्राचारमाह—

मौनावलम्बनं साधोः संज्ञादिपरिहारतः । वाग्वृत्तेर्वा निरोधो यः सा वाग्गुप्तिरिहोदिता ॥ १ ॥

स्पष्टः । नवरं वाग्गुप्तिर्द्विधा—मुखनयनभ्रूविकाराङ्गुल्याच्छोटनोर्ध्वीभावकासितहुङ्कृतलोष्ठक्षेपणादीनामर्थसूचिकानां संज्ञानां परिहारेण अद्य मया न वक्तव्यमिति अभिग्रहकरणमेका वाग्गुप्तिः, विशेषेण हि निजप्रयोजनादि सूचयतो मौनकरणाभिग्रहो निष्फल एवेति । तथा वाचनपृच्छनपरपृष्टार्थव्याकरणादिषु लोकागमाविरोधेन मुखपोतिकाच्छादितमुखकमलस्य भाषमाणस्यापि वाग्वृत्तेर्नियन्त्रणं

द्वितीया वाग्गुप्तिः । आभ्यां भेदाभ्यां वाग्गुप्तौ सर्वथा वाग्निरोधः सम्यग्भाषणं च प्रतिपादितं । भाषा-
समितौ तु सम्यग्वाक्प्रवृत्तिरेवेति द्वयोर्भेदः । यदाहुः—

समिओ नियमा गुत्तो गुत्तो, समियत्तणम्मि भयणिज्जा ।
कुसलवयमुदीरंतो, जंवइ गुत्तोऽवि समिओऽवि ॥ १ ॥

अत्र वाग्गुप्तियुक्तिसमर्थनार्थमन्यशास्त्रोक्तज्ञातं चेदं तथाहि—विष्णुपुरोद्याने शिवशर्मदेवशर्महरि-
शर्मनामानस्त्रयस्तापसा दुस्तपं तपस्तपन्ति स्म । तेषां त्रयाणामपि तपःप्रभावात्परिधानपटा नभस्यातपे
तिष्ठन्तीति प्रसिद्धिः । एकदा स्नानार्थं सरसि गतास्ते त्रयोऽपि । स्वस्वपरिधानपटा नभस्यातपे धृता
यावत्तिष्ठन्ति तावत्तत्र सरस्येकेन बकेनादत्तं मत्स्यमालोक्य "हाऽकार्यमिदं यदनेन पापिना निरपरा-
धोऽयं मत्स्यो गृहीत इति मुञ्च मुञ्चेति" वदतो मत्स्ये समुत्पन्नकृपस्य बके च निर्दयस्य शिवशर्मण एकः
पटो गगनादधस्तादपतत् । पतितं च तं पटं प्रेक्ष्य "मा मुञ्च मा मुञ्च" इतिब्रुवाणस्य क्षुधितोऽसौ
वराको बको मरिष्यतीति तस्मिन् बके जातकरुणस्य मत्स्ये च निर्दयस्य देवशर्मणोऽपि द्वितीयः पटस्त-
थैवापतत् । इति तौ द्वावपि पतितौ विलोक्य बके मत्स्ये च समभावस्तृतीयस्तापसः प्राह—

मुञ्च मुञ्च पतत्येको मा मुञ्च पतितो यदि । उभौ तौ पतितौ दृष्ट्वा मौनं सर्वार्थसाधकम् ॥ १ ॥

एतन्मौनं पण्डितसंबन्धि श्रेयसे निर्धारितं अपण्डितानामपि मौनं केषाञ्चिद्धितार्थं । यतः—

स्वायत्तमेकान्तगुणं विधात्रा, विनिर्मितं छादनमज्ञतायाः ।
विशेषतः सर्वविदां समाजे, विभूषणं मौनमपण्डितानाम् ॥ १ ॥

रागद्वेषसंयुक्तं तज्जल्पनमेव पटपतननिदानमिति समित्या मौनमुपेयुषस्तस्य हरिशर्मणस्तृतीयपटो नन्नस्येव तस्थिवान् । इति ज्ञातं श्रुत्वा मुनिभिस्तु स्याद्वादधर्मज्ञैरवश्यं लाभालाभं विचार्य वाग्गुप्तिर्वाक्समितिश्च प्रयोज्येति २ । अथ कायगुप्त्याह्वमष्टमं संयमाचारमाह—

कायगुप्तिर्द्विधा प्रोक्ता चेष्टानिवृत्तिलक्षणा । यथागमं द्वितीया च चेष्टानियमलक्षणा ॥ १ ॥

स्पष्टः । अत्रार्थे इयं भावना—दिव्य १ मानुष्य २ तिर्यक्कृता ३ स्फालनपतनात्मसंवेदनीय ४ रूपचतुर्विधोपसर्गक्षुत्पिपासापरीषहादिसंभवेऽपि कायोत्सर्गकरणादिना कायस्य निश्चलकरणं, सर्वयोगनिरोधावस्थायां च सर्वथा यच्चेष्टानिरोधनं साऽद्या कायगुप्तिः । शयनासननिक्षेपादानादिषु स्वच्छन्दपरिहारेण समयोक्तक्रियाकलापपुरस्सरा नियता कायचेष्टा सा द्वितीया । तत्र शयनं यामिन्यामेव, न घस्रे, तदप्याद्यप्रहरे व्यतीते गुरूनापृच्छ्य पृथ्वीं संप्रेक्ष्य प्रमृज्य च संस्तरणपट्टकद्वयं संहत्यास्तीर्य च मूर्धानमधश्च कायं सपादं मुखपट्टीरजोहरणाभ्यां प्रमृज्यानुज्ञापितसंस्तारकावस्थानः पठितपौरुषीपाठो बाहूपधान आकुञ्चितजानुकः कुक्कुटीवद्दियति प्रसारितजङ्घो वा प्रमार्जितभूमिन्यस्तपादो वा सङ्कोचसमये प्रमार्जितसंदंशक उद्वर्तनं च मुखवस्त्रिकाप्रमृष्टदेहपूर्वकं कुर्वन् प्रमाणयुक्तायां वसतौ हस्तत्रयमिते भूप्रदेशे लघुनिद्रां करोति । तथोपवेशनं यत्र स्थले चिकीर्षितं तच्चक्षुषा निरीक्ष्य प्रमृज्य च बहिर्निषद्यामास्तीर्य

तिष्ठेत्। अयोग्यस्थण्डिलं लब्ध्वा कायगुप्तिं करोति। तथाहि—कोऽपि साधुः सार्थेन सहान्यदाऽरण्ये जीवाक्षयत्वेन स्थण्डिलमलभमान एकपादेन निश्चयस्थात्। प्रशंसित इन्द्रेण। मिथ्यादृष्टिः सुरः समागत्य सिंहरूपश्चपेटां मुमोच। पुनः पुनः साधुः प्राणिविराधनासंभवेन मिथ्यादुष्कृतं ददौ। सुरः क्षामयित्वा गतः। साधुजनैः प्रशंसितः। इति स्वरूपं श्रुत्वा कायगुप्तिर्ध्रुवं धार्या इति तृतीया गुप्तिः। पूर्वोक्तयुक्त्या तिस्रो गुप्तयः साधुभी रक्षणीयाः, तथाहि—एकस्मिन् पुरे कोऽपि मुनिः कस्यापि गृहे भिक्षार्थं प्रविष्टः। तेन नत्वा मुनिः पृष्टः—"भगवन्! त्रिगुप्तिगुप्तस्त्वमसि?"। मुनिनोक्तं—"नाहं त्रिगुप्तः"। "कथं?"। तेनोक्तं—"एकदाऽहं कस्यापि गृहे भिक्षार्थमगमं, तस्य प्रियाया वेणीदण्डं दृष्ट्वा स्वभार्यां स्मृतवानहं, अतो मनोगुप्तिर्मम नास्ति। पुनरेकदा भिक्षार्थमिभ्यगृहे गतवानहं, तेन कदलीफलानि योग्यानि कृत्वा मे दत्तानि। अन्यगृहे मया पृष्टेन व्याहृतं। तेन तद्वैरिणा नृपाय निवेदितं—'देव! भवद्वाटिकाया रम्भाफलानि श्रीदत्तगृहे यान्ति'। राज्ञोक्तं—'त्वया कथं ज्ञातं?'। तेनोक्तं—"श्रेष्ठिना मुनेर्दत्तानि, मया तु मुनिमुखाच्छ्रुतं, एवंविधानि सदाफलितकदलीफलानि भवद्वाटिकां मुक्त्वाऽन्यत्र न सन्ति। तच्छ्रुत्वा नृपेण श्रेष्ठी दण्डितः, अतो मम वाग्गुप्तिर्नास्ति, येन श्रेष्ठिदण्डनेऽहं हेतुरभूवं। तथाऽहमेकदाऽटव्यां श्रान्तो विश्रान्तश्च प्रमीलां प्राप। तत्रैकः सार्थः स्थितोऽभूत्। रात्रौ सार्थप.तेनोक्तं—"प्रातरग्रे चलिष्यते, तेन सकालमन्नादि सज्जीकुरुत जनाः'। ततः सर्वो जनोऽन्नपाके लग्नः। एकेनान्धकारवशादेकस्मिन् पक्षे मम मस्तकं द्वितीयपार्श्वे च पाषाणं मुक्त्वा चुल्लकः

कृतः । तन्मध्ये वह्निरुद्दीपितः । मया शिरोऽपाकृतं । अतो मे कायगुप्तिरपि नास्ति । अतो नाहं भिक्षार्हः" । तस्य सत्यभाषणेन श्रेष्ठी हृष्टो मुनिं प्रतिलाभ्य मुनिप्रशंसयाऽनुत्तरविमानादिसुखमार्जितवान् । मुनिस्तु तादृशमात्मानं निन्दन् चिरं चारित्रं प्रपाद्य क्रमाद्दिवं गतः । इति त्रिगुप्तिस्वरूपं तथा पूर्वोक्ताः समितयः पञ्च प्रतिचाररूपाः, गुप्तयस्तु प्रवीचारा अप्रतिचाररूपाः । प्रवीचारो नाम कायिको वाचिको वा व्यापारः । तथा गुप्तिषु समितीनामन्तर्भावोऽपि स्यात् । द्वितीया समितिर्वाग्गुप्तौ । एषणा तु मानसिकोपयोगनिष्पन्ना, यदा साधुरेषणायुक्तस्तदा श्रोत्रादिभिरिन्द्रियैर्हस्तपात्रकधावनादिषु समुत्थेषु शब्दादिषूपयुज्यते, अत एव मनोगुप्तौ । शेषास्तु समितयः कायचेष्टानिष्पन्नाः, अत एवासां तिसृणामपि कायगुप्त्या सहैकत्वं । अथवा मनोगुप्तिः पञ्चसमितिष्वविरुद्धा । एताश्चाष्टावपि प्रवचनमातरः समस्तद्वादशाङ्गीप्रसवा एतासु समस्तप्रवचनमन्तर्भवति । तथाहि—प्रथमसमितावाद्यव्रतमवतरति, तद्वृतितुल्यानि च शेषव्रतानि तत्रैवान्तर्भावमुपयाति । भाषासमितिस्तु सावद्यवाक्परिहारतो निरवद्यवाग्रूपा, तथा च वचनपर्यायः सकलोऽप्याक्षिप्त एव । न च तद्बहिर्भूता द्वादशाङ्गी । एवमेषणासमित्यादिष्वपि स्वधिया भाव्यं । यद्वा सर्वा अप्यमूश्चारित्ररूपाः, यतः—

अथवा पञ्चसमितिगुप्तित्रयपवित्रितम् । चरित्रं सम्यक्चारित्रमित्याहुर्मुनिपुङ्गवाः ॥ १ ॥

चारित्रं च ज्ञानदर्शनं विना न भावि । न चैतत्त्रितयातिरिक्तमन्यदर्थतो द्वादशाङ्गमिति सर्वास्वप्येतासु सर्वं प्रवचनमन्तर्भवतीति ॥

चारित्रशीलैर्मुनिभिः प्रमादं, त्यक्त्वा तदष्टौ समुपासनीयाः ।
यस्मात्समग्रं प्रवचोरहस्य-मेतासु चान्तर्भवति प्रशस्यम् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंशस्तम्भे द्व्यशीत्युत्तरद्विशततमं २८२ व्याख्यानम् ॥



## त्र्यशीत्युत्तरद्विशततमं २८३ व्याख्यानम् ॥

अथ तपःप्रभावं दर्शयति—

अनादिसिद्धदुष्कर्मद्वेषिसङ्घातघातकम् । इदमाद्रियते वीरैः खड्गधारोपमं तपः ॥ १ ॥
तत्तपः सेव्यतां दक्षा दुष्कर्मक्षालनोदकम् । यत्सेवनाद्भूद्देवसेव्यः क्षेमर्षिसंयमी ॥ २ ॥

स्पष्टौ । अत्रार्थे क्षेमर्षिप्रबन्धः–चित्रकूटपुरासन्नग्रामे निःस्वो बोहाख्यः श्राद्ध आसीत् । एकदा स पञ्चशतद्रम्मैः स्नेहकुतुपकं भृत्वा चित्रकूटमागच्छन् पदस्खलनात्पतितः कुतुपकमप्यपातयत्, विलक्षो निजग्राममागतः । लोकैरनुकम्पया पञ्चशतद्रम्मा अर्पिताः, तैः पुनः कुतुपकं लात्वा व्रजन् तथैव स्खलितः । ततो भवविरक्तः श्रीयशोभद्रगुरोर्वैराग्यवाणीं श्रुत्वा दीक्षां ललौ । गुरुणा द्विविधशिक्षया शिक्षितो गीतार्थो जातः, गुरूनिति व्यजिज्ञपत्—"प्रभो ! मया वैराग्येण चेद्दीक्षा गृहीता तदा त्रिशु-

ऽेव पालयामि, यद्यादिशत तदाऽहं यत्रोपसर्गा बहवः स्युस्तत्र गत्वा कायोत्सर्गे तिष्ठामि" । गुरुणा लाभं वीक्ष्य मालवदेशं प्रति प्रहितः । सर्वगच्छं ससङ्घं क्षामयित्वा मालवदेशे थामणोड्रोपान्ते सरःपालौ कायोत्सर्गे तस्थौ । इतश्च ग्रामसत्का द्विजसूनवः क्रीडायै निःसृताः साधुं दृष्ट्वाऽसद्ग्रामेऽरिष्टमायातमिति ध्यात्वा यष्टिमुष्ट्यादिभिरुपाद्रवन् । साधुः सर्वं सहते । सरःस्थः सुरो ध्यानस्थं साधुं निश्चलं ज्ञात्वा द्विजपुत्रान् शिखिबन्धैर्बबन्ध । ते सर्वेऽपि रुधिरं वमन्तो भूमौ पतिताः । तन्मातापितरो दुःखं धृतवन्तः साधुसमीपे समागत्येति प्रोक्तवन्तः—"हे भगवन् ! त्वं तु कृपाढ्यः साधुः, मुञ्चामून् शिशून् बन्धनात्" । तेष्वेवं लपत्स्वपि साधुर्ध्यानं न मुमोच । ततोऽधिष्ठात्रा सुरेण बालकदेहेऽवतीर्य तन्मातापितर इत्युक्ताः—"एष मुनिः किमपि न करोति, मयैतत्कृतं, यद्येतस्य चरणजलैराछोटयत तदा शिशवो बन्धनान्मुच्यन्ते, नान्यथा" । मातापितृभिस्तथा कृतं, स्वसूनवो नीरुजो जाताः । ततो मातापितरो निजनिजसौधाद्वित्तमानीय साधोरुपदीकृत्येति प्रोचुः—"इदं गृहाण" । साधुनोचे—"न मे कार्यं वित्तेन इदं जीर्णोद्धारेषु स्थापयत" । ततः सर्वैरपि जनैस्तस्य मुनेर्निरीहतया क्षमर्षिरिति नाम घोषितं । तत्रातीव भक्तिभृतो जनान् वीक्ष्य गिरिकम्बलाख्यपर्वतं गतो विचित्रं तपः करोति । इतश्च मालवदेशे धारायां सिंधलभूपोऽभूत् । तत्र क्षमर्षिः पञ्चभिः सप्तभिः ककारैः खकारैः कूरकंसारकांगकोद्रवकरंबकइरकपर्दा खारेकखुरहमीखजूरखाजाखांडखीचरू, एवं गकारैः गहुंगोलगुंदगुंदवडांगुणागोलागोरस इत्याद्यपरैरपि वर्णैः पारणं चकार । तपःप्रभावात्सर्वेऽप्यभिग्रहाः पूर्णाः । एतेऽभिग्रहा न दुष्करा इत्युद्भ्रम-

ऽभिग्रहं जग्राह—यदि मिथ्यात्वी राज्यभ्रष्टः कान्दविकापणे मध्याह्ने पर्यस्तिकासनस्थः पत्तित्वं प्राप्तः कृष्णत्वमितान् केशान् विवृण्वन् एकविंशतिमितान्मण्डकान् शातकुन्ताग्रेण दास्यति तदा पारणं कुर्वे, नान्यथा ।

ण्हाणट्ठिय रावल कन्हओ, केशि गलंतइ मण्डुम्मणो ।
जइअइ इगवीस मंडा देइ, तउ खिमरिखी पारणं करेइ ॥ १ ॥

इत्यभिग्रहवान्मुनिरष्टदिनसहितान् त्रीन्मासानतिचक्राम । अन्यदा मध्याह्ने कृष्णपत्तिस्तथा स्थितो भिक्षायै यान्तं मुनिमाकार्य "एहि भिक्षो ! तवाशां पूरयामि" इत्युवाच । मुनिस्तच्छ्रुत्वा गतः । कृष्णः कुन्ताग्रेण मण्डकान् लात्वा यावद्दत्ते तावन्मुनिना "गणय" इत्युक्ते "तव भाग्ये यावन्तः स्युस्तावन्तः, किं गण्यन्ते ?" इति कृष्णेनोक्तं । मुनिना "मेऽभिग्रहोऽस्त्येकविंशत्या" इत्युक्ते एकविंशतिर्गणितास्तेन । स तद्वीक्ष्यातीव चमत्कृतो मुनिमित्युवाच—"मुने ! त्वं ज्ञानी, ममायुः कियदस्ति ? अहं स्वगोत्रिभिर्महाराज्यान्निष्कासितः, तान् जेतुं सिन्धुलनृपं सेवे" । इति श्रुत्वा यतिरुवाच—"तव षण्मासायुः" इति श्रुत्वा वैराग्याद्दीक्षां लात्वा षण्मासान् तपस्तप्त्वा स्वराप कृष्णर्षिः । पुनः स मुनिरित्यभिग्रहं ललौ—

खंभ उम्मूलिय गयवर धाइ, मुनिवरदेखी प्रसन्नो थाइ ।
मोदकपंचक सुंडिहिं देइ, तउ खिमरिखी पारणं करेइ ॥ २ ॥

अष्टादशदिनसहितान् पञ्च मासानुपोषितस्तिष्ठति । तावत् पट्टहस्ती मत्तो गृहादीन् पातयन् कान्द-

विकापणात् पञ्च मोदकान् लात्वा मुनिमपारयत् । हस्ती मुनेः प्रभावाक्रान्तात्मा हस्तिपकैरालाने बद्धः । ततो मुनिरभिग्रहमग्रहीत्—श्वश्रूपराभूता चेद्वृद्धवधू रुदन्ती कृतत्रयोपवासा काष्ठार्थागतदरिद्रपुंसा सर्पिषा साकं गुडमिश्रान्मण्डकान् दत्तान् ददाति तदा पारयामि, नान्यथा ।

राडी गारी बंभणरंडी, सासूसिउं कलि करे पयंडी ।
बिहु गाम विचे गुलसि पोलि देइ, तो खिमरिखी पारणं करेइ ॥ ३ ॥

मुनिः पारणाय गिरेरुदतरत्, तदा कुतश्चिद्ग्रामाच्छ्वश्रूपराभूता द्विजपत्नी तादृगवस्था पितृगृहं व्रजन्ती मार्गमजानती अरण्ये पतिता । निःस्वपुंसो घृतगुडसहिता मण्डकास्तया लब्धाः । ततोऽष्टगुणं पुण्यमिति साधुं दृष्ट्वा विचिन्त्य प्रत्यलाभयत् । अहो दानमिति स्तुत्वा देवतया सा पितृगृहे नीता । ततः पुनश्चेत् कृष्णस्कन्धो बलीवर्दो प्राणपुच्छरहितः शृङ्गेण गुडं दत्ते तदा पारणं कुर्वे नान्यथेति ।

कालो कंबल धवलो संड, नाकिं तुटे पुछिहिं बंड ।
सिंग करि गुड भेलो देइ, तो खिमरिखी पारणं करेइ ॥ ४ ॥

अन्यदा साधुः पारणाय धारायां गतः । उक्तलक्षणवृषेण कस्यचिद्वणिज आपणशालतः शृङ्गेण गुडं लात्वा मुनेः पारणं कारितं । तद्वीक्ष्य वणिग् दध्यौ—“अहो ! पशुरयं न सामान्यो यदीदृशो यतेः पारयति, मया मूढेन स्वजन्म हारितं” ततः स श्राद्धो भूत्वोद्धारितगुडेन श्रीपार्श्वजिनचैत्यं कारयित्वा यशोभद्रगुरुपार्श्वे संयममाराध्य स्वर्ययौ । ततः परं तद्गुडपिण्डाह्वं तीर्थं जातं । पुनरन्यदा

वसन्तेऽभिग्रहं ललौ मुनिः—चेत्प्लवगःश्रृङ्खलास्थो नगरान्तश्चूतरसं दत्ते तदा पारयामि, नान्यथेति ।

हहासद्धेहकि नहविमासी, कोटिसंकल बद्धउं पासि ।
जइ अंबरस मंरू देइ, तो खिमरिखी पारणं करेइ ॥ ५ ॥

इतश्च कस्यचिद्व्यवहारिण भ्रष्णतौ घृतकुम्भके स्थापिताम्ररसं कपिर्लात्वा व्रजन्मार्गे यान्तं साधुं प्रत्यलाभयत् । "अहो ! आश्चर्यं" इति जना मिथो जल्पन्तो जैना जाताः । इतश्चावधिज्ञानतः कृष्णर्षिर्देवलोकाद्यतिसमीपं समागत्य नत्वेत्युवाच—"प्रभो ! शासनप्रभावनायै सिन्धुलभूपहस्तिनां रोगशान्त्यै त्वया स्वचरणशौचजलं देयं" इत्युक्त्वाऽदृश्यो जातः । राज्ञश्चतुर्दशशतकरिणो रोगग्रस्ता जाताः । वैद्यैः कृतोपचारैरप्यसाध्या इति मुक्ताः । राजा बाढं शोकमापन्नः । प्रधानवचनेनेत्युद्घोषणामदापयत्—यः कश्चिद्राजकरिणां रोगशान्तिं कुरुते सोऽर्धराज्यभाक् स्यात् । तावता गगन इति वाग्जाता—"गिरिकम्बलगिरौ क्षमर्षेः पादशौचजलेन करिणो नीरोगाः स्युः" । इति श्रुत्वा राजनरा यतिसमीपे गत्वा पादजलं यावद्याचन्ते तावन्मुनिनोचे—"हंहो नराः ! पट्टहस्तिनं मुक्त्वाऽन्ये गजा एतज्जलं पायितव्याः । जैनान्मुक्त्वाऽन्ये पट्टहस्तिनं नीरोगं कुर्वन्तु" इति बुद्ध्या तेन जलेन हस्तिनो नीरुजो जाताः । अन्यदर्शनसत्कैः पट्टहस्ती जलं पायितो विपन्नः । राजा यतिसमीपं गत्वाऽर्धराज्याय विज्ञपयति स्म । मुनिना राज्यं नरकान्तमिति सर्वथैव त्यक्तं । यतीनां संयमादपरं न राज्यं । राजा मुनिं नत्वा स्वस्थानं प्राप्य यतिपादुकां सिंहासने संस्थाप्य प्रासादमकारयत् । अन्यदा मुनिना मार्गे शवं संमुखमायान्तं

वीक्ष्य कस्यचित् पृष्टं—"किमेतत् ?" इति । तेनोक्तं—"धनव्यवहारिणः पुत्रोऽहिना दष्टः, षण्मासैर्मृतोऽसौ" । तच्छ्रुत्वा मुनिनोचे—"अहो ! असौ जीवन् कथं ज्वाल्यते ?" इति केनापि धनायोचे । धनस्तत्रैत्य यतिं नत्वोवाच—"यते ! मम पुत्रजीवितदानेन प्रसादय" । यतिना प्रासुकजलेन सिक्तः परमेष्ठिमन्त्रं स्मृत्वा नीरुकृतः । ततो यतिः पुनरभिग्रहं ललौ—यदि वनप्रसूता व्याघ्री विंशतिं वटकान् ददाति तदा पारयामि, नान्यथेति ।

नवप्रसूतव्याघ्री विकराल, नयरमांहिं बीहावे बाल ।
बडां बीस जो पणमी देइ, तो खिमरिखी पारणं करेइ ॥ ६ ॥

एवं बहुभिर्दिनैर्क्षेषे: तपःप्रभावान्नगरान्तःप्रविष्टां नवप्रसूतां करालां व्याघ्रीं वीक्ष्य वटकधनिका वटकान्मुक्त्वा नष्टाः । व्याघ्र्या यतिस्तैर्वटकैः प्रतिलाभितः । ततो गुरुवन्दनोत्सुको यशोभद्रसूरिं पत्तने गत्वा मया गुरुमवन्दित्वा नैवान्नोदके ग्राह्ये इत्यभिग्रही पत्तनं प्राप्तः । गुरवो नताः । पुनरभिग्रहं ललौ—नृपस्य पट्टहस्ती मत्तो वृद्धस्त्रीवशगो यदि खीचरूखारिकखरूहरीखखखजूर एतैः पञ्चखकारैः पारयति तदा पारयामि । मासे गते शासनदेवतया जरतीरूपं कृत्वा गजो वशीकृतो यतिश्च पारितः । एवं चतुरशीतिपारणकानि पूर्णानि । ततोऽनशनं लात्वा स्वर्ययौ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंशस्तम्भे त्र्यशीत्युत्तरद्विशततमं २८३ व्याख्यानम् ॥

## चतुरशीत्युत्तरद्विशततमं २८४ व्याख्यानम् ॥

अथ तपस्तपनहेतुमाह—

निर्दोषं निर्निदानाढ्यं तन्निर्जराप्रयोजनम् । चित्तोत्साहेन सद्बुद्ध्या तपनीयं तपः शुभम् ॥ १ ॥

स्पष्टः । नवरं तप्यतेऽनेन देहकर्मादीति तपः । तदुक्तम्—

रसरुधिरमांसमेदोऽस्थिमज्जाशुक्राण्यनेन तप्यन्ते । कर्माणि चाशुभानीत्यतस्तपोनामनैरुक्तम् ॥ १ ॥

तत्तपो निर्दोषं—दोषस्तु इहपरलोकाद्याशंसादयस्तैर्विगतं । पुनस्तत्तपो निर्निदानाढ्यं । यतः—

य: पालयित्वा चरणं विशुद्धं, करोति भोगादिनिदानमज्ञः ।
स वर्धयित्वा फलदानदक्षं, कल्पद्रुमं भस्मयतीह मूढः ॥ १ ॥

नवनिदानस्वरूपं प्राग्मयाऽत्र लिखितं । तथा चित्तोल्लासेन, न तु राजविष्टिरीत्या, यथाशक्ति वा । यतः—

सो अ तवो कायव्वो, जेण मणोऽमंगलं न चिंतेइ ।
जेण न इंदियहाणी, जेण जोगा न हायंति ॥ १ ॥

तथा पराधीनबुद्ध्या दीनतया बाज्ञानतपोनिराहारत्यागरूपं तत्तप आश्रवमूलत्वेन कषायोदयाश्रितत्वात् पूर्वान्तरायोदयासातवेदनीयविपाक एव, यत आहारत्यागादिकं द्रव्यतपः, भावतपस्तु

आत्मस्वरूपैकाग्रतारूपं, तत्तु अहर्निशमस्ति, तथापि द्रव्यपूर्वकं भावतपोग्रहणमिति शासनचातुर्यं न त्याज्यं । यतः—

धनार्थिनां यथा नास्ति, शीततापादि दुःसहम् । तथा भवविरक्तानां, तत्त्वज्ञानार्थिनामपि ॥ १ ॥

यथा धनोपार्जनकुशला शीतादिकं क्षमन्ते, तथा भवविरक्तानामनशनादिकं तपो न दुःसहमिति ।

अथ द्वादश तपआचारानाह—

द्वादशधा तपाचारा–स्तपोवह्निर्निरूपिताः । अनशाद्याः षड् बाह्याः षड्, प्रायश्चित्तादयोऽन्तगाः ॥१॥

स्पष्टः । नवरं ये तपोभेदाः सूत्रे प्रोक्ताः, ते चामी—

अणसण १ मूणोदरिया २, वित्तीसंखेवणं ३ रसच्चाउ ४ ।
कायकिलेसो ५ संलीणया ६ य, बझो तवो होइ ॥ १ ॥
पायच्छित्तं १ विणउ २, वेयावच्चं ३ तहेव सझाउ ४ ।
झाणं ५ उवसग्गोऽवि य ६, अप्भंतरउ तवो होइ ॥ २ ॥

एतेषां स्वरूपं वक्ष्यमाणयुक्त्याऽग्रे किञ्चिन्मात्रं लिखिष्येऽहमाचारप्रदीपादिग्रन्थानुसारेणेति ।

अथाद्याचारमाह—

१ आ आकारान्तस्तपशब्दः.

अनशनं द्विधा प्रोक्तं, यावज्जीविकमित्वरम्। द्विघटिकादिकं स्वल्पं, चोत्कृष्टं यावदात्मिकम् ॥ १ ॥

स्पष्टः। नवरं इत्वरं नमस्कारसहितं प्रत्याख्यानं द्विघटिकं, तस्मादल्पं शास्त्रे नोदितं, तदुपरि वृद्धिगामुकमुत्कृष्टं श्रीचरमजिनतीर्थे षण्मासपर्यन्तं, श्रीनाभेयजिनतीर्थे संवत्सरपर्यन्तं, मध्यतीर्थकरशासनेषु त्वष्टौ मासान् यावत्। अत्र चेन्द्रियजयकषायजयतपो रत्नत्रयीतपः समवसरणतपोऽशोकवृक्षश्रीजिनकल्याणकतप इत्याद्यनेकभेदा आचारदिनकरद्वितीयखण्डतो ज्ञेयाः। तथा चाचाम्लवर्धमानतपो वर्षचतुर्दशत्रिमासविंशतिदिनमितं श्रीचन्द्रकेवलिवत्कार्यं। इत्यादिविविधतप इत्वरकालीनभेदेऽन्तर्भवति। यावज्जीविकं तु पादपोपगमनेङ्गिनीभक्तप्रत्याख्यानभेदात्त्रिविधं, अस्य स्वरूपं सप्तदशविधमरणभेदज्ञानं विना न सुखावबोधं स्यात्, अतस्तत्स्वरूपं लिखामि—तत्राद्यमावीचिमरणं वीचिर्विच्छेदोऽन्तरमित्यर्थः, तदभावोऽवीचिर्नारकतिर्यङ्नरामराणामुत्पत्तिसमयात्प्रभृति स्वस्वायुःकर्मदलिकानामनुसमयमनुभवनाद्विघटनं तत्प्रधानं मरणमावीचिमरणं १। अवधिपञ्चत्वं अवधिर्मर्यादा। ततश्च यानि नारकादिभवनिबन्धनतयाऽऽयुःकर्मदलिकान्यनुभूय म्रियते, मृतो वा यदि पुनस्तान्येवानुभूय मरिष्यति तदा तद्द्रव्यावधिपञ्चत्वं। संभवति हि गृहीतोज्झितानामपि कर्मदलिकानां पुनर्ग्रहणं, परिणामवैचित्र्यात्। एवं क्षेत्रादिष्वपि भाव्यं २। अन्तिकपञ्चत्वं—अन्ते भवमन्तिकं, अयं भावः—यानि नारकाद्यायुष्कतया कर्मदलिकान्यनुभूय म्रियते, मृतो वा न पुनस्तान्यनुभूय मरिष्यति तद्द्रव्यतोऽन्तिकपञ्चत्वं, एवं क्षेत्रादिष्वपि ३। वलत्पञ्चत्वं—वलतां संयमान्निवर्तमानानां दुश्चरं तपश्चरणं कर्तुं व्रतं मोक्तुं चाशक्नुवतां

कथञ्चिदस्मान्मुक्तिरस्तु इति ध्यायतां यत्पञ्चत्वं तद्वलन्मरणं, एतच्च भग्नव्रतपरिणामानां मुनीनामेव स्यात् ४ । वशार्तपञ्चत्वं—वशेनेन्द्रियविषयपरवशत्वेनार्ता दीपशिखावलोकनाकुलपतङ्गवदाकुलिता वशार्तास्तेषां पञ्चत्वं वशार्तमरणं ५ । अन्तः शल्यं लज्जादिवशादनालोचितदुराचाररूपं येषां तेऽन्तःशल्यास्तेषां पञ्चत्वमन्तःशल्यपञ्चत्वं, इदं चातीव दुष्टं ६ । तद्भवमरणं—यस्मिन् भवे साम्प्रतं प्राणी वर्तते तद्भवयोग्यमेवायुर्बद्ध्वा पुनस्तत्क्षयेण यदा म्रियते तदा तद्भवपञ्चत्वं, इदं च सङ्ख्यातवर्षायुषां नृतिरश्चामेव, न त्वसङ्ख्यातवर्षायुषां नृतिरश्चां देवनारकाणां च, तेषां पुनरनन्तरं तद्भवाभावात् ७ । बालानां मिथ्यादृशामविरतसम्यग्दृशां वा मरणं बालपञ्चत्वं ८ । पण्डितानां सर्वविरतिमभ्युपगतानां पञ्चत्वं पण्डितमरणं ९ । मिश्राणां बालपण्डितानां देशविरतीनां पञ्चत्वं मिश्रमरणं १० । छद्मस्थानां मतिश्रुतावधिमनःपर्यायज्ञानवतां व्रतिनां पञ्चत्वं छद्मस्थपञ्चत्वं ११ । केवलिनां समस्तापुनर्भवनभवप्रपञ्चानां मरणं केवलिमरणं १२ । विहायसि आकाशे भवं वैहायसं, अयं भावः—ऊर्ध्ववृक्षशाखादावुद्बन्धनेन भृगुपातकूपपातशस्त्रादिभिर्वापञ्चत्वं वैहायस पञ्चत्वं १३ । गृध्रैरुपलक्षणत्वाच्छकुनिकाशिवादिभिश्च स्पृष्टं स्पर्शनं यत्र तद्गृध्रस्पृष्टं, इदं च मृतगजादि(गृध्रादिविदारित)शवान्तः प्रविश्य गृध्राद्यैरात्मानं भक्षयतः (मरणं वा) स्यात् १४ । भक्तं भोजनं तस्योपलक्षणत्वात्पानादेश्च परिज्ञा इदं मया भूरिशो भुक्तमेतद्धेतुकं चावद्यमिति ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया परित्यागो भक्तपरिज्ञापञ्चत्वं १५ । इङ्ग्यते प्रतिनियत एव देशे चेष्ट्यते यत्र तदिङ्गिनीपञ्चत्वं :। इदं चतुर्विधाहारप्रत्याख्यानवतो

नियमितप्रदेशो स्वयमेवोद्वर्तनादि कुर्वतो मुनेः स्यात् १६। पादपो वृक्ष उपशब्दः सादृश्ये ततः पादपमुपगच्छति सादृश्येन प्राप्नोतीति पादपोपगमनं, अयं भावः—यथा पादपः पतितः समं विषमं वाऽचिन्तयन्निश्चलमास्ते परप्रयोगात्तु कम्पते, तथाऽयमपि भगवान् यदङ्गं निर्निमेषं प्रथमतो यत्र समे विषमे वा पतितं तथैव स्थापयति, न तु स्वतश्चालयतीति १७। इदं चान्त्यपञ्चत्वत्रयं यद्यपि वैमानिकत्वमुक्तिलक्षणसमानफलदं तथापि विशिष्टविशिष्टतरविशिष्टतमधृतिमतामेवोत्तरोत्तरं संभवतीति विशेषात्प्रथमं कनीयो, द्वितीयं मध्यं, तृतीयं ज्येष्ठमिति ध्येयं। एषु च साध्वीनामाद्यमेव। यदाहुः—

सव्वाऽवि अ अज्जाओ, सव्वेऽवि य पढमसंघयणवज्जा। सव्वेऽवि देसविरया, पच्चक्खाणेण उ मरंति ॥१॥

अत्र हि प्रत्याख्यानशब्देन भक्तपरिज्ञैव ज्ञेया। इङ्गिनी चानशनं विशिष्टतरधृतिसंहननवतामेव स्यादित्यार्यिकानिषेधादेवावसीयते। पादपोपगमनं तु वयःपरिणामे सति देवगुरून्नत्वा तदन्तिके कृतानशनस्य गिरिगुहादौ त्रसस्थावरविरहिते स्थण्डिले पादपवन्निमेषकरणादावपि निश्चेष्टस्याद्यसंहननिनो निष्प्रतिकर्मणो येन तेन संस्थानेन प्रशस्तध्यानेन प्राणान्तं यावदवस्थानं पादपोपगमनं। उक्तं च—

पढमम्मि य संघयणे, वट्टंतो सेलकुड्डसमाणो। तेसिं पि अ वुच्छेओ, चउदसपुव्वीण वुच्छेए ॥ १ ॥

त्रयमपि चैतन्निर्व्याघाते संलेखनापूर्वकमेव करोति, अन्यथाऽऽर्तध्यानसंभवात्, व्याघाते तु व्याधिविद्युद्भिरिभित्तिप्रपातसर्पादिघातरूपे संलेखनां विनाऽपि।

अथैतद्द्विविधमप्यनशनं तपः कृत्स्नकर्मक्षयकरं ज्ञेयं । अत्रार्थे ज्ञातं चेदं–काकन्दीपुर्यां धनसार्थवाहो वसति । तस्यात्मजो धन्यनामाऽस्ति । संप्राप्तयौवनं तं भोगसमर्थं ज्ञात्वा भद्रा द्वात्रिंशतं प्रौढप्रासादान् कारयति । ततो द्वात्रिंशत इभ्यवरकन्यानामेकस्मिन्नेव दिने पाणिग्रहणं कारयति । स ताभिः सह वैषयिकं सौख्यं दोगुन्दकदेव इव बुभुजे । ताभिः सह भोगाननुभवतस्तस्य कियन्ति वर्षाण्यतीतानि । एकदा श्रीवीरश्चतुस्त्रिंशदतिशयैर्विराजितस्तत्र समवसृतः । तदा धन्योऽपि जिनवन्दनोत्सुकः पादचारेण विभोरन्तिके समागात् । जगद्बान्धवं नत्वा देशनां क्लेशनाशिनीं शुश्राव–"यः प्राप्य दुष्प्राप्यमिदं नरत्वं, धर्मं न यत्नेन करोति मूढः । क्लेशप्रबन्धेन स लब्धमब्धौ, चिन्तामणिं पातयति प्रमादात् ॥ १ ॥" इत्यादित्रिकालविदुक्तं मनस्यवधार्य वैराग्यमापन्नो मातुरन्तिके समागत्यैवमवादीत्–"हे मातः । भगवद्धर्मं निशम्याहं विषयेषूद्विग्नस्तवाज्ञया दीक्षामङ्गीकरोमि" । तदा मात्रा मुनिव्रतपालनानुकूलप्रतिकूलोपसर्गसहनविरसाहारकरणादिदुष्करत्वमुक्तं, तथापि भोगान् पुरीषमिव नेच्छति । तदा भद्रा धन्यस्य निष्क्रमणोत्सवमकरोत् । ततो भगवता स्वयमेव दीक्षितः । ततस्तस्मिन्नेव दिने स्वाम्यन्तिकेऽभिग्रहमग्रहीत्—"भगवन् ! भवदाज्ञया निरन्तरं षष्ठतपः कुर्वन् पारणके चोज्झितभिक्षयाऽऽचाम्लं करोमि" । स्वाम्याह—"भो धन्य ! यथासुखं तपसि प्रवर्तस्व" । जिनाज्ञया हृष्टस्तुष्टः सँस्तत्तपसि प्रावर्तत । स धन्यर्षिः प्रथमषष्ठपारणे प्रथमपौरुष्यां स्वाध्यायं करोति, द्वितीयपौरुष्यां ध्यानं, तृतीयपौरुष्यां जिनमापृच्छ्य भिक्षार्थमटन्नाचाम्लान्नं गृह्णाति, नान्यत् काङ्क्षते । एवं भिक्षायै पर्यटन् कदाचि-

भक्तं लभते कदाचित्पानं च, तथाप्यदीनोऽविषादी। यदि क्वापि भिक्षां लभते तदा तां स्वाम्यग्रे प्रतिदर्शयति, स्वामिनाऽनुज्ञातः केवलं देहधारणार्थं तमाहारमश्नाति। एवं तपसा विचरति। तेन स निर्ग्रन्थोऽतिकृशविग्रहो जातः। तस्य शरीरं निर्मांसं शुष्कास्थिसंभृतमङ्गारशकटमिव पथि सञ्चरन् शब्दं करोति। तदा मह्यां विहरन् भगवान् गुणशीलचैत्ये समवसृतः। श्रेणिको राड् वीरवन्दनाय निर्गतः। स्वामिनं नत्वा देशनां निशम्यैवमपृच्छत्—"हे भगवन्! एतेषां मुनीनां मध्ये कोऽनगारो दुष्करकारकः?"। स्वाम्याह—"एतेषामिन्द्रभूतिप्रमुखाणां चतुर्दशश्रमणसहस्राणां मध्ये धन्योऽनगारो महानिर्जरको महादुष्करकारको यो भद्रापुत्रो निरन्तरं षष्ठं कृत्वाऽऽचाम्लेन पारणं करोति" इत्यादिः सकलोऽपि वृत्तान्तः प्रोक्तः। तच्छ्रुत्वा हृष्टः श्रेणिको धन्यान्तिके गतः। मुनिं नत्वा प्राह—"त्वं धन्योऽसि, कृतपुण्योऽसि"। एवं स्तुत्वा राजगृहनगरे समागात्। ततः स धन्यर्षिर्निशायां धर्मजागरिकायां जाग्रदेवमचिन्तयत्—"तपस्या शुष्कदेहोऽहं प्रत्यूषे भगवदाज्ञया विपुलपर्वतं समारुह्य मासिक्या संलेखनयाऽऽत्मानं शोषयित्वा जीवितमरणयोः समानो विचरामि"। ततस्तेन मुनिना तथा कृतं। ततः शुभध्यानेन सर्वार्थसिद्धे महाविमाने देवत्वेनोत्पन्नः। ततो गौतमो जिनं पृच्छति—"भगवन्! भवच्छिष्यो धन्यः कां गतिं गतः?"। "हे इन्द्रभूते! मम शिष्यो धन्य इतः कालं कृत्वा सर्वार्थसिद्धिविमाने गतः, तत्र त्रयस्त्रिंशत्सागरोपमस्थितिं भुक्त्वा महाविदेहक्षेत्रे सुकुलेषूत्पद्य दीक्षां कक्षीकृत्य केवलं लब्ध्वा मोक्षं यास्यति"।

धन्यर्षिणा साम्यतपो द्विभेदं, संसेवितं किल्बिषनिर्जरार्थम् ।
यस्मिन् क्षणे स्वीकृतसाधुभावं, तदुत्तरं प्रोज्झितपुद्गलाशम् ॥ १ ॥
॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंशस्तम्भे
चतुरशीत्युत्तरद्विशततमं २८४ व्याख्यानम् ॥

## पञ्चाशीत्युत्तरद्विशततमं २८५ व्याख्यानम् ॥

अथ द्वितीयतपआचारमाह—

ऊनोदरितपो द्रव्यभावभेदात्मकं परैः । विशिष्याज्ञायमानत्वान्महाफलं निरन्तरम् ॥ १ ॥

स्पष्टः । अत्रार्थसमर्थनार्थमियं भावना—नित्याहारं विदधतामपि साध्वादीनामूनोदरितपसा महाफलं । तत् द्रव्यत उपकरणभक्तपानवैषयिकमूनोदरि, भावतश्चोनोदरि क्रोधादित्यागरूपं । यतः साधुश्राद्धैः कदाचिदपि यथेष्टमाकण्ठं यावद्भारोद्गाराः समायान्ति तादृशं नाशनीयं, नवब्रह्मचर्यगुप्तिमध्ये निषिद्धत्वात् । अपि चोपवासषष्ठाष्टममासक्षपणाद्यनेकतपस्सु द्रव्यतोऽशनादि निषिद्धं, तथापि भावतः क्रोधादित्यागरूपमूनोदर्यवश्यं विधेयं, अन्यथा लङ्घनं स्यात् । यतः—

कषायविषयाहार—त्यागो यत्र विधीयते । उपवासः स विज्ञेयः, शेषं लङ्घनकं विदुः ॥ १ ॥

अत्र द्रव्यत एतत्तपोविधिरयं—एककवलादारभ्य यावदष्टौ कवलाः ऊनोदरिका । अत्र चैककवलमाना जघन्या, अष्टकवलमानोत्कृष्टा, द्व्यादिकवलमाना तु मध्यमा १ । एवं नवभ्य यावद्द्वादशकवलास्तावदपार्धोनोदरिका २ । त्रयोदशारभ्य यावत् षोडश तावद्द्विभागोनोदरिका ३ । सप्तदशादारभ्य यावच्चतुर्विंशतिस्तावत्प्राप्तोनोदरिका ४ । पञ्चविंशतेरारभ्य यावदेकत्रिंशत्कवलास्तावत्किञ्चिदूनोदरिका ५ । जघन्यादिभेदत्रयं सर्वत्र पूर्ववज्ज्ञाव्यं । अनेनानुसारेण पानविषयोनोदरिका भाव्येति । अत्र कवलमानमित्थमुक्तं—

बत्तीसं किर कवला, आहारो कुच्छिपूरउ भणिउं । पुरिसस्स महिलियाए, अट्ठावीसं भवे कवला ॥१॥
कवलस्स य परिमाणं, कुक्कुडिअंडगपमाणमित्तं तु ।
जं वा अविगियवयणो, वयणम्मि बुभिज्ज विसंतो ॥ २ ॥

तथा षष्ठाष्टमादिविशेषतपस्तपनेऽपि पारणे ऊनोदरिकयैव विशेषलब्धयः संभवन्ति । यथा व्रतिनः सनखकुल्माषमुष्टिजलचुलुकमात्रपारणेन षण्मासीं यावत् षष्ठतपसा तेजोलेश्योत्पद्यते इति श्रीपञ्चमाङ्गोक्तश्रीवीरजिनोक्तविधिना मंखलिपुत्रस्य सोत्पेदे । इत्यूनोदरिकतपः आहारानाहारदिनेषु द्रव्यभावाभ्यां यथार्हं प्रत्यहं सेवनीयमिति २ ।

अथ वृत्तिसंक्षेपाह्वतृतीयतपआचारमाह—

वर्तते ह्यनया वृत्ति-र्भिक्षाशनजलादिका । तस्याः संक्षेपणं कार्यं, द्रव्याद्यभिग्रहाङ्कितैः ॥ १ ॥

स्पष्टः । नवरं द्रव्याद्यभिग्रहव्याख्यानं चेदं—वाचंयमो गोचर्यासमये चतुरभिग्रहान् गृह्णाति—द्रव्यतो निर्लेपभिक्षा मयाऽद्य ग्राह्या कुन्ताग्रसंस्थितमेकं मण्डकमोदकाद्येव वा ग्राह्यं, अत्र क्षेमर्षिसाध्वादिज्ञातं वाच्यं १ । क्षेत्रत एकद्विगृहस्थग्रामादिलब्धमेव दायकेन देहलीं जङ्घयोरन्तर्विधाय वा दत्तं ग्रहीष्यामीत्यादयः २ । कालतः पूर्वाह्णादौ सकलभिक्षाचरनिवर्तनावसरे वा पर्यटितव्यं इत्यादयः ३ । भावतो हसनगानरोदनादिक्रियाप्रवृत्तो बद्धो वा यदि प्रतिलाभयिष्यति तदाऽहमादास्ये, न त्वन्यथेत्यादयः ४ । नित्यमभिग्रहाभावेन साधूनां प्रायश्चित्तं भवति । श्राद्धा अपि सचित्ताद्यभिग्रहं गृह्णन्ति । इदं च तपः षष्ठाष्टमादिभ्योऽपि दुःसाधमधिकतरफलं च, यतः षष्ठाष्टमादि नियतं प्रत्याख्यायमानत्वेन निवृत्ताहारेच्छं च, इदं च को वेद कदा द्रव्याद्यभिग्रहपूर्तिर्भाविनीत्यनियतं । तथा पर्यटनमपि अभिग्रहोऽन्तर्ध्यातानुसारेण संपूर्णो जातो न वेति बुद्ध्या, न त्वाहारग्रहणे गाढां प्रीतिं वितनोति । अत्रार्थे श्रीवीरस्वामिज्ञातं श्रीढण्ढणर्षिदृढप्रहारिश्रीशालिभद्रपाण्डवादीनां ज्ञातानि च । भीमपाण्डवेनापि चारित्रं प्रतिपद्य कुन्ताग्रदत्तमेव वाञ्छितं, नान्यथा ।

तस्य पुण्यात्मनः सोऽपि, मासैः षड्भिरपूर्यत ।
न किञ्चिदपि दुर्लभ्यं, सत्त्वनिर्णीतचेतसाम् ॥ १ ॥

श्रीवसन्तपुरे कोऽपि दुर्धरसप्तव्यसनैकचित्तो विषयादिषु विनाशितगृहवित्त एको द्विजो वसति चौर्यकर्मकृत् । लोकैः सुशिक्षितोऽपि पापान्न विरराम । ततो राज्ञा ग्रामाद्बहिर्निष्कासितः चौरपल्ली-

मगात् । तत्र पल्लीशः पुत्ररहितस्तं पुत्रं कृत्वाऽमन्यत । स यस्य प्रहारं करोति स निश्चितं मृत्युमाप्नोति । ततो लोके दृढप्रहारीति नाम पप्रथे । सोऽन्यदा लुण्टाकचक्रेण सार्धं कुशस्थलग्रामलुण्टनाय ययौ । तस्मिन् ग्रामे कश्चिद्दरिद्रविप्रो वसति, तस्य दरिद्रत्वाद्बहून्यपत्यानि सन्ति । अपत्यैः सोऽन्यदा क्षैरेयीं याचितः, तदा कस्यचिदिभ्यगृहतो दुग्धं तण्डुलाँश्च मार्गयित्वा स्वभार्यायै समर्प्य क्षैरेयीं विधाय "सोत्सवदिनमद्य क्षीरान्नं भोक्ष्ये" इति धिया मध्याह्ने स्नानं कर्तुं यावद्गतस्तावत्तत्र धाटी पतिता । केचन चौरास्तस्य विप्रस्य गृहे समागताः किञ्चन न प्रापुः, पुनः कोणे पायसपूर्णं भाजनं दृष्ट्वा गृहीतं । बालका उच्चैः क्रन्दन्तस्ताननुधाविताः । तावज्जनकः स्नात्वा सरितः समागतः, तेन तत्स्वरूपं दृष्टं, रुष्टो विप्रः गृहार्गलं गृहीत्वा राक्षसवद्धावितः, तेन प्रहारेण केचन चौरा व्यापादिताः । दृढप्रहारी तत्स्वरूपं श्रुत्वा त्वरितं तत्रागतः । "अयमस्मदीयान्निहन्ति" इति रोषपरायणः पल्लीशोऽसिना तस्य शिरो लुनाति स्म । ततो गृहमध्ये गच्छन् गवा रुद्धस्तामपि जघान । तद्दृष्ट्वा तस्य द्विजस्य प्रियाऽऽक्रोशवाक्यैरेवं तुतोद— "हे क्रूर पापात्मन् ! किं करोषि ?" । तयाऽतिक्रोशितः पुनः स रुष्टस्तेनैव खड्गेन तस्या उदरमदारयत् । ततस्तस्या उदरात् कम्पमानो द्विधाभूतो बालोऽपि भुवि पतितः । ताँश्चतुरोऽपि तत्कालहतान् समालोक्य तथा तात तात मातर्मातरिति ब्रुवाणान् डिम्भानवेक्ष्याचिन्तयत्—"ईदृग्दुष्कर्मकारिणं मां धिक्, नरकेऽपि नास्ति मम स्थानं, अथैतेषां बालानां कस्त्रायको भवति ? अहं किं वह्नौ विशामि ? किं वा भृगोः पतामि ? येन मम शुद्धिः स्यात् । अहो ! सदाचारं त्यक्त्वा दुष्कर्मपाथेयपथिको जातः"

महावैराग्यादित्थं ध्यायन् ग्रामाद्बहिर्निर्ययौ । तद्ग्रामोद्याने महामुनीन् वीक्ष्य तान्नत्वैवं जगौ—"जग वन् ! ईदृशात् पापात्कथं मे मुक्तिर्भविष्यति ? " । मुनिनोक्तं—संयमे यत्नं कुरु, यतः—

एगदिवसं पि जीवो, पव्वज्जमुवागओ अणन्नमणो ।
जइ वि न पावइ मुक्खं, अवस्स वेमाणिओ होइ ॥ १ ॥ "

मुनितः प्रतिकारं प्राप्य स व्रतमग्रहीत् । ततस्तेन दृढप्रहारिमुनिना महानेकोऽभिग्रहो गृहीतः—

ग्रामेऽत्रैव स्थितः सोढुं, स आक्रोशपरीषहम् । आपापस्मरणं भोक्ष्ये, नेत्यभिग्रहपालकः ॥ १ ॥

स मुनिस्तत्रैव ग्रामे कर्मक्षयाय विजहार । "असौ पापात्मा स्त्रीब्रह्मगोभ्रूणहन्ता ग्रामलुण्टक" इत्युक्त्वा लोकस्तं मुनिं तर्जयति, लेष्टुयष्ट्यादिभिश्च प्रत्यहं ताडयति, तत्सर्वं धरित्रीव सहते शान्तिरसाधिक्येन । निजपातकं संस्मृत्य भोजनं न चक्रे । अस्य षण्मासान्ते शमेनारुणेन ध्वस्ते तमोभरे इमां भावनामभा-वयत्—"रे आत्मन् ! यादृशं बीजमुप्यते तादृक् फलमाप्यते । अत्र न पौराणां दोषः, किंत्वमी मदी-यदुष्कर्मग्रन्थिं परुषभाषितादिभिः क्षारैरिव चिकित्सन्तो नितान्तं मम सुहृदः । एवं ममैते ताडनं कुर्वन्तु यदिदं खलु स्वर्णस्येवाग्नियोगः मलिनत्वं व्यपोहति । पुनरयं पुरजनो मां दुर्गतिकारागारतः कर्षन् स्वात्मानं तत्र प्रक्षिपति, परोपकारिणे तस्मै कथमहं कुप्यामि ? पुनर्निजपुण्यव्ययेन ये मत्पापानि व्यपो-हन्ति तेभ्यः परमबान्धवेभ्यो दूषणं न देयं । अपि चैतत्प्रेरितवधबन्धनादयः संसारमोचकत्वान्मम हर्षाय जायन्ते, एषां तु तदेवानन्तसंसारहेतुः इति मामत्यन्तं दुनोति । तथा च पौरैस्तर्जितोऽहं, परं

हतो नास्मि, हतो वा नास्मि मारितः; मारितो वा न मम धर्मो बान्धवैरिवापहृतः । अपि चेमे मदात्मगृहप्रविष्टाननादिकालस्थान् भावचौरान्निष्कासितुं साहाय्यं तन्वन्ति" । इत्यादिशुभध्यानपरः क्षपकश्रेण्यारूढः केवलज्ञानभानुद्युतिमद्योतयत्स्वात्मनि ॥

अहो लोकोत्तरः कोऽपि, तपःकुम्भोद्भवः प्रभुः ।
नाविर्भवेत्पुनर्येन, शोषितः कर्मवारिधिः ॥ १ ॥
मृत्तिका यत्र तत्रैव, पततीत्यन्यथा न हि ।
तेन यत्रार्जितं कर्म, स्थाने तत्रैव निष्ठितम् ॥ २ ॥
केवली सुरगणेन निर्मिते, स्वर्णपङ्कजपदे स्थितश्च यः ।
तत्तपःस्तुतिवचोऽमृतैः शुभै-र्भव्यजन्तुसुमहीमसिञ्चयत् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंशस्तम्भे पञ्चाशीत्यधिकद्विशततमं २८५ व्याख्यानम् ॥

## समाप्तोऽयमेकोनविंशः स्तम्भः

## ॥ विंशतितमः स्तम्भः ॥

### षडशीत्यधिकद्विशततमं २८६ व्याख्यानम् ॥

अथ चतुर्थं रसत्यागाह्वतपआचारमाह—

विकृतिकृद्रसानां यत्त्यागो यत्र तपो हि तत् ।
गुर्वाज्ञां प्राप्य विकृतिं, गृह्णाति विधिपूर्वकम् ॥ १ ॥

स्पष्टः । विकृतिकृद्रसा दुग्धदधिघृततैलगुरुपक्वान्नादयो भक्ष्याः, मधुमांसमद्यम्रक्षणा अभक्ष्याः, तेषां त्यागः सर्वेषां कियतां वा सर्वदा वर्षपर्वतिथिषण्मासीचतुर्मास्याद्यवधि वा वर्जनं विकारहेतुत्वात् । कदाचित्कारणे उत्पन्ने विकृतिरसं गृह्णाति तदाऽपि गुरुपृच्छादिविधिपूर्वकमेव, यतो निशीथचूर्णौ—"विणयपुव्वं गुरुं वंदिऊण भणइ—इमेण कारणेन इमं विगइं एवइअं पमाणेणं इत्तियं कालं तुम्भेहिं अणुन्नाए भोत्तुमिच्छामि, एवं पुच्छिए अणुन्नाए पच्छा भिक्खं पविट्ठो गहणं करेइ त्ति"। रसत्यागो हि यावज्जीवमपि निर्वहति, उपवासादि तु कियत्समयमेवैतच्च लोकेऽपि बहवः कुर्वन्ति, रसत्यागं तु ज्ञाततत्त्वा एवेत्युपवासादिभ्योऽप्यस्याधिकलाभत्वं । अत एवानेके व्रतिनो विकृतित्यागं विदधति । यथा श्रीनाभेयात्मजया सुन्दर्या षष्टिसहस्रवर्षाणि यावदाचाम्लैः सर्वविकृतित्यागः कृतः । यथैकोनविंशतितमश्रीमन्मानदेवसूरिपदस्थापनावसरे यत्स्कन्धयोरुपरि निःस्पृहादिगुणेन प्रसन्नीभूते भारतीलक्ष्म्यौ साक्षाद्वीक्ष्य चारि-

त्रादस्य भ्रंशो भावीति विचारणया विषण्णचित्तं गुरुं विज्ञाय येन भक्तकुलभिक्षा सर्वाश्च विकृतयस्त्यक्ताः। तत्तपसा नड्डुलपुरे पद्माजयाविजयाऽपराजिताभिधानाभिश्चतसृभिर्देवीभिः पर्युपास्यमानं वीक्ष्य "कथं नारीभिः परिकरितोऽयं सूरिः ?" इतिशङ्कापरायणः कश्चिन्मुग्धस्ताभिरेव शिक्षितः। ततस्ताभिर्गुरवः प्रेरिताः—"स्वामिन् ! किञ्चित्कार्यमस्माकं समादिश"। सूरिभिः प्रोक्तं—"सङ्घोपद्रववारणार्थं लघुशान्तिस्तोत्रं युष्मन्नामगर्भितं विदधामि, तस्याधिष्ठातृत्वं युष्माभिः स्वीकार्यं" इति गुरुवाक्यं ताभिरङ्गीकृतमिति। अथ व्यतिरेकयुक्तिमाह—ये रसत्यागं न कुर्वन्ति ते मङ्गुसूर्यादिवन्महतीं हानिं प्राप्नुवन्ति-तथाहि—मथुरायां मङ्गुनामाचार्यः साधुपञ्चशतीपरिवृत आस्ते। जनास्तदुपदेशगुणै रञ्जितास्तदा तं युगप्रधानमाहुः। यतः—

> विहाय कार्यान्तरमन्तराय—मन्याननादृत्य मुनीनशेषान्।
> भक्त्या वशीभूत इवातिभूरिः, सूरिं सिषेवे हि जनस्तमेव ॥ १ ॥

ते जनाः स्निग्धमधुराद्यशनादिभिर्नित्यं सेवन्ते। क्रमेण कर्मवशाद्रसलौल्यं जातं, तेन नित्यावासं प्राप। ततः कालान्तरे सातगौरवाद्विहारोपदेशादिक्रियालसो जातः, ऋद्धिगौरवान्मिथ्याभिमानी यथार्हविनयाद्यलसोऽभूत्, रसगौरवात्तु क्षेत्रकुलादिसंसक्तीभूय गोचरीगवेषणालसो जातः। क्रमेण तत्रैव मृत्वा नगरनिर्धमनप्रत्यासन्नयक्षायतनाधिष्ठायकत्वेन व्यन्तरो जज्ञे। विभङ्गेनावलोक्य पूर्वभवं संजातपश्चात्तापोऽधुनेदं प्राप्तकालमिति संचिन्त्य साधूनां बहिर्गच्छतां पुरतो यक्षप्रतिमामुखान्महतीं जिह्वां

निःसारयामास । प्रतिदिनमेवं करोति । एकदा साहसिकसाधुनैकेन पृष्टं—"कस्त्वं भोः ? कथं रसनामाकृष्य दर्शयसि ?"। ततः सविषादं यक्षः प्रकटीभूयोवाच—"अहं धर्माध्वपङ्गुर्भवद्गुरुरार्यमङ्गुनामा प्रमादान्मूलक्षतिं प्राप्य महाव्रतभङ्गं विधायात्र पुरनिर्धमने यक्षो जातः । भवद्भिरपि महारसलाम्पट्यमपरैर्न भाव्यं, जिह्वास्वादेन पतितोऽहं इति ज्ञापनायैवं करोमि" इति श्रुत्वा ते सविस्मया रसत्यागतपस्युद्यतधियो बभूवुः । सर्वेषां पुरस्त इत्युपदेशं वितन्वन्ति—"इन्द्रियजयो हि पुंसां परमसंपद्धेतुः । यतः—

इन्द्रियाण्येव तत्सर्वं, यत्स्वर्गनरकावुभौ । निगृहीतविसृष्टानि, स्वर्गाय नरकाय च ॥ १ ॥

रणजेतारस्तु बहवो वीक्ष्यन्ते, परमिन्द्रियजेतारो दुर्लभाः, यथा—

शतेषु जायते शूरः, सहस्रेषु च पण्डितः । वक्ता शतसहस्रेषु, दाता भवति वा न वा ॥ १ ॥

न रणे निर्जिते शूरो, विद्यया न च पण्डितः । न वक्ता वाक्पटुत्वेन, न दाता धनदायकः ॥ २ ॥

इन्द्रियाणां जये शूरो, धर्मं चरति पण्डितः । सत्यवादी भवेद्वक्ता, दाता भीताभयप्रदः ॥ ३ ॥

तथा सकलेन्द्रियजयमूलकारणं रसनेन्द्रियजयः । तज्जयस्तु तादृशाहारव्याहारव्यवस्थया कार्यः । आहारोऽनिन्द्यकर्मसंपन्नः परिमितः कुशलक्रियाप्रवृत्त्यर्थमाहारयितव्यः । अत्याहारेण नवनवमनोरथप्रवृद्धिः प्रबलनिद्रोदयः सतताशुचिता देहावयवगौरवं समग्रक्रियोपरमः प्रायः सरोगता चेति कृत्वा निरन्तरमतृप्तमेव स्थाप्यं रसनेन्द्रियं । अस्मिन्नतृप्तेऽपराणि सर्वाणि तृप्तान्येव स्वस्वविषयनिवृत्तेः, तृप्ते च सर्वाण्यतृ-

१ व्याहारो वचनम्.

माण्येव स्वस्वविषयप्रवृत्त्यौत्सुक्यदर्शनात् । जिह्वेन्द्रियमुत्कलो मङ्गुसूरिरनेकदुर्गतिदुःखमवाप । तथा कण्डरीकमुनिः रसनालौल्यात्सहस्रवर्षानुष्ठितसंयमाचारमहारयत् । अतो रसत्यागतपोऽवश्यं साधुश्राद्धै-र्विधेयमिति ॥

अथ कायक्लेशाह्वतपःपञ्चमाचारमाह—

वीरासनादिना क्लेशः, कायस्यागमयुक्तितः । तनुबाधनरूपोऽत्र, विधेयस्तत्तपः स्मृतम् ॥ १ ॥

स्पष्टः । नवरं वीरासनं, आदिशब्दादुत्कटिकासनादिकं केशोल्लुञ्चनं च ।

वीरासणउक्कुडुआसणाइं लोआइओ य विन्नेओ । कायकिलेसो संसारवासनिव्वेअहेउ त्ति ॥ १ ॥

लोचवर्णनं त्वन्यैरप्युक्तं—

पश्चात्कर्म-पुरःकर्मजीवहिंसापरिग्रहाः । दोषा ह्येते परित्यक्ताः, शिरोलोचं प्रकुर्वता ॥ १ ॥

लोचस्तु द्विविधः स्थानाङ्गागमे प्रोक्तः, तथाहि—पञ्चेन्द्रियजयनं चतुष्कषायत्यजनं, एतन्नवविधं भावलुञ्चनं, दशमं केशलुञ्चनं द्रव्यसत्कं ज्ञेयं, तन्नवविधभावलुञ्चनपूर्वं ग्राह्यं । अत्र चतुर्भङ्गी—यथा कश्चित्प्रथमं भावलोचं कृत्वा पश्चाद्द्रव्यलोचं करोति साधुरेव साधुर्भवति, अत्र जम्बूस्वाम्यादयोऽवदाताः । कश्चित्प्रथमं भावलोचं विधाय द्रव्यलोचं न विदधाति, अत्र मरुदेव्यादयो दृष्टान्ताः । कश्चित्प्रथमं द्रव्यलोचं कृत्वा पश्चाद्भावलोचं करोति, द्रमकसाध्वादिवत् । कश्चित्प्रथमं द्रव्यलोचं करोति पश्चान्न भावलोचं, अत्रार्थे उदायिनृपमारकविनयरत्नज्ञातं आधुनिकवेषधारिज्ञातं वा जीविकार्थं गृहीतलिङ्गज्ञातं वेति ।

ननु परिषहेन्यः कोऽस्य विशेषः? उच्यते—परिषहाः स्वपरकृतक्लेशरूपाः, कायक्लेशस्तु स्वकृतक्लेशानुजवरूप इति विशेषः। कायक्लेशे प्रत्यहं कर्मक्षयादिगुणः, अत एव छद्मस्थजिनकल्पिकादयः प्रायो निरन्तरमूर्ध्वस्था एव तिष्ठन्ति। यदाप्युपविशन्ति तदाप्युत्कटिकादिविषमासनेनैव। तज्जवसिद्धिगामिश्रीवीरप्रजुणा इदं तपः सम्यगुपात्तं। यथा श्रीज्ञातपुत्रश्छद्मस्थावस्थायां पञ्चदशदिनाधिकसार्धद्वादशवर्षमध्ये पर्यस्तिकां विधाय न कदापि क्षणमुपविष्टः, मुहूर्त्तमात्रनिद्रां चोर्ध्वस्थ एव चकारेति। अपि च कायक्लेशतपोऽपि सिद्धान्ताविरोधयुक्तितः कृतं सार्थकं, अन्यथाऽज्ञानतपस्विनो बहुविधं कायक्लेशं सहन्ते, पञ्चाग्निसाधनं कमठादिवत्। सूर्याजिमुखन्यस्तनेत्राज्यामूर्ध्वबाहुधारणं श्मश्रुवर्धनमूर्ध्वौ पादौ वृक्षशाखायां बद्ध्वाऽधोमुखीजूय महाकष्टं कुर्वन्ति, पूरणजमदग्निकौशिकादिवदिति तत्सर्वं निरर्थकं, आप्तागमयुक्तिविकलत्वादिति॥

यस्मिन् जवे सिद्धिमवश्यमाप्स्यति, एतत्तपस्तत्र जवे तनोत्यपि।
श्रीवीतरागोऽपि सदागमाश्रितं, नित्यं समाराध्यमतस्तपोऽर्थिनिः॥ १॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ विंशस्तम्भे षडशीत्यधिकद्विशततमं २८६ व्याख्यानम्॥



## सप्ताशीत्यधिकद्विशततमं २८७ व्याख्यानम् ॥

अथ संलीनताह्वं षष्ठतपआचारमाह—

इन्द्रियादिचतुर्भेदा, संलीनता निगद्यते । बाह्यतपोऽन्तिमो भेदः, स्वीकार्यः स्कन्दकर्षिवत् ॥ १ ॥

स्पष्टः । नवरं संलीनता गुप्तता विविक्तशयनासनेत्यर्थः । सा चतुःप्रकारा । तत्स्वरूपं चेदं पूर्वसूरिस्तुतं—

इंदियकसायजोए, पडुच्च संलीणया मुणेयव्वा । तह य विवित्तचरिया, पन्नत्ता वीयरागेहिं ॥ १ ॥

तत्र श्रवणेन्द्रियेण शब्देषु मधुरामधुरादिभेदेषु रागद्वेषाकरणं श्रोत्रेन्द्रियसंलीनता । एवं चक्षुरादीन्द्रियेष्वपि भावनीयं १ । कषायसंलीनता कषायाणामनुदीर्णानामुदयनिरोधेन उदीर्णानां च निष्फलीकरणेन विज्ञेया २ । योगसंलीनता पुनर्मनोवाक्कायलक्षणा योगानामकुशलानां निरोधः कुशलानां चोदीरणं ३ । विविक्तशयनासनतारूपा पुनः संलीनताऽऽरामादिषु स्त्रीपशुपण्डकादिरहितेषु यदवस्थानं ४ । इति चतुर्विधाऽप्यसौ पाल्या, ये न पालयन्ति ते श्रुतमात्रधर्मग्राहितापसवन्महादुःखपरंपरां लभन्ते । तथाहि—

क्वचिद्ग्रामे कश्चिद्द्विजः पापभीरुस्तापसत्वं प्रपेदे । श्रुतं चानेन कृपया धर्म इति । अन्यदा कोऽपि तापसः सन्निपातरोगार्त्तोऽभूत् । चिकित्सकेन शीतवारिपानं निवारितं । अन्यदा तापसेषु क्वापि गतेषु स

गदार्तः नव्यतापसस्य पार्श्वे शीतं वारि प्रार्थयत्। कृपया धर्म इति कृत्वा दत्तं तेन, प्राप्तोऽतिक्लेशं रोगी। आक्रुष्टश्च नव्यतापसोऽपरैः—"रे मूर्ख! हतोऽसौ त्वया। किं वा न संजात्व्यमज्ञानिन इति"। चिन्तितं च तेन—"अज्ञान्यहमस्मि, तज्ज्ञानमधीये"। तत्पठता तेनेति श्रुतं—"तपश्चर्यां विना ज्ञानं निरर्थकं, तपसा ज्ञानावाप्तिः। यतस्तपस्विनः प्रपश्यन्ति त्रैलोक्यं सचराचरं" इति श्रुत्वा स्वाधीनं तत्तपः करोमीति कस्यापि अनाख्याय गतः पर्वतगुप्तां गुहां। तत्र तपः प्रारब्धं, कन्दमूलफलादेरपि त्यागेनातिक्रान्तेषु कियत्स्वपि वासरेषु क्षुधापीडितः कण्ठगतप्राण एकदा तद्गवेषणपरैस्तापसैः प्रेक्षितः, उक्तं च—"न खल्वनया रीत्या तपः क्रियते, शरीरमाद्यं खलु धर्मसाधनमितिवचनात्समाधानं हि धर्मस्य मूलं"। इति श्रुत्वा ततः समाधाने यत्नं करोमीत्यगमद्ग्रामं सः। लेभे च पूजां भक्तजनेभ्यः। कियद्भि-र्दिनैर्लब्धं धनं। ज्ञातस्वरूपैश्च धूर्तैः प्रारब्धः परिचयः। तद्विश्वासं गतेन तेनाख्यातः स्वाभिमतस्तत्पुरः समाधानमूलो धर्मः—"यदि कञ्चनकामिन्यादि लब्धं तदाऽनुभवनीयं, यदि न लब्धं तदा तत्स्पृहा-तिरेकः पूर्वं पश्चाद्वा न ध्येयः" इति समाधानार्थं श्रुत्वा तैर्धूर्तैर्लब्धोपायैर्गणिकाढौकनादिप्रयोगेणापहृतं तद्धनं। ज्ञातं च लोकैः, निर्घाटितश्च। एवं श्रुतमात्रग्राही वचनभावार्थानालोचकः शास्त्रोपदेशानाम-योग्यः चतुर्विधसंलीनतातपोरहस्याज्ञश्चानेकभवपरंपरां प्राप्नोति।

अथ श्लोकोक्तं चतुर्धासंलीनतातपःसमन्वितस्कन्दकतापससाधुज्ञातं, तथाहि श्रीपञ्चमाङ्गानुसारेण—

कयङ्गलापुर्युद्याने श्रीवीरः समवसृतः, तत्पुरसमीपे श्रावस्तीभङ्गे स्कन्दकपरिव्राजको वसति स्म

समस्तद्विजशास्त्रज्ञश्च । एकदा वैशालिकशिष्यः पिङ्गलनिर्ग्रन्थः स्कन्दकमिति पप्रच्छ—"भोः स्कन्दक ! किं लोकः सान्तोऽनन्तो वा ? जीवोऽपि सान्तोऽनन्तो वा ? सिद्धिश्च सान्ताऽनन्ता वा ? सिद्धोऽपि सान्तोऽनन्तो वा ? केन वा मरणेन जीवः संसारवृद्धिं हानिं च लभते" ? । इति श्रुत्वा स स्याद्वादतत्त्वाज्ञो मौनं दधौ । एवं पुनः पुनस्त्रिवारं पृष्टं, तथाप्युत्तरदानेऽक्षमोऽभूत् । इतश्च श्रावस्तीजनाः श्रीवैशालिकवन्दनाय गच्छन्तस्तेन दृष्टाः । ततः सोऽपि श्रीवीरशिष्यपृष्टप्रश्नार्थं ज्ञातुकामस्त्रिदण्डं कमण्डलुं वृक्षपल्लवग्राह्यङ्कुशं रुद्राक्षमालां गैरिकवस्त्राणि चेत्यादिस्वोपकरणान्यादाय त्रैशलेयसमीपे गमनार्थं संकल्पं कृतवान् । तदा श्रीजिनो गौतमं प्राह—"अद्य पूर्वसंगतिकमित्रस्कन्दकमिलनं तव भावि" । "स्वामिन् ! कस्यां वेलायां ? " । प्रभुः स्माह—"अधुना स मार्गान्तराले समेतोऽस्ति" । "हे स्वामिन् ! स युष्मच्छिष्यो भावी ? " । स्वामी प्राह—"भविता" । तदनु गौतमस्तस्याभिमुखं ययौ क्षिप्रं समागत्य तमिति स्माह—"हे स्कन्दक ! स्वागतं तव वर्तते" । अत्र गणभृताऽसंयतं प्रति अभ्युत्थानादि कृतं तदनेकलाभदं वीक्ष्य प्रथमं स्वगुरुज्ञानातिशयदर्शनार्थं यद्वाऽऽसन्नभतभावार्हं तं वीरवाक्यतो निर्धार्य स्वात्मनि क्षीणरागत्वसूचनार्थं एतद्विहितं । ततो "हे पूर्वसङ्गतिकमित्र ! त्वं पिङ्गलपृष्टप्रश्नार्थं मद्धर्माचार्यान्तिकं समागतोऽसि" । स पप्रच्छ—"युष्माभिरेतन्मन्मनोगतं कथं ज्ञातं?"। गणभृदाह—"अस्मद्गुरुस्त्रैकालिकं रहःकृतं प्रत्यक्षं कृतं करिष्यमाणं वा सर्वं जानाति, साद्यनन्तभङ्गयुक्तं

१ महावीरशिष्यः.

ज्ञानमस्ति, तद्वाक्यतोऽहं वेद्मि" । स प्राह—"तर्हि तव धर्माचार्यसमीप आवां व्रजावः" । ततो गणेशेन सह तत्रागतः । श्रीवीरेणापि तथैवोदितः स तत्प्रश्नार्थं सर्वज्ञप्रत्ययार्थं पप्रच्छ । स्वाम्युवाच—लोको द्रव्यादिचतुर्भेदः, द्रव्यत एको लोकः पञ्चास्तिकायात्मकः सान्तः परिमाणयुक्तः, क्षेत्रतो लोक आयामविष्कम्भपरिक्षेपैरसङ्ख्ययोजनकोटीकोटिमितः, अत एव सान्तः, कालतोऽनाद्यपर्यवसितः, न कदाचिन्नासीन्न भवति न भविष्यति, अतीतकालेऽभूत् वर्तमानकाले वर्तते भविष्यत्काले वर्तिष्यत इति, अतः सदा नित्यः शाश्वतश्चेति, भावतोऽनन्तो लोकः, अनन्तवर्णगन्धादिपर्यायान्वितत्वात् । जीवोऽपि द्रव्यत एको नित्यश्च, क्षेत्रतोऽसङ्ख्यप्रदेशावगाढः सान्तश्च, कालतोऽनन्तः शाश्वतस्त्रिकालेष्वपि, भावतोऽनन्ता रत्नत्रयीपर्यायास्तैर्युतः, आद्यत्रिशरीराण्याश्रित्यानन्ता गुरुलघुपर्यायाः, अन्त्ये द्वे शरीरे आश्रित्यानन्ता अगुरुलघुपर्यायाश्च तैर्युतः, अतो भावतोऽपर्यवसितश्चेति । तथा सिद्धिः अत्र सिद्धजीवासन्नक्षेत्रा सिद्धशिला ग्राह्या, सा द्रव्यत एका सान्ता ध्रुवा, क्षेत्रतः पञ्चचत्वारिंशल्लक्षयोजनमिताऽऽयामविष्कम्भाभ्यां, कालतोऽनाद्यपर्यवसिता, भावतोऽनन्तवर्णादिपर्यायान्विता चेति । तथा सिद्धः सकलकर्मक्षयात्प्राप्तात्मस्वरूपः, स द्रव्यत एकः सान्तः, क्षेत्रतोऽसङ्ख्यप्रदेशावगाढः, कालतः सिद्धः सादिरपर्यवसितः, भावतोऽनन्तज्ञानादिपर्यायान्वितोऽनन्तश्चेति । इति श्रुत्वा पुनः केन मृत्युनाऽऽत्मा संसारवृद्धिं तद्धानिं च करोति ? इति प्रश्नं चकार । भगवानुवाच—बालमरणेन संसारवृद्धिः स्यात्, पण्डितमरणेनैव भवसंततिहानिः स्यात् । तत्र बालमरणं द्वादशविधं, तत्करणेन चातुर्गतिकसंसारकान्तारेऽटति

क्षुधादिपीडितः, अथवा संयमतः पतित्वा मृत्युं प्राप्नोति तद्वलत्पञ्चत्वं १। पञ्चेन्द्रियवशार्तो मृत्युं प्राप्नोति तद्वशार्तपञ्चत्वं २। अन्तःशल्यमरणं ३। नरः स्वभवनिदानं कृत्वा मृत्युं प्राप्नोति तत्तद्भवपञ्चत्वं ४। गिरिपतनतः ५, तरुतः पतनेन ६, जलप्रवेशेन ७, ज्वलनमध्ये प्रविश्य ८, विषभक्षणेन ९, शस्त्रेण १०, वृक्षशाखायां पाशं बद्ध्वा ११, गृध्रपक्षिहस्त्यादिप्रहारेण मृत्युं प्राप्नोति तद्गृध्रपृष्ठखाद्यं १२ इति। पण्डितमरणं द्विविधं—पादपोपगमनं १, भक्तप्रत्याख्यानं २ च, आभ्यामनन्तभवहानिः स्यात्। इति श्रुत्वा गतसंदेहः स जिनं त्रिः प्रदक्षिणीकृत्य स्माह—"अवितथमेतद्वाक्यं"। तत ईशानकोणे एकान्ते स्वोपकरणानि विमुच्य श्रीजिनान्तिके दीक्षामादाय एकादशाङ्गान्यधीत्य श्रीप्रभोरनुज्ञां गृहीत्वा द्वादश प्रतिमा उवाह। ततो जिनानुज्ञां संगृह्य गुणरत्नसंवत्सरतपोऽङ्गीचकार। तत्र प्रथममासे उपवासेन पारणं निरन्तरमिति तपो विधेयं। द्वितीयमासे षष्ठषष्ठतपसा पारणं विधेयं। इत्यादि यावत् षोडशे मासे षोडशोपवासैः पारणमिति। दिवसे उत्कटिकासनेन सूर्याभिमुखातापनां गृह्णन् विचरति। रात्रौ वीरासनेन निर्वस्त्रः सन् विचरति। अस्मिंस्तपसि द्वासप्ततिः पारणादिवसा भवन्ति। तथा बहुषष्ठाष्टमार्धमासक्षपणैरात्मानं भावयन् शुष्को निर्मांसो जीवबलेन गतिं कुर्वन् भाषां च वदन् ग्लानत्वं प्राप्नोति। काष्ठभृतशकटमिव पत्रभृतशकटमिव एवं तिलैरण्डकाष्ठाङ्गारभृतशकटमिव सशब्दं गच्छति उपविशति च। एकदा धर्मजागरिकायां पाश्चात्यरात्रौ ध्यातवान्—"अहमनशनमङ्गीकरोमि"। ततः प्रभाते जाते श्रीजिनानुज्ञामादायातिहृष्टः शनैः शनैर्विपुलपर्वतमारुह्य पृथ्वीशिलापट्टं प्रमृज्य दर्भसंस्तारकारूढः

पूर्वाभिमुखः पद्मासनस्थो योगमुद्रया "नमोऽत्थु णं" इत्याद्युक्त्वाऽऽह—"स्वामिन् ! तत्र स्थिता यूयं मामत्रगतं पश्यत । पूर्वं युष्मदन्तिके मया पञ्चमहाव्रतान्यङ्गीकृतानि, इदानीमपि युष्मत्साक्ष्यमष्टादश-पापस्थानानि चतुर्विधाहारं च प्रत्याख्यामि । चरमश्वासोच्छ्वासं यावद्व्युत्सृजामि" । इत्थमालोच्य प्रति-क्रम्य च मासिकसंलेखनया कालमनवकाङ्क्षमाणो द्वादश वर्षाणि दीक्षामाराध्य कालधर्मं प्राप्याच्युतस्वर्ग-माप । तत्र महदायुः[1] परिपाल्य नरत्वं प्राप्य विदेहे सेत्स्यति, समस्तदुःखान्तं करिष्यतीति ॥

संलीनताशुद्धतपश्चतुर्विधं, धृत्वा शुभं स्कन्दकसाधुराप सः ।
संलेखनासादितकल्पमन्तिमं, श्रीवीरशिष्यो विपुलाख्यपर्वते ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंश-स्तम्भे सप्ताशीत्यधिकद्विशततमं २८७ व्याख्यानम् ॥

## अष्टाशीत्यधिकद्विशततमं २८८ व्याख्यानम् ॥

अथ षड्विधाभ्यन्तरतपोभेदेषु प्रथमं प्रायश्चित्ताह्वतपोभेदं सप्तमाचारमाह—

गीतार्थादिगुणैर्युक्तं लब्ध्वाऽऽचार्यं विवेकिना । प्रायश्चित्ततपो ग्राह्यं पापफलप्ररोधकम् ॥ १ ॥

स्पष्टः । नवरं गीतार्थोऽधिगतनिशीथादिश्रुतभावार्थः । आदिशब्दात्कृतयोगादिगुणयुक्तं । उक्तं च—

[1] द्वाविंशतिसागरोपमाणि.

गीयत्थो कडजोगी, चारित्ती तहय गाहणाकुसलो ।
खेअन्नो अविसाई, भणिओ आलोअणायरिओ ॥ १ ॥

गीतार्थो ज्ञातसमस्तसिद्धान्तार्थः । कृतोऽभ्यस्तो योगो मनोवाक्कायव्यापारो विविधतपो वा यस्यास्ति स कृतयोगी । चारित्री निरतिचारसंयमी । ग्राहणा बहुयुक्तिभिरालोचनाऽऽदायकानां विविधप्रायश्चित्तादितपोविधेरङ्गीकरणं तत्र कुशलः । खेदः सम्यक्प्रायश्चित्तविधेः परिश्रमोऽभ्यासस्तं जानातीति खेदज्ञः । अविषादी अनेकेष्वप्यालोचकस्य दोषेषु श्रुतेषु न विषादवान्, प्रत्युतालोचनाऽऽदायकस्य तत्तन्निदर्शनगर्भवैराग्यवाक्यैरुत्साहक इत्यर्थः । अत एव गीतार्थगवेषणाऽवश्यं कार्या । उक्तं च—

आलोअणानिमित्तं खित्तम्मि सत्तजोयणसयाइं ।
काले बारसवासा गीअत्थगवेसणं कुज्जा ॥ १ ॥
अगीओ न वि जाणइ सोहिं चरणस्स देइ ऊणहियं ।
तो अप्पाणं आलोअगं च पाडेइ संसारे ॥ २ ॥
अखंडियचारित्तो वयगहणाओ हविज्ज जो निच्चं ।
तस्स सगासे दंसणवयगहणं सोहिगहणं च ॥ ३ ॥

एवंविधं गुरुं प्राप्यावश्यं प्रायश्चित्तं स्वीकार्यं । आलोचनाग्रहणार्थं गच्छन्मार्गे कदाचिदायुःपूर्त्या कालं प्राप्नोति तथापि पञ्चमाङ्गे आराधकः प्रोक्तः । यतः—

आलोयणापरिणउ सम्मं संपट्ठिउ गुरुसगासे । जइ अंतराऽवि कालं करिज्ज आराहउ तहवि ॥ १ ॥
कदाचिदाचार्यादीनां योगो न लभ्यते तदा सिद्धसमक्षमप्यालोचयेत् उक्तं च—

आयरिआइ सगच्छे, संभोइअ इयर गीयत्थपासत्थे ।
सारूवी पच्छाकड, देवयपडिमा अरिहसिद्धे ॥ १ ॥

साधुना श्राद्धेन च नियमतः प्रथमं स्वगच्छे सूरेः, तदप्राप्त्या पाठकस्य, एवं प्रवर्तिनः स्थविरस्य गणावच्छेदिनो वा समीपे आलोच्यं। स्वगच्छे पञ्चानामप्यभावे सांभोगिके एकसामाचारिके गच्छान्तरे आचार्यादिक्रमेणालोच्यं । तेषामप्यभावे इतरस्मिन् सांभोगिके संविग्नगच्छे स एव क्रमः, तेषामप्यभावे गीतार्थपार्श्वस्थस्य, तस्याप्यभावे गीतार्थसारूपिकस्य, तस्याप्यभावे गीतार्थपश्चात्कृतस्य समीप आलोच्यं । सारूपिकः शुक्लाम्बरो मुण्डोऽबद्धकच्छो रजोहरणरहितोऽब्रह्मचर्योऽभार्यो भिक्षाग्राही, सिद्धपुत्रस्तु सशिखः सभार्यश्च, पश्चात्कृतस्त्यक्तचारित्रवेषो गृहस्थः । पार्श्वस्थादेरपि गुरुवद्वन्दनकप्रदानादिविधिः कार्यः, विनयमूलत्वाद्धर्मस्य । यदि तु पार्श्वस्थादिः स्वं हीनगुणं पश्यन् वन्दनकं न कारयति तदा तस्य निषद्यामारचय्य प्रणाममात्रं कृत्वाऽऽलोच्यं । पश्चात्कृतस्य चेत्वरसामायिकारोपणं लिङ्गप्रदानं च कृत्वा यथाविध्यालोच्यं । पार्श्वस्थादीनामप्यभावे यत्र राजगृहगुणशीलादावर्हद्गणधराद्यैर्बहुशः प्रायश्चित्तं प्रदत्तं यया देवतया दृष्टं, तत्र तस्याः सम्यग्दृष्टेरष्टमाद्याराधनेन प्रत्यक्षाया आलोच्यं । जातु सा च्युता, अन्योत्पन्ना तदा सा महाविदेहेऽर्हन्तं पृष्ट्वा प्रायश्चित्तं दत्ते । तदयोगेऽर्हत्प्रतिमापुर आलोच्य स्वयं

प्रायश्चित्तं प्रतिपद्यते तासामप्ययोगे पूर्वोत्तराभिमुखोऽर्हत्सिद्धसमक्षमप्यालोचयेत्, न त्वनालोचित एव तिष्ठेत्, सशल्यस्यानाराधकत्वात्, इत्यादिकं व्यवहारसूत्रेऽपि व्याख्यानं विद्यते । आलोचनागुणा अनेके सन्ति । यतः—

लहुआ १ ह्लादजणणं २ अप्पपरनिवित्ति ३ अज्जवं ४ सोही ५ ।
दुक्करकरणं ६ आणा ७ निस्सल्लत्तं ८ च सोहिगुणा ॥ १ ॥

यथा भारवाहिनो भारेऽपहृते लघुता तथा शल्योद्धारे आलोचकस्यापि १ । आह्लादजननं प्रमोदोत्पादः २ । आत्मपरयोर्दोषेभ्यो निवृत्तिः, आलोचनाऽऽदाने हि स्वयं दोषनिवृत्तः प्रत्युत तं वीक्ष्यान्येऽपि तदभिमुखाः स्युः इत्यन्येषामपि दोषेभ्यो निवृत्तिः ३ । आर्जवं निर्मायता सम्यगालोचनात् ४ । शोधिः शुद्धताऽतिचारमलापगमात् ५ । दुष्करकरणं दुष्करकारिता, यथा यत्प्रतिसेवनं तन्न दुष्करमनादिभ्यस्तत्वात्, यत्पुनरालोचयति तद्दुष्करं प्रबलमोक्षानुयायिवीर्योल्लासेनैव तस्य कर्तुं शक्यत्वात् । निशीथचूर्णावुक्तं—"तं न दुक्करं जं पडिसेविज्जइ, दुक्करं जं सम्मं आलोइज्जइ त्ति" । अत एवाभ्यन्तरतपोभेदरूपं सम्यगालोचनं मासक्षपणादिभ्योऽपि दुष्करं ६ । अत्र लक्ष्मणार्याद्या ज्ञातं ज्ञेयं, चण्डकौशिकप्राग्भवमण्डूकीहिंसकतपस्विज्ञातं च ज्ञेयमिति ।

अथ ज्ञानाद्यालोचनामाह—

त्रिविधाशातनाजाते ज्ञानादीनां यथाक्रमम् । अतिचारविशुद्ध्यर्थं सूत्रोक्तं तत्तपश्चरेत् ॥ १ ॥

स्पष्टः । नवरं त्रिविधा जघन्यमध्यमोत्कृष्टाऽऽशातना अविनये संजाते प्रायश्चित्तं तत्तपः समाचरेत् । तथाहि जीतकल्पानुसारेण—"काले विणए बहुमाणे" इत्यादिपूर्वोक्ताष्टविधज्ञानाशातनायां देशत आचाम्लं, सर्वत आशातनायामुपवासः । स्थानाङ्गे तु जघन्याशातनायां पूर्वार्धं, मध्यम एकाशनं, उत्कृष्ट आचाम्लं इत्यादि । तथाचार्योपाध्यायपुस्तकपट्टिकाकमलीर्जलियाजपमालाद्याशातनायां प्रत्येकं जघन्यत आचाम्लं । निन्दाप्रद्वेषमत्सरोपहासादिरूपाशातनायां प्रत्येकं उपवासः । यद्वा सामान्यत ईर्यामप्रतिक्रम्य स्वाध्यायादिकरणे पूर्वार्धं । प्रदीपनादिषु पुस्तकदाहे भङ्गे च शक्तौ सत्यां पुनः कारापणं । अक्षराणां पादलग्ने निविः । ज्ञाने समीपे सत्याहारनीहारकरणे निविः । निष्ठ्यूतेनाक्षरमार्जने पूर्वार्धं । जपमालायां त्रुटितायां पादलग्नायां गतायां च प्रत्येकं निविः । कालवेलायां सिद्धान्तभणने गणने च तदन्तरायकरणे च पूर्वार्धं । इति श्रुत्वा ये ज्ञानसंबन्धिप्रायश्चित्तं न गृह्णन्ति नालोचयन्ति ते वरदत्तजीववसुदेवाचार्यवत् पुस्तकपट्टिकादिदाहकृद्गुणमञ्जरीजीवसुन्दरीवच्च महद्दुःखं प्राप्नुवन्ति । अथ "निस्संकिय १ निक्कंखिय २" इत्याद्यष्टविधदर्शनशङ्कायां देशत आचाम्लं, सर्वत उपवासः । स्थानाङ्गे तु दर्शनातिचारे जघन्ये पूर्वार्धं, मध्यम एकभक्तं उत्कृष्टे आचाम्लं । प्रमादाद्देवे गुरौ वाऽवन्दिते पूर्वार्धं । प्रतिमावासकूपिधूपदहनाद्यास्फालनं प्रतिमापाते चाधौतपोतादिना पूजने च पूर्वार्धं । देवगुरुपुस्तकसङ्घचैत्यतपस्विसाधुश्रावकसामाचारीणां देशाशातनायामाचाम्लं, एतेषां सर्वत आशातनायां प्रत्येक-

१ पुरिमड्ढं.

मुपवासः। "तंबोलपाणभोयण०" इत्यादिचैत्याविनयदशके देशत आचाम्लं सर्वतः उपवासः । सामान्यतो मिथ्यात्वकरणे पूर्वार्धं, उत्कृष्टत आचाम्लं । परतीर्थिकदेवगुरुवन्दनार्चने श्राद्धसांवत्सरिकमएरूखमणकापनोत्तारकरणे इत्यादिबादरमिथ्यात्वे सकृत्कृते प्रत्येकमुपवासः, बहुशस्तत्करणे दशोपवासाः । साधर्मिकैः सहाप्रीतिकरणे जघन्यत एकाशनं, मध्यम आचाम्लं, उत्कृष्टत उपवासत्रयं । स्थापनाचार्याप्रतिलेखने पूर्वार्धं, पातित एकभक्तं, निर्गम उपवासः । प्रतिमाया अङ्गुल्यादिविनाशे प्रमादाद्दशोपवासाः । सूक्ष्मदेवद्रव्यभोगे पूर्वार्धं, मध्यम उपवासः, प्रमादाद्बहुशस्तद्भोगे दशोपवासाः । तथा देवस्वं भक्षयित्वा ये प्रायश्चित्ततपो नाङ्गीकुर्वन्ति, ते संकाशश्रेष्ठिसागरश्रेष्ठ्यादिवदनेकदुःखपरंपरां तन्वन्ति । अपि च भूपतितपुष्पारोपणे प्रमादादाचाम्लं । अनेन स्वल्पतपसा शुद्धिः स्यात् । यदि प्रायश्चित्तं नालोचयति गुरोः पुरस्तात्तदा मातङ्गसुतवद्दुःखी स्यात्, तथाहि—

कामरूपपत्तने मातङ्गकुले दन्तयुक्तः सुतोऽजनि, भीतया तन्मात्रा बहिर्यात्वा स पुत्रस्त्यक्तः । इतश्च राज्ञा राजपाटिकायां गतेन स दृष्टः, परिजनैर्ग्राहितः, राज्ञा वृद्धिं प्रापितः । प्रान्ते तमेव पालितपुत्रं राज्ये न्यस्य राज्ञा दीक्षा गृहीता, क्रमाज्ज्ञानी संजातः, पुत्रबोधार्थं तत्रागात् । नृपो महर्ध्या गुरुं प्रणम्योपविष्टः । सा मातङ्ग्यप्यायाता तं वन्दितुं । तां दृष्ट्वा राजा हृष्टः । साऽपि नृपमवलोक्य जातहर्षा पुलकितगात्रा बभूव, तत्क्षणे तदुरोजाभ्यां दुग्धधारे प्रादुर्बभूवतुः । तद्वीक्ष्य चमत्कृतो भूपो ज्ञानिनं

१ नष्टे.

पप्रच्छ—"स्वामिन् ! मद्दर्शनान्मातङ्ग्याः प्रश्रवः कुतो हेतोः ?" इति । मुनिनोक्तं—"हे राजन् ! एषा मातङ्गी तव जननी, मया त्वं बहिः पतितो लब्धः, अपुत्रिणा सता तव राज्यं दत्तं"। नृपः प्राह—"केन कर्मणैतन्मम कुलं ? केन कर्मणा च राज्यं ?"। मुनिनोक्तं—"पूर्वभवे त्वं श्रीमानिभ्यो विवेकी चाभवः एकदा श्रीजिनेन्द्रमपूजयः। सुगन्धिपुष्पं पद्मासनोपरि पतितं। तत्सौरभं ज्ञात्वा पुनरपि बिम्बे न्यस्तं अविधिनाऽस्नातेन। तेनैव कर्मणा मालिन्यपापमर्जितं। तदनालोच्य मृतो मातङ्गकुले[1] विध्यर्च-नाच्च राज्यमवाप्तवान्"। इति श्रुत्वा जातिस्मृतिं प्राप्य दीक्षामादाय समस्तदुष्कर्माण्यालोच्य प्रतिक्रम्य च स्वर्गं गतः ॥

आशातना या विहिताऽविवेकतः, सिद्धान्तसङ्घप्रतिमार्चनादिषु ।
आलोच्य तूर्णं सुगुरोः पुरस्ततो, मातङ्गभूपवच्च तनोतु शोधिताम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंशस्तम्भे ऽष्टाशीत्यधिकद्विशततमं २८८ व्याख्यानम् ॥

## एकोननवत्यधिकद्विशततमं २८९ व्याख्यानम् ॥

अथ पञ्चाणुव्रतविषये प्रायश्चित्ततपोवर्णनमाह—

१ तामिति शेषः.

पञ्चाणुव्रतसंबन्ध्यतिचारशुद्धिहेतवे । प्रायश्चित्ततपः कार्यं गीतार्थगुरुणोदितम् ॥ १ ॥

स्पष्टः । नवरं प्रञ्चाणुव्रतमध्य आद्यव्रतालोचनेयं—श्राद्धानां पृथ्व्याद्येकेन्द्रियविराधना प्रायेण सामायिकस्थानेऽग्निग्रहातिक्रमे वा ज्ञेया, पञ्चानां स्थावराणां निष्कारणसंघट्टे पूर्वार्धं, एतेषामल्पपीडने एकाशनं, गाढपीडने नीविः, एषामुपद्रव आचाम्लं । अनन्तकायविकलेन्द्रियसंघट्टे पूर्वार्धं, अल्पपीडन एकाशनं, गाढपीडयाऽऽचाम्लं, एषामुपद्रवे उपवासः । दर्पेण पञ्चेन्द्रियवधे दशोपवासाः । एकेन्द्रियाणां बहूनामुपद्रवे दशोपवासाः । अगलितजलस्य सकृत्पान उपवासद्वयं । स्तोकसंखारछर्दन उपवासद्वयं । बहुशस्तत्संखारछर्दने दशोपवासाः । संखारशोषणे दशोपवासाः । क्षारमधुरसंखारमेलनेऽष्टमः । अगलितजलस्नानेऽगलितजले उष्णीकृते वाऽष्टमः । नीलफूलसंघट्टे उपवासः । हरिततृणाद्युपरि उपवेशने उपवासः । गर्भपातेऽष्टोत्तरशतमुपवासाः । [1]कोलिकपुटोत्पाटने दशोपवासाः । उदेहिकागृहभङ्गे दशोपवासाः । तथा खालकूपकीटिकानगरशुषिरभूम्यादिस्नाने, उष्णजलावश्रावणादेर्वहने, गलग्यमानस्य जलस्य क्षरणे, सच्छिद्रगलनकरक्षणे, अशोधितेन्धनस्याग्नौ क्षेपे, शलितधान्यस्य खण्डनदलनादौ, उल्कादिप्रज्वालने, क्षेत्रखूरकरणे, पुंजे वह्निदाने, कोठक्षेपे, वर्षास्वपावृतदीपकरणे, पल्यङ्कादीनामातपदाने, घाशीगाराऽऽलिंपने, वाशीठगणकस्थापने, चटकमालाभञ्जने, अशोधितवस्त्रधावने, रात्रौ स्नाने, घरट्टोदूखलचुल्लीप्रमुखाप्रमार्जने, सूचीनिर्गमे ( विनाशे ) इत्यादिनिर्ध्वंस ( निर्दय ) व्यापारे प्रत्येकं जघन्यत

१ भाषायां करोलिया.

एकोपवासः मध्यमत उपवासत्रयं, उत्कृष्टतो दशोपवासाः । सूतिकाकर्मकरणे षष्ठोऽष्टमो वा, बहूनां स्त्रीणां सूतिकाकर्मकरणे दशोपवासाः । जलौकोमोचन उपवासः । कृमिनाशनौषधदान उत्कृष्टतो दशोपवासाः । मुत्कलजलस्नानवस्त्रगोदकधावने दशोपवासाः । कांकस्यादिनिर्यूकालिक्षाणामुत्पाटने दशोपवासाः । इत्यालोचनां श्रुत्वा ये न स्वीकुर्वन्ति ते महाकष्टमाप्नुवन्ति । तद्यथा—

धर्मनृपेण प्राग्भवे बहुस्थावरपञ्चकानन्तकायादिवधेन महादुःखं प्राप्तं । तदनु गुर्वन्यर्णे तदालोचितं, गुरूक्तप्रायश्चित्ततपोऽङ्गीकृत्य तस्मिन्नेव भव इभ्यो जातः । लक्षशः साधर्मिकानाहारादिदानैः सुखिनश्चकार । ततो मर्त्यजन्मप्राप्तिक्षणे द्वादशवर्षदुर्भिक्षं ननाश । तन्महिम्ना धर्मनृप इति नाम प्रसृतं एतज्ज्ञातं मया सप्तमव्रते लिखितमस्तीति ।

यूकावधेन गोपोऽष्टोत्तरशतवारान् यावच्छूलिकारोपणं प्रायश्चित्ततपो विनेति । तथा कुमारनृपो यूकावधकृन्महेश्वरेभ्यभार्ययोः सर्वस्वं गृहीत्वा यूकाप्रायश्चित्तपदे यूकाविहारमकारयत् । श्रीहरिभद्रसूरिः स्वप्रायश्चित्तपदे चतुश्चत्वारिंशदधिकचतुर्दशग्रन्थशतं चकार । इत्यादयोऽवदाताः स्वयमभ्यूह्या इति ।

अथ द्वितीयव्रतप्रायश्चित्तं चेदं—पञ्चमहाऽसत्यकरणे जघन्यत आचाम्लं, उत्कृष्टत उपवासः, दर्पतो दशोपवासाः । कलहपैशून्याभ्याख्यानादौ आचाम्लं । धर्मलोपकवचनकथने दशोपवासाः । शापदाने कररुकामोटने चोपवासः । दुष्टाशयेन मारीकथने उपवासा दश । कलङ्कहेतुजारशाकिनीनिधिलाभदोषदाने दशोपवासाः । अक्षरमषीमन्त्रभेदे आचाम्लं । दण्डापिते दशोपवासाः । मारणेऽशीत्यधिकशतमु-

पवासाः । पक्षान्तरोषे उपवासः । चतुर्मासिकरोषे उपवासद्वयं । वर्षान्तरोषे दशोपवासाः । वर्षोपर्यत्यक्ते रोषे आलोचना नास्ति, तथाहि—अभीचिकुमार उदायिमुनौ स्वजनके द्वेषं दधदन्त्याराधनायामपि "उदायिनं विहाय खामेमि सव्वे जीवे०" इत्यनालोचितद्वेषोऽधोवासिदेवत्वं प्रापेति । वाग्जल्पकल्मषानालोचका रत्नार्याकुवलयप्रभसूर्यादयो ज्ञेया इति ।

स्थूलादत्तादाने प्रमादेन कूटतुलामानरसविरसदाणचौर्यादिके जघन्यतः पूर्वार्धं, मध्यमत आचाम्लं, उत्कृष्टत उपवासः, दर्पतो दशोपवासाः । विश्वासघाते उपवास इति । आलोचनाविरक्तोऽदत्तग्रहणासक्तः श्रीपालनृपं प्रति विश्वासघातस्पृहश्च धवलश्रेष्ठी तत्रैव भवे महतीं व्यथां लेभे । केसरिरौहिणेयादयश्चौर्यविरक्ताः प्रभुमार्गभक्ता बभूवुः इति ।

मैथुनव्रते प्रमादतः स्वदारनियमभङ्गे उपवासः । वेश्यानियमभङ्गे उपवासद्वयं । दर्पेण भङ्गे दशोपवासाः । परदारे हीनेऽज्ञाते दशोपवासाः, ज्ञाते च स्वाध्यायलक्षयुता दशोपवासाः । यथा श्रीआमनृपो डुम्बस्त्रीस्पर्शचिन्तको बप्पभट्टसूरिणा तद्विज्ञाते सति लज्जितः द्विजोक्तप्रायश्चित्तपदे तप्तायःपुत्तलिकालिङ्गनं समीहमानो गुरुणेति शिक्षितः—"इत्थं पापाभावो न स्यात्" । ततः श्रीसर्वज्ञागमानुसारेण कृतप्रायश्चित्ततपा निष्पापगुणमादधौ इति । उत्तमे परदारेऽज्ञातेऽशीतिसहस्राधिकलक्षस्वाध्याययुता दशोपवासाः, ज्ञाते तु अशीत्युत्तरशतमुपवासाः । तिरश्चां नियमभङ्गे आचाम्लं । स्वप्नमध्ये व्रतभङ्गे लोगस्स ४ नवकार १ कायोत्सर्ग उसासा १०८ । करकर्मणि उपवासत्रयं, बहुशस्तत्करणे दशोपवासाः । उरःस्पर्शे

उपवासः । ढींगलाक्रीडने पूर्वार्धं, ढींगलाग्रथने एकाशनं, ढींगलोत्खेलने आचाम्लं । बलात्परस्त्रीसेवनेऽशीत्यधिकशतमुपवासाः । तीव्रे दृष्टिरागे षष्ठः । तीव्रालापकरस्पर्शादिषु त्रय उपवासाः । यथा रूपीनाम्न्या राजपुत्र्या बालरण्डया दृष्टिनिक्षेपः कृतः शीलसन्नाहामात्ये । क्रमात्ताभ्यां साधुत्वे स्वीकृते संलेखनावसरे गुरुणा बहुधा बोधितयापि रूपीसाध्व्या न तद्दृष्टिक्षेपपापमालोचितं । दम्भपरा साऽनन्तभवपरंपरां प्रापेति । यद्यालोचितं भवेत्तदा स्वल्पतपसा कार्यसिद्धिरिति । कुमारिकाभोगेऽष्टमः । इत्वरपरिगृहीतायामुपवासद्वयं । मैथुनाद्यशुभचिन्तने उपवासः । यथा श्रीलक्ष्मणार्यया चटकमैथुनस्तुतिचिन्तने तत्पापं गुरूणां पुरो नालोचितं, स्वबुद्ध्या तत्त्यागार्थं पञ्चाशद्वर्षाणि यावन्महदुत्कृष्टतपस्तप्तं, तथापि तत्पापं न प्रणष्टं, प्रत्युतानेकभवविडम्बनां लेभे । दम्भं मुक्त्वा गुरुदत्ततपसा स्वल्पेन शोधिं लभेत यद्यालोचितं भवेत् इति ।

पञ्चमव्रते नवविधपरिग्रहनियमभङ्गे जघन्यत पूर्वार्धं, मध्यमतः आचाम्लं, उत्कृष्टत उपवासः, दर्पतो दशोपवासाः । एतद्व्रतप्रायश्चित्ततपो महणसिंहश्राद्धवत्स्वीकार्यं झटित्येवेति । साधुनाऽपि स्वोपकरणाद्यधिकव्यापारे तूर्णं तत्पापमालोच्यं, अन्यथा विबुधसिंहसूरिवदनार्यकुलादिकं प्राप्नोति । तथाहि—श्रीविबुधसिंहसूरिः स्वशिष्यगणाञ्चितः समस्ताप्तप्रणीतधर्मरतोऽपि एकस्मिन् योगपट्टे परमां प्रीतिं दधाति, तं विना न क्वापि रतिं प्राप । योगपट्टस्तु कटीमामर्यादीकृत्यार्वागूर्ध्वपर्यस्तिकाबन्धनोपकरणं सूत्रादिग्रथितं ज्ञेयं । तदुपरि मूर्छां न मुञ्चति । जिनैस्तु मूर्छैव समस्तपरिग्रहमूलं प्रोक्तं । तत्पापमन्या-

लोचनायामपि न सम्यगालोचित्तं । स सूरिः कालं प्राप्यानार्यदेशे अरबम्लेच्छकुले राजात्मजोऽभूत् । तत्रापि योगपट्टाकारः स्वाङ्गे लब्धः । मसलाखुप्रमुखचिह्नसदृशं चिह्नं तादृग्जातं प्रेक्ष्य सर्वेऽपि विस्मयं प्रापुः अदृष्टपूर्वत्वात् तन्निदानं ज्ञान्येव वेत्ति । अथान्यदा तच्छिष्याणामवधिज्ञानं चतुर्थज्ञानं चोत्पन्नं शुद्धसंयमतपोभिः । ततः स्वगुरुगतिं गवेषयन्तो ज्ञानेन तदुत्पत्तिं ज्ञात्वा ते दध्युः—"अहो धनादिकं विनाऽपि स्वल्पाऽपि मूर्छा व्रतभङ्गफलरुहैवं जाता । धिग्धिग्मूर्छामनालोचनां च, अथैनमुद्धारयामो वयं प्रत्युपकारं कुर्मः सर्वज्ञधर्मप्रदानेन ।" यतः—

समकितदायक गुरुतणो, पच्चुवयार न थाय । भव कोडाकोडी करी, करतां सर्व उपाय ॥ १ ॥

स्थानाङ्गेऽपि—"तिण्हं दुप्पडियारं इत्यादिनोक्तं" । ततस्ते शिष्या अरबशास्त्रं तुरकवाणीं च पेठुः । म्लेच्छमाननीयं वेषं विधाय स्ववेषं संगोप्य तद्देशाभिमुखं गतिं चक्रुः । अनार्यदेशसीमानं प्राप्य तत्र सर्वत्रापि निर्दोषाशनादिकाप्राप्तिं विज्ञाय मासक्षपणादितपः स्वीकृत्य यत्र स सूरिरुत्पन्नोऽस्ति तत्राजग्मुः । कुराणमध्ये यो यो निर्दोषपक्षस्तं तमालम्ब्य वैराग्ययुक्त्या बहुजनस्तुत्यर्हा बभूवुः । अनेकजनमुखतस्तेषां प्रशंसां श्रुत्वा सोऽपि राजात्मजस्तत्र समेतः । तेषां वाक्यानि श्रुत्वा जातहर्षः कदाचिदेकाकी समेति, कदाचित्परिकरवृतश्च । मुनयोऽपि कदाचित्स्वसाधुवेषं दर्शयन्ति प्रच्छन्नवृत्त्या । एकदा साधुक्रियां तल्लिङ्गं तदभिधानं तद्वाक्यं पूर्वभवोदन्तं च दृष्ट्वा श्रुत्वा च प्राप्तजातिस्मृतिः स दध्यौ—"अहो ! योगपट्टमात्रमूर्छयाऽहं परमात्मधर्मव्यतिरिक्तहीनजात्यादिकं प्राप्तः । अहो ! धिग्धिग्मां । प्रायश्चित्तमसंगृह्य सर्वं

मया सम्यग्रत्नत्रयं हारितं । इमे सर्वे मच्छिष्याः सन्ति, एषामुपकारोऽपि महान्, ये स्वयमाहारादिकं त्यक्त्वा मदर्थे निःस्पृहा इमे तपन्ति, बहुदिना जाताः, अग्रे आहारादिदेहाधारं विना कथं स्थास्यन्ति ? अतोऽहं शीघ्रं स्वजनादिकं परिवञ्च्यैषां सार्थे आर्यदेशसीमानं प्राप्य दीक्षां ग्रहीष्ये"। ततः सोऽवसरं लब्ध्वा तैः सहार्यदेशे समागत्य दीक्षया स्वजन्म सफलीचकारेति ॥

स्वल्पछिद्रमपि नावमम्बुधौ, मज्जति प्रतनुयोगपद्धजाम् ।
लुब्धतां च नवदां विचिन्त्य नोः, शोधितां विदधतु व्रतार्हजाम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंश-
स्तम्भ एकोननवत्यधिकद्विशततमं २८९ व्याख्यानम् ॥

---

## नवत्युत्तरद्विशततमं २९० व्याख्यानम् ॥

अथ गुणव्रतशिक्षाव्रतार्हप्रायश्चित्ततपोवर्णनं किञ्चिदाह—

त्रीणि गुणव्रतानि स्युः, सेव्यानि प्रत्यहं तथा । शिक्षाव्रतानि चत्वार्येषामपि तत्तपो भवेत् ॥ १ ॥

स्पष्टः । नवरं एषामुभयेषामपि तत्प्रायश्चित्ततपोऽतिचारालोचनं भवेत्, तथाहि—प्रथमगुणव्रते-जलस्थलोर्ध्वाधोऽधिकगमने देशत आचाम्लमिति । द्वितीयगुणव्रतेऽनाभोगतो मद्यमांसभोगे उपवास-

त्रयं । दर्पेणाकुट्या वा मद्यमांसभोगे दशोपवासाः । गुणिना मांसास्वादसमीहाऽपि न विधेया । कदाचित्समीहायामुत्पन्नायामवश्यमालोच्यं । यथा श्रीकुमारनृपः किञ्चित्शुष्कघृतपूरं भक्षयन् दंष्ट्रामध्ये चर्वणतो चररूकशब्द उत्पन्ने पूर्वास्वादितामिषवर्णनं सस्मार । ततो झटिति दध्यौ—"अहो ! मयाऽनर्हं ध्यातं"। ततः समस्तस्वदन्तपातनायोद्यतं निवार्य स्वामात्येन तद्वृत्तं गुरवे ज्ञापितं । गुरुणा लाभं विचार्य आरसपाषाणनिष्पन्नैश्चतुर्विंशत्यधिकदशशतस्तम्भैस्तत्प्रायश्चित्तपदे जिनालयोपदेशो विस्तारितः इति । कदाचिन्मक्षणाशने उपवासत्रयं । कुथितवनस्पतिभोगे आचाम्लं । वोलक्षारव्यञ्जनदधिदुग्धतक्रमिश्रितद्विदलषोडशप्रहराधिकदधिप्रमुखादिद्वाविंशत्यभक्ष्याशने प्रत्येकमुपवासः । मधुभक्षणे नियमे सत्युपवासद्वयं, नियमं विनोपवासः । चतुर्दशनियमभङ्गे पूर्वार्धं जघन्यतः, उत्कृष्टत उपवासः । सूक्ष्मकर्मादाने उपवासः । लोहकारकवाटिकावापीरथघटनालाक्षागुलीमनः शिलाधातुकीसाबुभृङ्गिकामहाविकृतिचतुष्कनिर्लाञ्छनविपहलप्रहरणप्रमुखबहुव्यापारे दशोपवासाः । विषदाने दापने च वालिते दशोपवासाः, अवालितेऽशीत्यधिकशतमुपवासाः । छुरिकानिर्माण उपवासत्रयं । प्रहरणवाणिज्यं तु राजीयाश्राद्धवन्निषेध्यं, श्रूयते हि स्तम्भतीर्थवासितपागच्छीयराजीयावजीयाभिधाभ्यां सहोदराभ्यामतिदूरजलमार्गतः समेतानि तरवारिछुरिकाकटारीदात्रकतीरबन्धुकपिस्तोलवरछीप्रमुखलोहनिष्पन्नशस्त्रभृतानि महामूल्यान्यपि प्रवहणानि श्रुत्वेति ध्यातं—"परंपरयाऽनेकजीवहिंसकत्वादेषां सर्वेषां भङ्क्त्वा भङ्क्त्वा चूर्णं विधाय गर्तायां निक्षिप्य स्थगनीयानि"। सेवकैरनेकधा धनलाभो दर्शितस्तथापि नाङ्गीचक्रतुरिति । अथ रात्रिभोजन

नियमभङ्गे उपवासत्रयं । स्वभावतो रात्रिपरिसेवने पूर्वार्धं, बहुशस्तदासेवने दशोपवासाः । अनाभोगतो दगवगवेलायामाचाम्लं । फलकांखलसमये आचाम्लं । साधुभिस्तु सर्वथा यावज्जीवं रात्रिभोजनं निषिद्धं, तस्य समीहाऽपि न कार्या, तत्करणेन महान्दोषः । श्रीपुरे धनेश्वरसूरयश्चतुर्मासीं स्थिताः । गुरुरुपवासं कर्तुं न शक्नोति । अन्यदा पर्युषणापर्व समायातं । तत्र साधवोऽन्येऽपि आद्याः षष्ठाष्टमादितपः कुर्वाणा अभूवन् । तदा सूरिर्दध्यौ—"मयोपवासं कर्तुं न शक्यते तथाप्यद्योपवासं करोम्येव"। ध्यात्वेति सूरिः प्रथमं पौरुषीं ततः पूर्वार्द्धं, ततोऽपार्धं प्रत्याख्याति । अत्रान्तरे मुनयो जगुः—"वयमन्नमानयामः, पार्यतां" । गुरुभिरुक्तं—"अद्योपवास एव" । ततः सन्ध्याप्रतिक्रमणं कृतं । संस्तारकविधिं भणित्वा गुरुणा संस्तारितं । तदा बुभुक्षया निद्रा नायाति । मध्यरात्रौ सूरिः प्राह—"भो मुनयः ! उत्सूरं जायमानमस्ति, अन्नमानीयतां" । साधवो जगुः—"अद्यापि मध्यरात्रिर्विद्यते सूर्य उद्गतो नास्ति, शङ्खवादकेन शङ्खोऽपि वादितो नास्ति, कुर्कुटा अपि न शब्दयन्ति, युष्माभिरेव वयं एवं पाठिता यद्रात्रिभोजनान्मूलगुणहानिः स्यादतोऽधुना विहर्तुं गन्तुं न शक्यते, लोका अपि सुप्ताः सन्ति" । सूरिः स्माह—"शङ्खोऽम्भोधौ पितरं मिलितुं गतः, सूर्यस्य तु रथो भग्नः, कुर्कुटा अप्युड्डीयान्यत्र गता नभसि गताः, यतः—

उयहिं सरेविण संख गय, कुक्कुरु गया नहंसि । रह भग्गो सूरयतणो, तेण न विहाइ रत्ति ॥ १ ॥

आकर्ण्येति साधवो जगुः—"यत्प्रभुणा प्रोच्यते तत्सत्यमेव, परं बुभुक्षिताः किं न कुर्वन्ति । यतः—

पञ्च नश्यन्ति पद्माक्षि, क्षुधार्तस्य न संशयः । तेजो लज्जा मतिर्ज्ञानं, मदनश्चापि पञ्चमः ॥ १ ॥"

एतच्छ्रुत्वा सूरिः प्राह—"मया बुभुक्षया जल्पितं, मिथ्यादुष्कृतं मेऽस्तु" इति निर्दम्भं सर्वसमक्षं स्वपापमालोच्य सूरिर्हृदयं दृढं कृत्वा पौरुषीप्रत्याख्यानं यावत् स्थितः । ततो बुभुजे इति ।

अथ तृतीयगुणव्रतालोचना किञ्चिदुच्यते—अष्टमव्रते वैरिघातो नृपत्वम्भवनं पुरघातोऽग्निदीपनं विद्याधरो भवामीत्याद्यपध्यानं । वृषभान् दमय, क्षेत्रं कृष, हयान्[1]षण्ढय, शकटं वाहय, इति पापोपदेशे जघन्यत उपवासः, दर्पतो दशोपवासाः । ढण्ढणर्षिजीवः पुरोहितभवे एकं चासमधिकं क्षेत्रे खेटयन् (कर्षयन्) पञ्चदशशतजीवानां भक्तान्तरायकृज्जातः । तत्पापालोचनां विना षण्मास्यामतिक्रान्तायामशनं निर्दोषं प्रापेति । हलयन्त्रोदूखलमुशलघरट्टतिलयन्त्रादिहिंस्रवस्तुप्रदाने, जिनभवने विलासादिकरणे जघन्यत उपवासः, दर्पतो दशोपवासाः । कार्मणवशीकरणे दशोपवासाः । सरोवरह्रदतटाकशोषणदवदाने दशोपवासाः, क्वाचदष्टोत्तरशतमुपवासा अप्युक्ताः इति ।

अथाद्यशिक्षाव्रते नियमे सत्यकरणे उपवासः, ग्रन्थिसहितसामायिकभङ्गे नीविः । पर्वतिथौ आरम्भयतनाऽकरणे पूर्वार्धं । सामायिके बादरजलपृथ्वीतेजःस्पर्शने आचाम्लं । सामायिक आर्द्रवस्त्रसंघट्टे पूर्वार्धं । हरितादिबीजप्रमर्दन आचाम्लं । पुंसः स्त्रीसंघट्टे स्त्रियाश्च पुंसंघट्टे आचाम्लं । सान्तरसंघट्टे नीविः । वसनादिसंघट्टे पूर्वार्धं । शयने राजकथादौ च पूर्वार्धं । साधोः स्त्रीस्पर्शे पूर्वार्धं, मध्यमस्पर्शे

[1] क्लीबान् कुरु.

एकाशनं, उत्कृष्टस्पर्शे आचाम्लं, सर्वस्पर्शे दशोपवासाः। तथा सावद्याचार्यवदा(चार्येण)र्यावस्त्रसंघट्टे जाते तत्पापं नालोचितं, ततोऽनन्तदुःखं लब्धं, अतो झटित्यालोच्यं, येन स्वल्पतपोभिस्तत्कर्मनिवृत्तिर्भवेदिति।

दशमव्रतभङ्गेऽतिचारे चाचाम्लं। काकजङ्घनृपवदवश्यमस्य प्रायश्चित्तं प्रपद्यमिति।

अथैकादशे व्रते नियमे सत्यकृते भङ्गे चोपवासः। तदतिचारेष्वाचाम्लं। तथाऽऽवश्यिकीं नैषेधिकीं वा न करोति, उच्चारप्रश्रवणादिभूमिं न प्रमार्जयति, अप्रमृज्य किमपि वस्तु गृह्णाति, कपाटमविधिना स्थगयति उद्घाटयति च, कायमप्रमृज्य कण्डूयति, भित्तिमप्रमृज्यावष्टम्भं करोति, गमनागमनं नालोचयति, वसतेरप्रमार्जने स्वाध्यायाकरणे कम्बलमात्रप्रावरणे जलज्वलनविद्युत्पृथ्व्यादिसंघट्टे नीविः। पुञ्जकस्यानुद्धरणे उपविश्य प्रतिक्रमणे पूर्वार्धं, उत्कृष्टत एकाशनं। पौषधमध्ये वमने निष्कारणदिवास्वापे भोजनानन्तरं वन्दनकादाने प्रत्येकमाचाम्लं। मुखवस्त्रिकासंघट्टे नीविः, तन्निर्गमने उपवासः। रजोहरणसंघट्ट आचाम्लं, तन्निर्गमेऽष्टमं। इत्यादिपौषधालोचनां श्रुत्वा ग्रीष्मे तृषाविपीडितोऽपि न तत्समीहां तनोति। कदाचित्समीहोत्पद्यते तूर्णं यदि नालोचयति तदा नन्दमणिकारश्राद्धवद्दुःखं प्राप्नोतीति।

अथातिथिसंविभागनियमे सत्यकरणे भङ्गे चोपवासः। तदतिचार आचाम्लं। तथा साधुभ्योऽशुद्धाहारं दत्त्वा नागश्रियादिवद्ये नालोचयन्ति तेषां भवपरंपरा भवेत्। अथ कदाचिदनर्हाशनादौ दत्ते शीघ्रं प्रायश्चित्तं ग्राह्यं। तपस्विसाधवे देवद्रव्यतण्डुलनिष्पन्नद्वैरेयीदायकमहेभ्यश्राद्धवदिति।

अथ प्रसङ्गादन्यदपि प्रायश्चित्तं लिख्यते—आत्मघातचिन्तन उपवासः। निदानकरण उपवासः।

अथ निदानं विधाय तदनु शीघ्रमालोच्यं, अन्यथा द्रौपदीजीवसुकुमालिकया पञ्चनरसेव्यमानामेकां स्त्रियं वीक्ष्य निदानं कृतं, तन्नालोचितं, तेनानेकव्यथां प्रापेति। तथाऽष्टमासान् यावत्सगर्भस्त्रिया दीयमानं भक्तं गृह्यते, नवमे मासे साधोर्गृहत आचाम्लं। एकाशनादिभङ्गे तदेव तपो देयं, यद्वा तत्तपोऽर्हस्वाध्यायो देय इति।

अथालोचनावर्णनं गुरुणोदितं तच्छ्रुत्वाऽपि यः क्लीवत्वं तनोति स हीनगतिं गच्छति। तथाहि—राजगृहे श्रीवीरं प्रणम्य श्रेणिकादिपर्षत् स्थिताऽस्ति। तदा चमरेन्द्राग्रमहिषी कालीदेवी सर्वर्द्ध्या श्रीवीरं नत्वा सूर्याभदेववन्नृत्यं वितत्य स्वभुवने गता। ततस्तत्प्राग्भवस्वरूपं गणभृता पृष्टः श्रीवीरः स्माह—आमलकल्पावासिकालगृहस्थपुत्री कालीनामा कुमारिकाऽस्ति। तया पितरावापृच्छ्य वैराग्येण श्रीपार्श्वनाथपार्श्वे दीक्षा गृहीता। प्रभुणा साध्वीपुष्पचूलायै शिष्यां कृत्वा दत्ता। सामायिकादीन्येकादशाङ्गान्यधीत्य तत्पार्श्वे संयमतपोभिरात्मानं भावयति। अन्यदा मलपरीषहसहनेऽक्षमा हस्तौ पादौ मुखं शिरः स्तनान्तरं कक्षान्तरं गुह्यान्तरं जलेन प्रक्षालयति, यत्र स्वाध्यायं करोति तत्र प्राग् जलेन भूशुद्धिं करोति। तद्वीक्ष्य महत्तरयेति शिक्षा कृता—"न घटते निर्ग्रन्थनिर्ग्रन्थीनां देहादिधापनं, अतोऽत्र स्थाने प्रायश्चित्तं स्वीकुरु"। सा मौनं विधायेति दध्यौ—"पराधीनवृत्त्याऽत्र वास्तव्यं मम न योग्यं"। ततो भिन्नोपाश्रये निरङ्कुशा स्वच्छन्दवृत्त्या जलेनाङ्गशुद्धिं तनोति। इत्थं बहुवर्षाणि यावत्संयमं

प्रपाद्य पञ्चदशदिनसंलेखनायामपि तत्पापस्थानमनालोच्याप्रतिक्रम्यासुरकुमारदेवत्वमलजत । सार्धद्वय-पल्योपमायुर्भुक्त्वा महाविदेहे सेत्स्यतीति ॥

श्रीछेदशास्त्रादिबहुश्रुतोदितं, चैतत्तपोऽनेकविचारगर्भितम् ।
स्वीकृत्य तूर्णं न पुनः श्रुतोज्झितं, वक्तव्यमल्पं सुकृतं शुभार्थिभिः ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ विंश-स्तम्भे नवत्युत्तरद्विशततमं २९० व्याख्यानम् ॥

---

## एकनवत्युत्तरद्विशततमं २९१ व्याख्यानम् ॥

अथ धर्मकार्ये दम्भो हेय इत्याह—

दम्भतो नन्वयत्नाच्च तपोऽनुष्ठानमादृतम् । तत्सर्वं निष्फलं ज्ञेयमूषरक्षेत्रवर्षणम् ॥ १ ॥

स्पष्टः । अत्रार्थे संबन्धश्चायं—अवन्त्यां शम्बूकखेटके सुजशिवद्विजो निःस्वो निर्घृणो वसति स्म । तस्य प्रिया यज्ञयशा गर्भिणी प्रसवकाले पुत्रीं प्रसूय मृता वेदनाभिः । सुतायाः सुजश्रीर्नाम दत्तं । प्राग्भवे सुजश्रीजीवः कस्यचिन्नृपस्य कान्ताऽभूत्, तया सपत्नीपुत्रोपरि मारणं चिन्तितं, तेनास्या जननी मृता । क्रमेण साऽष्टवर्षीया जाता । तदा द्वादशवर्षीयं दुर्भिक्षं प्रवृत्तं । विप्रः पुत्रीं लात्वा प्राणयात्रार्थ-

मचलत् । अग्रे गोविन्दविप्रस्य गृहे सा विक्रीता । स गोविन्दोऽपि निःस्वोऽभूत् । एकदा गोरसविक्रयार्थं तत्र गृह आभीरी समागात् । तण्डुलदानं गोरसमूल्यं कृतं । विप्रपत्न्या तण्डुलग्रहणाय .सुज्ञश्रीगृहमध्ये प्रेषिता । साऽपीतस्ततो विलोक्य पुनः समेत्य प्राह—"मया तण्डुला न दृष्टाः ।" तदा विप्रभार्या स्वयं तत्र गता । गृहकोणे ज्येष्ठपुत्रो वेश्यया सह भोगतत्परो दृष्टः । पुत्रेण तिरस्कृता सा मूर्छामवाप । गोविन्दोऽपि शीतलोपचारेण तां सज्ञां चकार । ततो जातिस्मृत्या विज्ञाय प्राग्भवस्वरूपं प्राह । तदाकर्ण्य सभार्यो विप्रो दीक्षां जग्राह । अथेन्द्रभूतिना प्रणम्य पृष्टः श्रीवीरः प्रोवाच—लक्षभवान्तरेऽनया दम्भः कृतः, तथाहि—

क्षितिप्रतिष्ठेशराजस्य रूपीनाम्नी सुताऽभूत् । तस्याः पाणिग्रहणोत्सवानन्तरं स्वामी निमीलनं प्राप, दैवाद्वैधव्यं जातं, सा शीलरक्षणार्थं काष्ठभक्षणोत्सुका पितरं पप्रच्छ । पिता स्माह—"किं काष्ठभक्षणेन ? पतङ्गवन्निष्फलं स्यात्, तस्माज्जिनधर्मं शीलधर्मं चाङ्गीकुरु" । तया भावेन स्वीकृतं । अन्यदाऽपुत्रे नृपे मृतेऽमात्यादिभिः सैव राज्ये स्थापिता । रूपीनृप इति नाम दत्तं । अन्यदा प्राप्तयौवनस्य रूपीराजस्यावयवेष्वनङ्गो दीप्तः । तदा संसदि स्थितं शीलसन्नाहामात्यं रागदृष्ट्या सा व्यलोकयत् । सोऽपि तद्गतचित्ताध्यवसायं विज्ञाय शीलभङ्गभीरुः प्रच्छन्नं नगरान्निर्गत्य विचारसारनृपस्य सेवामकरोत् । एकदा राज्ञा स सचिवः पृष्टः—"त्वं स्वजातिकुलनगरप्राक्सेवितनृपादिनाम कथय" । स स्माह—"मत्सेवितनृपस्येयं मुद्रा, परमस्य भोजनेऽकृतेऽभिधानकथनं नार्हं, तद्दिनेऽशनं नाप्यते" । विस्मयमना भूपः सपदि भोज-

नमानाय्य करगृहीतकवलस्तं प्रत्याह—“हे मन्त्रिन् ! त्वं नृपाभिधानं कथय । यदा मन्त्रिणा रूपीराज इति नाम प्रोक्तं तत्समय एव परचक्रेण रुद्धं निजपुरं शुश्राव । तदा शीघ्रं कवलं त्यक्त्वा युद्धाय सज्जो जातः, परस्परं महासङ्ग्रामोऽभूत् ।' तदाहवनिवारणार्थं शीलसन्नाहस्तत्रागात् । तं हन्तुं परचक्रभटा अभिमुखमागच्छन्तः शासनदेव्या स्तम्भिताः । व्योम्नि वाग्जाता—“नमोऽस्तु शीलसन्नाहाय ब्रह्मचर्यरक्षाय” इत्युक्त्वा देवी कुसुमवृष्टिमकरोत् । इति शीलस्तवनं श्रुत्वा लब्धजातिस्मृतिर्मन्त्री तृतीयज्ञानं प्राप्य पञ्चमुष्टिलोचं चकार । तद्वाक्यैः प्रबुद्धौ तौ युद्धान्निवृत्तौ । प्राग्भवे शीलसन्नाहसाधुना सावद्यं वाक्यं सहसा प्रोक्तं, तत्प्रायश्चित्तपदे मौनव्रतं प्रपाल्याद्यकल्पे स सुरो जातः । ततश्च्युत्वा शीलसन्नाहः स्वयंबुधोऽत्राभवत् । स साधुर्विहरन् स्वपुरोद्याने समागात् । सामन्तादिपरिवृतो रूपीनृपो देशनां निशम्य संयमं जग्राह । स मुनिः क्रमेण सम्मेतशैलं प्राप । तत्र जिनान्नत्वा एकशिलापट्टे संस्थाय संलेखनोत्सुकोऽभूत् । तदा रूपीश्रमणी प्राह—“मम संलेखनां प्रयच्छ” । गुरुः स्माह—“भवसंबन्धिपापान्यालोच्य निःशल्यभावेन यथेप्सितं साधय, सशल्येन बहुभवभ्रमणं भवेत् । यथा कस्यचिन्नृपस्याश्वो गुप्तकीलकशकलेन पादे विद्धः कृशाङ्गोऽभूत् । राज्ञा कारिता अनेक उपचारा निष्फलत्वमगुः । एकेन दक्षपुंसा वाज्यङ्गं सूक्ष्मपङ्केन विलिप्तं । शल्यप्रदेशमुन्नतभूतं वीक्ष्य नखहरणीतस्तच्छल्यं निष्कासितं । अश्वः स्वस्थो जातः । अन्यच्चैकस्तापसोऽज्ञातफलाहारेण सामयत्वं गतः । वैद्येन पृष्टस्तथ्यमाह । ततो वमनविरेचनादिना सज्जीकृतः” । तदाकर्ण्य श्रमणी सा दृष्टिविकारमेकं मुक्त्वाऽन्यत्सर्वमालोचितवती ।

गुरुः प्राह—"पूर्वं सभामध्ये त्वया मयि सरागदृष्ट्या निरीक्षितं तदालोचय" । सा प्राह,—"मया स्वभावेन निर्दम्भतश्च विलोकितं" । ततः सूरिः पुनर्लक्ष्मणाराजसुतावृत्तं बभाण—"उत्सर्पिण्यां क्षितिप्रतिष्ठे जम्बूदाडिमनृपस्य लक्ष्मणा पुत्री यौवनं गता स्वयंवरमण्डपे स्वीकृतवरः पाणिग्रहणावसरे चवरिकायां दीर्घनिद्रामवाप । सा दुःखार्ता विलपन्ती पित्रा शिक्षिता—"भोस्तनुजे कर्मणां विचित्रा गतिः, अतः किं दुःखेन ? त्वं यावज्जीवं शीलं पालय" । एकदा तत्र जिनः समवसृतः । देशनोत्पन्नवैराग्यो नृपः सुतया सह दीक्षां जग्राह । लक्ष्मणा प्रवर्तिनीसमीपे चरणं पालयति स्म । एकदा महत्तरावाक्येन वसतिशुद्धिविलोकनाय गता, तदा चटकयुग्मं चुम्बनादिपूर्वं रतिक्रीडां कुर्वद्वीक्ष्य दध्यौ—"पतिवियोगवतीं मां धिक् । अहो ! एते पतत्रिणोऽपि वर्ण्याः, ये सदा सहैव क्रीडन्ति । हा श्रीजिनैः कथमेतन्निषिद्धं ? अवेदिनः श्रीजिना न वेदोदयविपाकं जानन्ति" । एतदुक्त्या श्रीजिनेषु अज्ञानदूषणमाविष्कृतं । दम्पतिजं सौख्यं स्तुत्वा पुनः स्वश्रामण्यं विचार्य स्वं निनिन्द—"हा हा मया मुधा व्रतं खण्डितं । अस्य प्रायश्चित्तं गुर्वन्तिके गृह्णामि" । पुनर्मनसि दध्यौ—"अहं बालशीला राजसुता कथं लोकसमक्षं दुष्कृतं गर्हणीयं निन्दामि ? मदीयप्रसिद्धिहानिः स्यात्, तस्मात् परसाक्षिणा किं स्यात् ? आत्मसाक्ष्येव प्रमाणं" इति विचार्य स्वयं तत्प्रायश्चित्तपदे षष्ठाष्टमदशमाचाम्लनीव्यादितपांसि चतुर्दशवर्षपर्यन्तमकरोत्, षोडशवर्षपर्यन्तमासक्षपणानि च । विंशतिवर्षपर्यन्तमाचाम्लानि चकार । अन्यदा दध्यौ—"एतत्तपःफलं साक्षात् किमपि न दृष्टं" इत्याद्यार्तध्यानेन सा मृता वेश्यागृहे सुरूपवती दासी जाता । सर्वेऽपि

कामिनस्तामेव कामयन्ते, वेश्यात्मजां दृष्ट्वाऽपि नेच्छन्ते स्मेति स्वरूपं श्रीरूयाका रुष्टा दध्यौ—"अस्याः कर्णघ्राणाधरच्छेदनं युक्तं"। ततो रात्रौ कश्चिद्व्यन्तरदेवः सुप्तां दासीं प्रति अकाविचिन्तितस्वप्नं ददौ। प्रत्यूपे भययुक्ता सा नष्टा। षण्मासान् यावद्भ्रमन्ती केनचिदिभ्यपुत्रेण स्वगृहे स्थापिता। एकदा श्रेष्ठिभार्या ईर्ष्यातुरा क्रोधेन सनिद्रायास्तद्दास्या मदनमन्दिरे गुह्येऽयस्कुशं संचारयामास। तेन सा मृता। तस्याः शरीरशकलानि विहगादीनामभोजयत्। श्रेष्ठी तद्व्यतिकरं विज्ञाय संविग्नः संयमं जग्राह। ततः सा दासी बहुभवेषु भ्रान्त्वा नरदेवस्य स्त्रीरत्नत्वं प्राप्ता। ततः षष्ठश्वभ्रत्वं, ततः श्वानत्वं बहुगर्भेषु मरणं, निःस्वविप्रत्वं, व्यन्तरत्वं, द्विजत्वं, नरकत्वं, सप्तभवान् यावन्महिषत्वं, ततो मानुष्यं, शफरीत्वं, अनार्ये स्त्रीत्वं, ततस्तमःप्रभायां, कुष्ठिनरत्वं, पशुत्वं, सर्पत्वं, धूमप्रभायां, इत्यादिचतुर्गतिषु भ्रान्त्वा लक्ष्मणाजीवः पद्मनाभजिनवारके कस्मिँश्चिद्ग्रामे कुब्जा कुरूपा सुता भविष्यति। अविनीतत्वे पितृभ्यां गृहतो दूरीकृताऽरण्ये भ्रमन्ती पुण्योदये श्रीपद्मनाभजिनदर्शनं प्राप्स्यति। तत्र स्वं कर्मविपाकं प्रक्ष्यति। श्रीजिनः सर्वस्वरूपं प्रकाशयिष्यति। तदाकर्ण्य वैराग्याश्रिता व्रतं ग्रहीष्यति। पूर्वदुष्कृतान्यालोच्य प्रतिक्रम्य समाधिनाऽन्तिमज्ञानं प्राप्य सेत्स्यति"। इति शीलसन्नाहोक्तं वृत्तं श्रुत्वा रूपीश्रमण्युवाच—"हे पूज्य! मयि किञ्चिच्छल्यं नास्ति"। इति मायाशल्येन स्त्रीत्वमुपार्जितं। अथ सूरिस्तामयोग्यां मत्वा स्वयं माससंलेखनामकरोत्। केवलं प्राप्य सूरिः शिवमवाप। ततो रूपीश्रमणी विद्युत्कुमारदेवीत्वं लब्ध्वा च्युत्वा द्विजतनया श्यामाङ्गी विषयविह्वला जाता। ततो नरके तिर्यग्गतौ चेत्थं त्रिकोनलक्षभवान् यावत्परिभ्रम्य

नरभवे गृहीतप्रव्रज्या श्रीमुनीश्वरगुणानवाप । ततः प्राग्मायात इन्द्रस्याग्रमहिषीत्वं प्राप । ततश्च्युत्वा गोविन्दविप्रस्य भार्याऽभवत् । अस्मिन् भवे प्राप्तव्रता शिवं प्रापेति रूपीश्रमणीसंबन्धः ।

अथ तदा सुज्ञश्रियं विप्रात्मजामाभीरी गोकुली तां प्रलोभ्य स्वगृहे निनाय । तत्र गोरसाशनैश्वेतोहराङ्गाऽभवत् । तत्पिता सुज्ञशिवस्तु नरपशुविक्रयेण पञ्च रत्नान्युपार्ज्य तत्राभीरीगृहे वासार्थमागात् । तद्रूपमोहितो बहुद्रव्यव्ययेन तां पर्यणयत् । एकदा सुज्ञश्रीर्मुनियुगलं वीक्ष्य साश्रुनेत्राऽभूत् । पतिना कारणं पृष्टा साऽऽह—"मम स्वामिनी गोविन्दस्य पत्नी एतादृशो बहून् प्रतिलाभ्य पञ्चाङ्गनमस्कारं करोति स्म, तत्संस्मृत्य शोचामि" । तन्निशम्य निजात्मजां निश्चित्य साऽपि निजजनकमवबुध्य तौ लज्जितौ काष्ठभक्षणोत्सुकौ जातौ । दाहायोग्यत्वेन तयोर्वैश्वानरोऽपि विध्यातः । ततो जनैर्निर्भर्त्सितौ तौ । क्रमान्मुनिं वीक्ष्य सुज्ञशिवो व्रतं जग्राह । सगर्भायाः सुज्ञश्रिया दीक्षां न ददौ । अथ सा गर्भदुःखेनैवं दध्यौ—"अमुं गर्भं विविधक्षारादिना पातयिष्यामि" इतिरौद्रध्यानेन प्रसूतिवेदनाभिः सा मृत्वा षष्ठनरकेऽगमत् । तन्नवप्रसूतः सुतः श्वानेन मुखमध्ये लात्वा कुलालचक्रोपरि मुक्तः । कुलालेन स पुत्रपदे स्थापितः । एकदा स सुसढमुनिदेशनया प्रबुद्धः प्रव्रजितः । जपतपोव्रतादिक्रियासु शिथिलाचारो जातः । गुरुणा शिक्षितोऽपि अयत्नं न तत्याज । ततः प्रथमकल्पे सामानिकसुरो जातः । ततश्च्युत्वा भरतक्षेत्रे वासुदेवो भविता । ततोऽन्तिमश्वभ्रे, ततो हस्ती, ततोऽनन्तकाये,, इत्यादिबहुकालं भ्रान्त्वा सेत्स्यतीति निशीथसूत्रचूर्णिगतं सुसढज्ञातं ॥

आलोचनाऽऽदानकाले कौटिल्यं त्याज्यमन्वहम् ।
ग्राह्या देयाऽऽगमार्थज्ञैस्तत्स्पृहाऽपि शुभावहा ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ विंशस्तम्भे
एकनवत्युत्तरद्विशततमं २९१ व्याख्यानम् ॥

## द्विनवत्युत्तरद्विशततमं २९२ व्याख्यानम् ॥

अथाष्टमविनयतपोवर्णनमाह—

चतुर्धा विनयः प्रोक्तः सम्यग्ज्ञानादिभेदतः । धर्मकार्ये नरः सोऽर्हो विनयाह्वतपोऽन्वितः ॥ १ ॥

स्पष्टः । नवरं ज्ञानादिभेदाच्चतुर्विधो विनयः । तत्र सबहुमानज्ञानग्रहणसंस्मरणादिर्ज्ञानविनयः, आहारनीहारादिषु मौनकरणं चेति १ । सामायिकादिके सकलेऽपि प्रवचने श्रीमदाप्तप्रणीतस्वरूपविसंवादाभावाद्यथार्थवस्तुतत्त्वं प्रति निःशङ्कितत्वादिना दर्शनविनयः २ । चारित्रस्य श्रद्धानं सम्यगाराधकेभ्यः पुरस्तद्गुणस्तवनं तत्स्वरूपदर्शनं इत्यादिश्चारित्रविनयः ३ । प्रत्यक्षवीक्षितेषु सूर्यादिष्वभ्युत्थानाभिमुखगमनकरसंपुटयोजनादिः, परोक्षेष्वपि त्रिभिर्योगैरञ्जलिक्रियागुणकीर्तनानुस्मरणादिश्चोपचारविनयः ४ । अत्रार्थे पञ्चाख्यनरसंबन्धः, तथाहि—

कस्मिंश्चित्पुरे पञ्चशती भारवाहका वसन्ति । तेष्वेको मुख्यः पञ्चकलसीभारवाहक इति तद्गुणं

लोकोत्तरं वीक्ष्य नृपतिनेति वरः प्रसादीकृतः "त्वया भाराक्रान्तेन मार्गे गच्छता संमुखं रथाश्वशकटसैन्यहयादिकं समागच्छद्वीक्ष्य स्वीकृतमार्गत इतस्ततोऽपसरणं न विधेयं, भारार्दितस्य मार्गमोचनदुष्करत्वात्। अहमपि दूरात्त्वां वीक्ष्य मार्गं दास्यामि, अतो मत्तोऽपि त्वया न भेतव्यं किं पुनरन्यतः ?" इत्याज्ञा दत्ता "मदाज्ञालोपकं नरमहं दण्डयिष्यामि"। तदनु स स्वेच्छया पथि व्रजति। तं दृष्ट्वा सर्वेऽप्यपसरन्ति। कोऽपि रोपं (धं) न करोति। एकदा मार्गे संमुखमेकः साधुः समागात्। तं वीक्ष्य स दध्यौ—"मद्भारस्तु परिमितोऽस्ति, मुनेः पञ्चमहाव्रतभारस्त्वपरिमितः, केनाप्यकलनीयः, तमुत्पाट्यासौ परिभ्रमति, अस्याग्रे मदीयवीर्यं निरर्थकं" इति विचार्य स्वयमपसृतः, तदनु सर्वेऽप्यपसृताः, रुष्टास्ते पाश्चात्या इत्यूचुः—"त्वया राजाज्ञोल्लङ्घिता" इति, तै राज्ञे ज्ञापितं। नृपेणाकार्य पृष्टः स आह—"ईषदपि देव! तवाज्ञा न खण्डिता मया"। राजाऽऽह—"कथं ?"। तेनोक्तं—"देव! मत्तोऽस्य महान् भारस्तेनाहमपसृतः"। राजाऽऽह—"स कथं भारवान् ?"। स प्राह—"स्वामिन्! मेरुतोऽप्यधिकभाराणि पञ्च महाव्रतानि वोढुमक्षमोऽहम्। अयं मुनिस्तु वहन्नस्ति, चक्षुःपुलकस्फुरणमात्रमपि कालं यावन्न प्रमादं दधाति। अहं चैतद्बाह्यभारोत्पाटनं करोमि ईर्यादिसमितिविमुक्तः, अनेकजीवानुपमर्द्यानेकभवदुर्मोच्यपापव्यापारभारं वृद्धिं नयामि। यतः पुराऽहं प्रव्रज्यां गृहीतवान्, परं महाव्रतभारं वोढुमशक्तस्तामत्यमुचम्। पञ्चकलसीभारं तु सुष्ठु वहामि, न तु तदङ्गीकृतान्तरङ्गामितभारोत्पाटनार्ह इति मया युक्तं कृतमस्ति। यतः—

भक्तिभरा नमस्यन्ति इन्द्रादयो गतस्मयाः । महाव्रतभराकीर्णास्तदग्रेऽहं कियन्मितः ॥ १ ॥

इति । तथा हे नृप ! पञ्चमहाव्रतानि स प्रत्येकं पञ्चभिर्भावनाभिर्निरन्तरं निर्मलीकरोति । तत्राद्यप्राणातिपातविरमणव्रतसत्कं पञ्चभावनास्वरूपं चेदं प्रवचनसारोद्धारे—

इरियासमिए समिया १ सया जए, उवेह भुंजेज्ज व पाणभोयणं २ ।
आयाणनिक्खेवदुगंछ ३ संजए, समाहिए संजमए मणो ४ वई ५ ॥ १ ॥

व्याख्या—ईर्या गमनं तत्र समित उपयुक्तः समस्तजीवहिंसात्यागार्थमिति प्रथमा भावना १ । तथा सर्वदा सर्वकालं यतः सम्यगुपयुक्तः सन् "उवेह त्ति" अवलोक्य भुञ्जीत गृह्णीत वा पानभोजनं २ । आदाननिक्षेपौ पात्रादेर्ग्रहमोक्षौ प्रमार्जनापूर्वकौ आगमप्रतिषिद्धौ जुगुप्सति न करोति ३ । तथा संयतः समाहितः समाधानपरः सन् संयतते प्रवर्तयति अदुष्टं मनः, दुष्टं हि मनः क्रियमाणं कायसंलीनतादिकेऽपि सति कर्मबन्धाय संपद्यते, श्रूयते हि प्रसन्नचन्द्रराजर्षिरहिंसाव्रतो हिंसामकुर्वन्नपि मनोगुप्त्यभावेन तमस्तमायोग्यं कर्म निर्मितवान् इति ४ । एवं वाचमप्यदुष्टां प्रवर्तयेत्, यया हिंसा न स्यादिति ५ । अथालीकव्रतभावनाः पञ्च भण्यन्ते—

अहस्ससच्चे १ अणुवीय भासए २, जे कोह ३ लोह ४ भय ५ मेव वज्जए ।
से दीहरायं समुपेहिया सिया, मुणी हु मोसं परिवज्जए सया ॥ २ ॥

व्याख्या—अहास्यात् हास्यत्यागात् सत्यवाक्, हास्येन हि अनृतमपि ब्रूयात् १ । तथाऽनुविचिन्त्य

सम्यग्ज्ञानपूर्वकं पर्यालोच्य भाषकः, अनालोचितभाषी हि कदाचिन्मृषाऽप्यभिदधीत, ततश्चात्मनो वैर-
पीडादयः सत्त्वोपघातश्च भवेत् २ । तथा यः क्रोधं लोभं भयमेव वर्जयेत् स एव मुनिर्दीर्घरात्रं मोक्षं
समुपेक्षिता सामीप्येन मोक्षावलोकनशीलः सन् सदा सर्वकालं तु निश्चयेन मृषापरिवर्जकः स्यात्, अय-
मर्थः—क्रोधपरवशो हि वक्ता स्वपरनिरपेक्षो यत्किञ्चिद्भाषी मृषाऽपि भाषते, अतस्तत्त्याग एव श्रेया-
निति ३ । तथा लोभाभिभूतोऽप्यर्थमर्थाकाङ्क्षया कूटसाक्षित्वादिना वितथभाषी स्यादतस्तत्त्यागः ४ ।
तथा भयार्तो निजप्राणादिरक्षणेच्छया सत्यवादितां व्यभिचरति, ततो निर्भयवासनाधानमात्मनि विधेय-
मिति ५ । अथादत्तादानव्रतभावनाः प्रोच्यन्ते—

सयमेव उग्गह जायणे १ घडेअ, मइमं निसम्म २ सइ भिक्खु उग्गहं ३ ।
अणुन्नविय भुंजिय पाणभोयणं ४, जाइत्ता साहम्मियाण उग्गहं ५ ॥ ३ ॥

व्याख्या—तत्र स्वयमेवात्मनैव न तु परमुखेन साधुः प्रभुसमादिष्टं वासमापरिज्ञायावग्रहस्य देवेन्द्र-
राजगृहपतिशय्यातरसाधर्मिकभेदभिन्नस्य याचने याञ्चायां प्रवर्तते, परमुखेन हि याचनेऽस्वामियाचने
च परस्परविरोधादयो दोषा इति १ । तथा तत्रैवानुज्ञापितावग्रहे तृणादिग्रहणार्थं मतिमान् घटेत चेष्टेत
निशम्याकर्ण्य अवग्रहप्रदातुस्तृणाद्यनुज्ञावचनं, अन्यथा तददत्तं स्यादिति २ । तथा सदा सर्वकालं
भिक्षुरवग्रहं स्पष्टमर्यादया याचेत, सकृद्दत्तेऽपि स्वामिनाऽवग्रहे भूयो भूयः प्रश्रवणादिपरिष्ठापनकार्ये-
ष्ववग्रहो याच्यः ३ । तथाऽनुज्ञाप्य गुरुमन्यं वा भुञ्जीत पानभोजनं, अयमर्थः—सर्वं गुरुणाऽनुज्ञात-

मेव जोक्तव्यं, अन्यथाऽदत्तजोगदोषः स्यादिति ४ । तथा समानो धर्मः सधर्मस्तेन चरन्तीति साधर्मिकाः प्रतिपन्नैकशासनाः संविग्नाः साधवस्तेषां पूर्वपरिगृहीतक्षेत्राणामवग्रहं मासादिकालमानेन पञ्चक्रोशादिक्षेत्ररूपं याचित्वा स्थानादि कार्यं, तदनुज्ञातं हि तत्रोपाश्रयादि समस्तं गृह्णीयात्, अन्यथा चौर्यं स्यादिति ५ । इदानीं चतुर्थव्रतपञ्चजावनाः पठ्यन्ते—

आहारगुत्ते १ अविजूसियप्पा २, इत्थी न निझाय ३ न संथवेज्जा ४ ।
बुद्धे मुणी खुद्दकहं न कुज्जा ५, धम्माणुपेही बंजचेर संधए ॥ ४ ॥

व्याख्या—तत्राहारे गुप्तः स्यान्न पुनः स्निग्धमतिमात्रं जुञ्जीत, धातुपुष्ट्या च वेदोदयादब्रह्मापि सेवेत १ । तथाऽविजूषितात्मा स्नानविलेपनादिविविधविजूषाविरहितदेहः २ । तथा स्त्रियं तदङ्गान्यपि न निरीक्षेत ३ । तथा स्त्रियं न संस्तुवीत स्त्रीजिः सह परिचयं न कुर्यादिति ४ । तथा बुद्धोऽवगततत्त्वो मुनिः साधुः क्षुद्रामप्रशस्यां स्त्रीकथां न कुर्यादिति ५ । एताजिः पञ्चजिर्जावितान्तःकरणो धर्मानुप्रेक्षी धर्मसेवातत्परः संधत्ते सम्यक्पुष्टिं नयति ब्रह्मचर्यमिति । अथ पञ्चमव्रतजावना निगद्यन्ते—

जे सद्दरूवरसगंधमागए ४, फासे य संपप्प मणुन्न पावए ५ ।
गेही पओसं न करेज्ज पंक्ष्िए, से होइ दंते विरए अकिंचणे ॥ ५ ॥

व्याख्या—तत्र यः साधुः शब्द १ रूप २ रस ३ गन्धान् ४ आगतान् इन्द्रियविषयीजूतान् स्पर्शांश्च संप्राप्य समासाद्य मनोज्ञान् मनोहारिणो पावकान् विरूपानिष्टांश्चेत्यर्थः गृद्धिमजिष्वंगलक्षणां प्रद्वेषं

चाप्रीतिलक्षणं यथाक्रमं न कुर्यात् पण्डितः स दान्तो जितेन्द्रियो विरतः सर्वसावद्ययोगेभ्यो भवति अकिञ्चनः निःपरिग्रहः स स्यादिति । पञ्चसु विषयेषु अभिष्वङ्गप्रद्वेषवर्जनात् पञ्चमव्रतस्य पञ्च भावनाः। सर्वाः पूर्वोक्ता मिलिताः पञ्चविंशतिरिति । इत्याद्यनेकयुक्त्या महाव्रतभारोद्वहनं दुर्धरं प्रकाशितं तेन पञ्चाख्येन । इति निशम्य स नृपः स्माह—"हे पञ्चाख्य ! त्वं महावीर्यवानसि, ईदृशं पञ्चकलसीमितं महाभारं स्वीकरोषि, महाकष्टमनुभवसि, त्वयैतद्व्रताचरणं कथं त्यक्तं निर्भारं सूद्वहं ? नात्र किञ्चिद्दुष्करं दृश्यतेऽस्माभिस्तु" । स प्राह—"स्वामिन् ! त्वयाऽनेकश इन्द्रियानुरूपा विषया भुक्ताः, इदानीं स्वपुत्रे राज्यं न्यस्य तदनुरूपमेकदिनं यावत्संयमं त्वं समाचर, तदनुरूपां क्रियां कुरु" । ततः स नृपोऽभिमानपूर्णस्तदर्थं सोद्यमो जातः । तदा स्वाङ्गना इति जजल्पुः—"हे प्राणेश ! त्वत्पृष्ठिं वयं क्षणमपि न मुञ्चामः, वयं त्वां विना रतिं न लभामहे, अन्तप्रान्ततुच्छाहारादिभिर्द्वाविंशतिपरीषहैः कमनीयकामिनीभोगार्हं त्वद्वपुर्विनंक्ष्यति, तदनु प्रत्यहं भावि पश्चात्तापदुःखं सुकरं । अपि च यदि त्वं निःस्पृहत्रिकालवस्त्ववाञ्छकमुनिगुणतिरस्कारणार्थं दर्पभरेणेदं कार्यं कामयसे, तन्न समीचीनं, तत्कार्यं तु समस्तदर्पदम्भविरहितमस्ति" । इति श्रुत्वा नृपः स्माह—"अहो ! इदं महादुष्करं, मया त्वज्ञानेन जल्पितं । यदा सर्वथा निराशीभावो जायते तदैव तदुचितस्वभावो द्योतत इति" । ततो नृपस्तं भारवाहमुख्यमित्यवोचत्—"समस्तपुद्गलाशाविमुक्तं मुनित्वमेकदैवसिकमप्यतृप्तजीवानां न स्पृशति" । स पञ्चाख्यः स्माह—"हे क्ष्माप ! तेन मुनिना यौवनकालेऽपि प्रत्यक्षप्राप्तं काञ्चनकामिनीराष्ट्रसौख्यं तृणवत्त्यक्त्वा यावज्जीवं

संयमभारोद्वहनं स्वीकृतं, तदनुवृत्त्या चरमश्वासोच्छ्वासपर्यन्तं पालयिष्यति । मया श्रीमुमुक्षुप्रणीतस्याद्या-दागमवचनानि निशम्य महाव्रतोद्वहनमङ्गीकृतमासीत्, परं क्लीबबलीवर्दसदृशोऽहं जातः । गजभा-रस्तु गज एवोत्पाटयति, न तु खरः । तथा विश्वे समस्तपृथ्वीजलधिगिरितरुप्रभृतिभारोद्वहने केचित्स-मर्थाः श्रूयन्ते, परमस्योद्वहने तु अयमेव क्षमावान् क्षमो वीक्ष्यते । अत एव हे नृप ! मया वर्त्मनि विनयेन नुतः स्तुतश्च" । इति श्रुत्वा नृपादयो जैनमुनिविनयपरा बभूवुः । इति बुध्वा रञ्जितनृपस्तं स्वाङ्गसेवकं चकार । नित्यं धर्मकथां ततान इति ॥

हित्वाऽपि चारित्रगुणान् गुरुद्वहान्, राजा तु धर्मी कृत ( तः ) भारवाहिना ।
एको न त्यक्तो विनयो गुणाग्रज-स्तेनैव सर्वोत्तमतां स लप्स्यते ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ विंशस्तम्भे द्विनवत्यधिकद्विशततमं २९२ व्याख्यानम् ॥

## त्रिनवत्यधिकद्विशततमं २९३ व्याख्यानम् ॥

अथ पुनर्विनयवर्णनमाह—

बाह्याभ्यन्तरभेदाभ्यां द्विविधो विनयः स्मृतः । एकैकोऽपि द्विभेदः स लोकलोकोत्तरात्मकः ॥ १ ॥

स्पष्टः। नवरं भावार्थस्त्वयं—वन्दनवाक्स्तुत्यभ्युत्थानाभिमुखगमनादिविनयो बाह्यविनयः, अन्तःकरणतो वन्दनादिकरणं स चाभ्यन्तरविनयः। इह प्रसङ्गाच्चतुर्भङ्गी विधेया। तथाहि—कश्चिद्बाह्यविनयं तनोति नान्तरीयकं शीतलाचार्यवत्। अथवा मुखं पद्मदलाकारं इत्यादिकं ज्ञेयं। कश्चिदाभ्यन्तरविनयं विदधाति, न तु बाह्यं, सप्तमस्वर्गसुरा इव, तथाहि पञ्चमाङ्गानुसारेण—सप्तमस्वर्गिणः श्रीवीरं भावतो नत्वा मनसैव प्रश्नं पृष्टवन्तः। प्रभुणाऽपि "मे सप्तशतशिष्या मोक्षं प्राप्स्यन्ति" इत्युत्तरं दत्तं। तदा जातसंशया गौतमादयः स्वामिनं पप्रच्छुः—"अमीभिर्देवैर्बाह्यविनयः कथं न विहितः?"। तदा प्रभुणाऽऽन्तरिकभक्त्या पृष्टप्रश्नादिस्वरूपं सर्वं गदितं, तन्निशम्य ते विस्मयं प्रापुरिति। कश्चिद्द्वावपि विनयौ अतिमुक्तकर्ष्यादिवत्समाचरति। कश्चिद्द्वावपि तौ नादत्ते गोष्ठामाहिलमङ्खलीपुत्रादिवत् इति। अथ तौ विनयौ प्रत्येकमपि द्विभेदेन ज्ञेयौ, तद्यथा—बाह्यविनयो लोकसंबन्धी जनकादिषु प्रयोगार्हः, आभ्यन्तरविनयो लोकसंबन्धी जनकादिषु अन्तरङ्गप्रीत्याऽभ्युत्थानाद्यर्हः। तथा लोकोत्तरो जैनमार्गे, बाह्यो लोकोत्तरविनयो धर्माचार्यादिषु अभ्युत्थानादिना ज्ञेयः, तदन्यस्तु तेष्वन्तरङ्गभावेन विधिवन्दनादिना ध्येयश्चेति। अथान्यगुणभ्रष्टोऽपि विनयवान् धर्मं लभत इत्याह—

अन्यैर्गुणैः प्रभ्रष्टोऽपि यद्यस्ति विनयो दृढः। भूयो गुणानवाप्नोति अर्हन्नकनिदर्शनम् ॥ १ ॥

स्पष्टः। भावार्थस्तु श्लोकोदितज्ञातेन ज्ञेयः। तथाहि—तगरापुर्यां दत्तनामेभ्यो भद्राभार्यया साकं पञ्चेन्द्रियसौख्यं भुञ्जानोऽर्हन्नकाख्यं पुत्रमजीजनत्। एकदाऽर्हन्मित्राचार्यसन्निधौ आर्हतं धर्ममाकर्ण्य

विरक्तः पत्नीसुतान्वितो दत्तो व्रतमादत्त । ततः सम्यक्क्रियायुक्तोऽपि दत्तः "आयतौ मत्सुतः संयमं पालयिष्यति" इति बुद्ध्या स्नेहाच्चेष्टैर्भोज्यैस्तं पुत्रमपुष्यत् । तं कदाचिद्भिक्षार्थं न प्रेषयामास । "समर्थोऽप्येष किं भिक्षाचर्यां न कार्यते" ? इति ध्यायन्तोऽपि निर्ग्रन्थाः किमपि वक्तुं न शक्नुवन्ति, यद्वा पुत्रं पालयन् पिता केन निषेद्धुं शक्यते ? । ततोऽन्येद्युर्निदाघसमये दत्तसाधुः समाधिना व्यपद्यत । तद्वियोगात्स महादुःखमाससाद । ततोऽन्ये संयतास्तातविरहार्तचेतसे तस्मै द्वित्रान् दिनान् यावदाहारमानीयार्पयन् । अथ ते यतयोऽवोचन्—स्वयं भिक्षार्थं पर्यट, इदानीं कोऽपि पितृवदानीय भोजनं न दास्यति" । कर्णे त्रपुसमां तद्वाचं निशम्य विमनाः स मुनिभिः समं भिक्षायै चचाल । पूर्वं कदाप्यकृतश्रमोऽतीव सुकुमाराङ्गो ग्रीष्मार्ककिरणोत्तप्तरेणुकानिकरेण पदोस्तपनांशुभिश्च मौलौ वाढमदह्यत । तृषा शुष्यन्मुखाम्बुजोऽन्यसाधुभ्यः पश्चात्स्थितो विश्रामाय महेभ्यसदनच्छायां स शिश्राय । तत्रस्थं मन्मथाकारं तं तद्गृहेश्वरी चन्द्रमुखी प्रोषितभर्तृकाऽपश्यत् । सेत्यचिन्तयत्—"अहो ! अस्य सौन्दर्यं वर्यं ! यद्दृष्टमात्रमपि मम मानसं समाकृषति, अनेन सह विलासं विधाय वयः सफलं करोमि" इति ध्यात्वा सा तदाह्वानहेतवे दासीं प्राहिणोत् । सोऽपि दास्याऽऽहूतस्तद्गृहेऽविशत् । साऽपि हर्षभरोदञ्चत्कुचकुम्भा तमभ्यगात् । स्मितोन्मिश्रदन्तांशुद्योतिताधरा सा विलोचनयुगं नमयन्तीति पप्रच्छ—"हे जीवजीवन ! किं भवान् याचते ? " । अथार्हन्नकः स्माह—"हे सुलोचने ! रतिपतिप्रिये ! अहं भिक्षामभ्यर्थये" । ततः सा व्यमृशत्—"अमुं कामोद्दीपकवस्तुनिष्पन्नस्निग्धमधुरदृष्टमात्रविकृतिकराहारदानतो

वशीकरोमि"। इति ध्यात्वा सुन्दरान् बहून्मोदकाँस्तस्मै साऽऽपर्यत्। सोऽपिपर्यटनग्लानस्तान् प्राप्य भृशं मुमुदे। पुनः स्निग्धया दृष्ट्या पश्यन्ती सा तं पप्रच्छ—"अस्मदङ्गव्याप्तस्मरतापव्यापनिवारणक्षमं कदलीस्तम्भकोमलजङ्घास्थलीभ्रक्षणसौकुमार्यान्वितकमनीयकामिनीस्पृहणीयं यौवनं प्राप्य किं परीषहकुठारैस्तरुमिव प्रोत्फुल्लयौवनवाटिकामुन्मूलयसि ? नायं ते व्रतग्रहणसमयः। स्त्रीमुखलालसाः केचिज्जीवाः क्षुधातृषादिकष्टं सहन्ते, तथापि स्वप्नेऽपि तत्सुखप्राप्तिर्दुर्लभा दृश्यते, त्वया त्वनायासेन तदधुना लब्धं, एतावद्दिनव्रतफलमभ्यर्क्षं प्राप्तं, यतः—

कुरूपदुःस्थस्थविरकर्कशाङ्गजनोचिताम्। इमां कष्टक्रियां मुञ्च मुधा स्वं वञ्चयस्व मा ॥ १ ॥

आवयोरिदं रूपं शरीरं चान्योऽन्यसङ्गमासाद्य सफलत्वं प्रपद्यतां। यदि च भवतो दीक्षायामत्यन्तमाग्रहो भवेत्तदा भुक्तभोगो वार्धके भूयः समाचरेः"। तद्वचस्तस्याः श्रुत्वा विभ्रमाँश्च विलोक्य स भग्नचित्तोऽभवत्। यदुक्तम्—

दृष्टाश्चित्रेऽपि चेतांसि हरन्ति हरिणीदृशः। किं पुनस्ताः स्मितस्मेरविभ्रमभ्रमितेक्षणाः ॥ १ ॥

ततस्तद्वाचं स्वीकृत्य तद्गृहेऽवतस्थे। अत्यन्तरक्तया तया सार्कं यथाकामं रेमे। अथ गोचरचर्यायां वसतौ चार्हन्नकमप्रेक्षमाणा मुनयो निखिले पुरेऽन्वेषयन्तः क्वापि तत्प्रवृत्तिमपि नालभन्त। ततस्ते तन्मातुरार्यायास्तद्वृत्तान्तमूचिरे। तां वार्तां निशम्यातिगरीयसा पुत्रशोकेन भूताविष्टेव प्रणष्टचित्ता सोन्मत्ततामगात्। ततो "भो अर्हन्नक! भो अर्हन्नक" इत्युच्चस्वरेण विलपन्ती सगद्गदं सा समस्तपुर-

श्यामचतुष्पथादिष्वभ्रम्यत् । मोहतमिस्रेण पदे पदे प्रस्खलन्ती नयनश्रवदश्रुभिर्मार्गरेणुमार्द्रीकुर्वती यं य पश्यति तं तं पुनः पुनः पृच्छति—"मम पुत्रः प्राणवल्लभोऽर्हन्नकः क्वापि दृष्टः ?" । तदा सुजनैरनुकम्प्यमाना दुर्जनैश्च हस्यमानाऽन्यदोच्चैर्गवाक्षस्थेनार्हन्नकेन सा दृष्टा । तादृशीं तदवस्थां प्रेक्ष्य तां प्रत्यभिज्ञाय स इति दध्यौ—"अहो मम निर्विनयत्वं ! अहो दुष्कर्मकारिता मम ! क्षणिकसुखार्थमस्या वचनैर्मया मुक्तिप्रदं व्रतं त्यक्तं । ईदृशे दुःसहे कष्टे माता पातिता । लोकशास्त्रेऽष्टषष्टितीर्थेभ्योऽपि मातुर्विनयफलमत्यन्तं निगदितं । ततोऽपि विशेषेणेयं पूज्या मन्माता श्रीजैनधर्मज्ञत्वात् साध्वीव्रतप्रपन्नत्वाच्च । अथवा हहा स्वात्मा व्रतभञ्जनेन भवाब्धौ पातितः । परं चास्या मातुरार्याया महाव्रतविलोपकरणसहायी जातोऽहं । अहो परम्परया पापप्रवृद्धिर्जाता । अनया चन्द्रवदनया मुखमिष्टं बाह्यसुन्दरमनन्तमरणादिदुःखदं हावभावादिविषं पायितं । धिगस्या लावण्यं नेपथ्यं नैपुण्यं च । केवला श्वभ्रदाऽस्याः सर्वा चतुरता दृश्यते, न त्वपरा स्वल्पाऽपि । हे चेतन ! तव द्वौ मार्गौ स्तः—एकश्चन्द्रमुखीदर्शितपापमार्गः, द्वितीय एतयाऽऽर्यया दर्शितो मोक्षमार्गः अतो यः श्रेयाँस्तं समाचर । इदानीमपि मन्मातुः शोकमुन्मूलयाम्यहं" । इति ध्यात्वा स तस्माद्गृहाच्छीघ्रं निर्जगाम । साऽपि मृगेक्षणाऽन्तरा सहसा समेत्य विरहविलापानुकूलपरीषहकरणादिकं कृत्वा स्माह—"अधुनाऽत्राबलाहत्यापातकं तव भावि । हे निर्दय ! निष्ठुर ! किं मां मुधा वृक्षशृङ्गादिभ्यः पातयसि ? किमर्थं मुग्धां मां दुःखचितायां जुहोषि ? मालतीपुष्पमालामिव कोमलां मञ्जुलामकुटिलां मां जहासि ? सुरसां विधाय किं विरसां करोषि ?" । इति

श्रुत्वा स प्राह—"हे पापसमुद्र ! क्षणिकसुखार्थे मुधेदृशान् विलापाँस्तनोषि । प्रागहमज्ञानग्रस्तत्वाद्विभ्रमेषु पतितः । श्रीपरमात्मत्रिभुवनैकशरणदधर्मो दूषितः । अथात्र वासो मम नार्हः । मन्माता धन्या, यया मम विवेकमार्गो दर्शितः । भवपातनमार्गदर्शका विश्वे बहवो दृश्यन्ते, परं पतितोद्धारणपावनक्षमस्तु मज्जननीसमः कोऽपि नास्ति, अतः परं यावज्जीवमिन्द्राग्रमहिष्यादिसौख्यमपि नाभिलषामि तर्हि किमन्यमनुष्यस्त्रीसौख्यं ? त्रिविधयुक्त्या मया सर्वं त्यक्तं" । इत्याद्युक्त्वा सलज्जः सविनयं जननीं नत्वा साह—"हे मातः ! असावर्हन्नकः कुलाङ्गारोपमस्त्वां नमति" इति ब्रुवन् बाष्पाप्लुताक्षस्तां ननाम । तं वीक्ष्य स्वस्थचित्ता सा सप्रमोदैवमुवाच—"हे पुत्र ! त्वं कुत्रैतावन्ति दिनान्यस्थाः ?" । ततः स निर्दम्भः प्राक्प्रशस्तसरागध्यानतोऽनन्तगुणशुभवैराग्याध्यवसायाढ्यो निजं सर्वं वृत्तं प्रोवाच । तच्छ्रुत्वा साऽवदत्—"हे वत्स ! भूयः संयमं स्वीकुरु" । ततः स प्राह—"हे मातः ! प्रत्यहं संयमक्रियापालनं मम दुष्करं भाति । अन्वहं सप्तचत्वारिंशद्दोषरहितमशनं ग्राह्यं, निमेषमात्रमपि प्रमादो न विधेयः, करेमि भंते समुच्चरितं तत्समयादारभ्य चरमसमयं यावन्निरतिचारं चारित्रं समाराध्यं, इत्यादिसमस्तसाधूचितक्रियानिर्मापणे निरन्तरं तु नाहं क्षमः पापोऽहं व्रतपालने नैव शक्तोऽस्मि ततो वदसि चेन्मातस्तदाऽनशनं करोमि" । इति श्रुत्वा तुष्टा भद्रार्याऽभ्यधात्—"हे भद्र ! तवैतदपि सांप्रतं घटते, परमनन्तभवभ्रान्तिनिमित्तं व्रतभञ्जनं नार्हं । किं च सुकरपञ्चव्रतपालनोद्विग्नो भवसि त्वं, तर्ह्यनशनं तु महादुष्करं योग्यानामेव तज्जायते । त्वं तु शुभाशुभपुद्गलान् वीक्ष्य रागविरागौ दधासि, ततस्त्वद्विश्वासो ज्ञानि-

वचसा प्रतीयते, नान्यथा" । स दध्यौ—"नूनं मातू रागो ममोपरि प्रशस्तोऽस्ति" । ततः परीक्षार्थमित्याह—"हे मातः ! अधुना मदीयस्वरूपविरहार्दिता त्वमीदृशीं दशां प्राप्ता तर्ह्यनशनेन तु सर्वथा मदीयदेहाभावो भावी, तद्व्यथां त्वं कथं सहिष्यसे ?" । "हे पुत्र ! सत्यं त्वयोक्तं, परं शृणु—त्वद्विरहार्दितया मयेति ध्यातं हहा मदङ्गजोऽकृतधर्मा इन्द्रादीनां दुर्लभं संयमरत्नं तृणमिव त्यक्त्वा संसारदुःखं प्राप्स्यति, अत एनं शीघ्रं बोधयामि" । इत्याकर्ण्य स स्माह—"हे मातः ! त्वं लोकलोकोत्तराहां द्विधाऽपि सौख्यदा जाता । किं बहुना ? त्वयाऽहं सम्यगुद्धृतः, प्राग्ममेह जन्मप्रदा, पश्चादनन्तजन्मघ्नधर्मप्रदा जाता" इत्यादि संस्तूय श्रीगुरुपार्श्वे संयममङ्गीकृत्य ज्ञानिवचसा जातनिश्चयाया मातुराज्ञां प्राप्य सर्वसावद्ययोगं प्रत्याख्याय निजं दुरितं निन्दित्वाऽखिलान् जन्तून् क्षमयित्वा बाह्यवनशिलायां दिने शांशुतापितायां स्थित्वा चत्वारि शरणान्यादाय पादपोपगमनानशनं दधौ । ततोऽतिदारुणामुष्णवेदनां सम्यक्सहमानः स साधुः सुकुमाराङ्गस्तत्र म्रक्षणपिण्डवन्मुहूर्त्तेन व्यलीयत, तत्कालं त्रिदशसख्यमङ्गीचकारेति ॥

चन्द्राननास्नेहनियन्त्रितोऽपि यो, दृष्ट्वा स्वमातुर्विनयं जहौ न हि ।
तेनैव भूयो निजदुष्टतां त्यजन्, सोऽर्हन्नको निर्जरसौख्यमाप्तवान् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ विंशस्तम्भे
त्रिनवत्युत्तरद्विशततमं २९३ व्याख्यानम् ॥

## चतुर्नवत्युत्तरद्विशततमं २९४ व्याख्यानम् ॥

अथ नवमवैयावृत्त्यतपःस्वरूपमाह—

यथार्हं तत्प्रतीकारो व्याधिपरीषहादिषु । वैयावृत्त्यं तदुद्भाव्यं विश्रामणाशनादिभिः ॥ १ ॥

स्पष्टः । नवरं ग्लानस्य मार्गाटनादिभिर्जातश्रमनिवारणार्थं करचरणपृष्ठिजङ्घादिषु यन्मुष्टिभरणेन संवाधनं ( संवाहनं ) तद्विश्रामणं, तद्गुर्वादीनामजस्रं विधेयं । अशनमाहारः । आदिशब्दाद्वस्त्रपात्रप्रदानादिभिर्यथाशक्ति तदनुकूल्यानुष्ठानं, तद्वैयावृत्त्यमवश्यं कार्यं । अत्रार्थे वक्ष्यमाणानि ज्ञातानि ज्ञेयानि । तथाहि—प्राग्जन्मनि साधुपञ्चशत्या नित्यमन्नपानप्रदानविश्रामणकरणाभिग्रहिणौ भरतबाहुबलिनौ ग्लानवैयावृत्त्याभिग्रही वसुदेवजीवो नन्दिषेणमहर्षिश्च । तथा परीषहोपसर्गादिषु संजातेषु तत्प्रतीकारः कार्यः, अत्र हरिकेशिसाधुवैयावृत्त्यकारकतिन्दुकयक्षज्ञातं श्रीमदुत्तराध्ययनसूत्रानुसारेण ज्ञेयं, इत्यादिनिदर्शनानि । अस्य फलं विशिष्टतरं सूत्रेऽभिहितं यतः—"वेयावच्चेणं भंते जीवे किं जणइ ? गोयमा ! निच्चगोयं कम्मं न बंधइ ।

वेयावच्चं निययं करेह उत्तमगुणे धरंताणं ।
सव्वं किर पडिवाई वेयावच्चं अपडिवाई ॥ १ ॥
पडिभग्गस्स मयस्स व नासइ चरणं सुअं अगुणणाए ।
न हु वेयावच्चच्चिय असुहोदय नासए कम्मं ॥ २ ॥

अथैतन्निष्पादनानिष्पादनयोः फलं विपुलमतिदृष्टान्ततोऽभ्यूह्यं । यतः—

गुरुजत्तिं अकुणंतो कुगइं जीवा लहंति पुणरवि ( य पुणाइ ) ।
तं च कुणंतो सुगइं विउलमई इत्थ दिट्ठंतो ॥ १ ॥

व्यासार्थस्तु कथानकेनोच्यते—विराटविषये विजयपुरे श्रीचूडो नरेन्द्रः तस्य बहुमान्यो जिनदत्तनामा श्रेष्ठी परमश्रावकः । तस्य सुबुद्धिर्विमलमतिः पुत्री । तन्नगरे तन्मित्रं धनमित्रश्रावकः । तौ द्वावपि धर्मं प्रतिपालयतः । एकदा शीतकालः समागतः । तद्वर्णनं कश्चित्कविर्भोजराजसमीपे कृतवान्, तद्यथा—

शीतत्राणपटी न चास्ति शकटी भूमौ च घृष्टा कटी,
निर्वाता न कुटी न तण्डुलपुटी तुष्टिर्न चैकां घटीम् ।
वृत्तिर्नीरैञ्जटी प्रिया न गुमैटी तन्नाथ मे सङ्कटी,
श्रीमद्भोज तव प्रसादैकरटीभङ्क्ता ममापत्तटी ॥ १ ॥

अथवा—

रात्रौ जानु दिवा भानुः कृशानुः सन्ध्ययोर्द्वयोः ।
राजन् शीतं मया नीतं जानुभानुकृशानुभिः ॥ २ ॥

तथा चातिशीतं पतति । एकदा धनमित्रेण कौतुकाद्भणितं—"यः कश्चिद्बहिरुद्याने शीतजलभृते

१ निर्दोषा. २ शोभना. ३ प्रसादहस्तिन्या भक्ता.

सरोवरे माघमासे आकण्ठमग्नः समग्रां रात्रिं तिष्ठेत्तस्य लक्षधनं ददामि"। ततो लोकसमक्षं धनलुब्धेन जिनदत्तेनाङ्गीकृतं। रात्रौ तत्र स्थित्वा प्रभात आगत्य भणितं—"देहि मे दीनारलक्षं"। धनमित्रेणोक्तं—"कोऽत्र प्रत्ययः?"। जिनदत्तेनोक्तं—"तव गृहे यामचतुष्कं प्रदीपः प्रज्वलन् स्थितः" तदाऽऽह धनमित्रः—"प्रदीपदर्शनेन शीतं प्रणष्टं तव, अतो न ददामि"। ततो विलक्षीभूय गतो गृहे। अथ तं चिन्तातुरं दृष्ट्वा विमलमतिः पुत्री प्राह—"मा कुरु खेदं, यथा तव धनप्राप्तिर्भविष्यति तथा विधास्यामि"। ततोऽत्युष्णकाले धनमित्रं भोजनार्थं स्वगृहे निमन्त्रितवान् मध्याह्ने, परिवेषितमतिलवणं स्निग्धभोजनं, भोजनमध्ये जलं मार्गितं, ततः शीतलजलभृता गर्गरी दर्शिता, उक्तं च—"यथा दीपदर्शनेन माघमासे शीतं नष्टं तथैतद्दर्शनेन पिपासानाशोऽपि भवतु"। एवं निरुत्तरे कृते हारितं जिनदत्तेन। ततो होराहारितं धनं दत्तं। ततः पानीयं प्रदत्तं। अथ गृहागतेन जिनदत्तेन विमृष्टं—"कस्येयं मतिः?।" केनाप्युक्तं—"विमलमत्याः पुत्र्याः"। ततो विमलमती पुत्री पाणिग्रहणार्थं याचिता, परं पित्रा न दत्ता "मा पुत्रीं क्रोधाज्जिनदत्तो विरूपां करोतु" इति। विमलमत्योक्तं—"देहि मां तस्मै, सर्वं बुद्धिप्रसादात्समीचीनं भावि"। यतः—

यस्य बुद्धिर्बलं तस्य निर्बुद्धेश्च कुतो बलम्। बद्धो गजो वने मत्तो मूषकैः परिमोचितः॥ १॥

दत्ता कन्या। जातं पाणिग्रहणं। विवाहानन्तरं तां कूपे क्षिप्त्वोक्तं—"कङ्कुतण्डुलभक्षणेन कार्पासं कर्तयन्ती तावत्तिष्ठ यावत्ते सुतो भवति, अहं परदेशे द्रव्योपार्जनाय यामि"। ततो गतः पतिः।

एतया पितृगृहे सुरङ्गाप्रयोगेण निर्गतया स्वस्थान एको भृत्यो मुक्तः, यः प्रतिदिनं कङ्गुतण्डुलान् गृह्णाति । कार्पासं तु पित्रेऽर्पितं, उक्तं च—"कर्तयित्वा स्थापय, अहं तत्र यामि यत्र पतिरस्ति"। तत्र गत्वा वेश्यावृत्त्याऽऽवर्जितः पतिः, अनुक्रमेणोत्पन्नः पुत्रः । ततः पत्यागमनपूर्वमागता स्वगृहे, कूपे च प्रविष्टा । एवं कतिभिर्दिनैरागतः पतिः । स्वजनैरुक्तं—"निष्कासय स्वजायां"। निष्कासिता ससूत्रा सपुत्रा च । ततो जिनदत्तेन गृहस्वामिनी कृता । लोके महती प्रतिष्ठा जाता । अथान्यदा भव-देवसूरयः समागताः । धनदत्तेन सकलत्रेण प्रणम्योक्तं—"स्वामिन् ! किं पूर्वभव एतया पुण्यमुपा-र्जितं ? यत्प्रसादेनैतस्या एतादृशी मतिर्जाता ?" । गुरुणोक्तं—"महानुभाव ! कुसुमपुरे भानुदेवस्य पुत्री रोहिणी बालविधवा । एकदा ग्रामान्तरादागतस्वगृहस्थवणिक्पुत्रं दृष्ट्वोत्पन्ना कामरागवासना । विलोकितं च कटाक्षचपलया दृष्ट्या । लक्षितं च भिक्षानिमित्तं समागतेन शीलसारमुनिना । यतः—

जइ वि न सइ न संपजे नट्ठुअं झाएइ हियमज्झम्मि ।
मयणाउरस्स दिट्ठी लक्खिजइ नहविलोएण ॥ १ ॥

"अहो ! दुर्जयो मदनपरिसरः" इति चिन्तयन्निर्गतः शीलसारमुनिः । अथ क्रमेणाधिगतसमस्त-सूत्रार्थो गीतार्थः शीलसारमुनिराचार्यपदे स्थापितो भव्यजीवप्रबोधार्थं समागतः कुसुमपुरे । दत्ता च देशना । प्रबुद्धा रोहिणी । दीक्षादानावसरे गुरुणोक्ता—

जह सुविसुद्धे कुड्डे लिहियं चित्तं विहाइ रमणिज्जं ।
तह अणइयारजीवे सम्मत्तं गुणकरं होइ ॥ १ ॥
जह लंघणहणिअरस्स रोगिणो ओसहं गुणाय भवे ।
आलोयणाविसुद्धस्स धम्मकम्मं तहा सयलं ॥ २ ॥

एवं श्रुत्वा तया सर्वमालोचितं, परं दृष्टिविकारो नालोचितः । आचार्येणोक्तं—"महानुभावे ! तदा मया भिक्षार्थं समागतेन साक्षाद्दृष्टिविकारो दृष्टः, स भवत्या नोच्यते तत्किमिति ?" तयोक्तं—"स वणिक्पुत्रो मया विलोकित एव" । ततो गुरुभिर्लक्ष्मणार्यायाः संबन्ध उक्तस्तथापि नाङ्गीकृतं, "वारंवारं कथनेन किं मय्यविद्यमानं दूषणमुच्यतेऽलीकदूषणदानेन ? तिष्ठतु संयमो दूरे, मया चारित्रं न गृहीतव्यं" इत्युक्त्वाऽगृहीतसम्यक्त्वा गुरुद्वेषिणी गता स्वगृहे । प्रतिसमयमुच्छलन्मत्सरा गुरुनिन्दादिपरा सा मृत्वा शुनी जाता । ऋतुकाले योन्यां जीवाकुला मृत्वा जाता सर्पिणी, दवाग्निदग्धा मृता नरके । ततो व्याघ्री व्याधेन मारिता पुनर्नरके । इत्याद्यसङ्ख्यभवेषु दुःखं सहमाना तिर्यक्षु नरकेषु तथा दौर्भाग्यरोगदारिद्र्यशोकप्रियवियोगप्रमुखैर्दुःखैर्बहुशः स्त्रीजन्म प्राप्यासङ्ख्यकालेनोत्पन्ना धन्यपुरे गोवर्धनगृहपतेर्धन्यानाम्नी पुत्री । अथ प्राप्ते तारुण्ये दृष्टा ग्राममहत्तरपुत्रेण, मार्गिता परिणीता च । वासभुवनेऽ-

१ कुड्ये भित्तौ ।

स्या अङ्गस्पर्शात्कोऽपि संतापः प्रादुर्भूतो येन ज्वलितज्वलनमिवात्मानं मन्यमानो नष्टो रात्रौ । प्रभाते पुत्रीं रुदतीं दृष्ट्वाऽऽश्वासिता पित्रा दत्ता च स्वगृहगोकुलिनः, स च गृहजामातृत्वेन स्थापितः । सोऽपि तस्याः स्पर्शमात्रेण जातमहासंतापस्तां मुक्त्वा नष्टः । विषण्णा धन्या भणिता पित्रा—"मया कुलानुचितमपि कृतं तथापि तव पूर्वकर्मानुभावतो दौर्भाग्यमेवाग्र आयाति, अतो दानादिधर्मकर्मकरणेन मद्गृहे तिष्ठ" । एकदा समागताः साधवः, वन्दितास्तया, विज्ञप्तं च—"स्वामिन् ! अस्ति मन्त्रो वा तन्त्रो वा कार्मणं वा ? येन मम सौभाग्यं स्यात् ? तरुणपुरुषप्रार्थनीया च भवामि ?" । साधुभिरुक्तं—"वयं किमपि न जानीमः, परं पुष्पाकरोद्यानेऽस्माकं गुरवः शीलाकरनामान आचार्याः सन्ति, ते सर्वं जानन्ति" । अथ गता सा श्रीपूज्यानां समीपे । पृष्टं च सौभाग्यमन्त्रादि । गुरुभिरप्युपदिष्टं—

> तिहुअणवसीकरणो सम्मत्तमणोचिंतियत्थसंजणणो ।
> जिणपन्नत्तो धम्मो मंतो तंतो अ न हु अन्नो ॥ १ ॥
> जेहिं विहिओ न धम्मो पुव्वं ते अइदुहिया जीवा ।
> किं पसरइ दारिद्दं चिंतारयणे वि संपत्ते ॥ २ ॥

ततो गोवर्धनगृहपतिनोक्तं—"पूर्वभवे मम सुतया किं कृतं ? येनेयमेवंविधदौर्भाग्यकलङ्किता जाता ?" । गुरुणा भणितं—"अनया रोहिणीभवे गुरोरवज्ञा कृता, तेनासङ्ख्यजन्मसु दुःखान्यनुभूय

तव पुत्री जाता, पूर्वकर्मावशेषविपाकादत्र भवेऽपि दौर्भाग्यं जातं"। एवं श्रुत्वा प्राप्तं तस्या जातिस्मरणं, दृष्टं प्राक्तनं, "सत्यं सर्वं स्वामिन्!" इत्युक्तवती। गुरुणोक्तं—

इहलोइए वि कज्जे सुगुरुं पणमंति माणवा निच्चं।
किं पुण परलोअपहे धम्मायरियं पईवसमं ॥ १ ॥

एवं श्रुत्वा पूर्वदुष्कृतातिचारमालोच्य गुरूणां समीपे गृहिधर्मं द्वादशव्रतरूपं धन्या पालयन्ती तिष्ठति स्म, तीव्रं च तपः करोति स्म। तत्तपःपारणायां—

वत्थं भत्तं पाणं पत्ता सिज्जा च जं जमणुकूलं। तं तं गुरुणा वियरेइ फासुअं एसणिज्जं च ॥ १ ॥

अथोल्लसच्चित्तशुभ्रपरिणामाऽनुक्रमेण चारित्रं प्रपाद्य सौधर्मदेवलोकं प्राप्ता। ततश्च्युत्वा विपुलमतिस्तव प्रियतमा जाता। गुरुभक्तिवशादत्र विपुलमतिर्जाता भोगसंपन्ना"। इति गुरुवाक्यात् पूर्वानुभूतस्वचरित्रं श्रुत्वा जातिस्मरणमासाद्य सा गतसंशया हृष्टा च श्रीगुरून् पप्रच्छ—"स्वामिन्! कतिविधं वैयावृत्त्यं?"। हे भावुके! दशविधं। यतः—

आयरिय १ उवज्झाए २ थेर ३ तवस्सी ४ गिलाण ५ सेहे अ ६।
साहम्मि ७ अ कुल ८ गण ९ संघ १० संगयंतमिह कायव्वं ॥ १ ॥

इति श्रुत्वाऽसौ हृष्टा वैयावृत्त्यतत्पराऽनुक्रमेण स्वर्गं गता। ततोऽचिरेण सिद्धिं प्राप्स्यतीति ॥

आराध्यमभ्यन्तरमेतदन्वह—माहारलोकाऽपि तपःफलं लभेत् ।
अध्यक्षतत्त्यागफलं समीक्ष्य सा, ध्रौव्यं दधौ तद्विपुलामतिश्च या ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ विंशस्तम्भे
चतुर्नवत्युत्तरद्विशततमं २९४ व्याख्यानम् ॥

## पञ्चनवत्युत्तरद्विशततमं २९५ व्याख्यानम् ॥

अथ दशमतपोभेदमाह—

स्वाध्यायः पञ्चधा प्रोक्तः सुमहानिर्जराकरः । तपःपूर्त्तिरनेन स्यात्सर्वोत्कृष्टस्ततो हि सः ॥ १ ॥

स्पष्टः । नवरं पञ्चविधः स्वाध्यायः । तत्राद्यो वाचनाह्वः सूत्रार्थयोरध्ययनमध्यापनं च वज्रस्वामिभद्रबाहुस्वाम्यादिवदजस्रं विधेयः १ । द्वितीयः पृच्छनाह्वः सूत्रार्थसंदेहापनोदाय दृढीकरणाय च परपार्श्वे पृच्छा, सा चिलातिसुतमहाबलजीवसुदर्शनश्रेष्ठिहरिभद्रविप्रादिवदवश्यं कार्या २ । तृतीयः परावर्तनाह्वः स्वाध्यायः पूर्वाधीतसूत्रादेरविस्मृत्याद्यर्थं गुणनं परावर्तना, साऽतिमुक्तक्षुल्लकर्षितन्तुवायादिवद्विस्तार्या, यथैकस्तन्तुवायः पाजणीं पायन् द्वयोः पार्श्वयोस्तदायततन्तुप्रान्तपल्लवग्राहिन्नार्यो भूयो भूयो व्याघुट्य तत्रागत्याङ्गेनालिङ्गनकुचमर्दनाधरचुम्बनादिकं करोति । ततश्चैको मुनिः पथि गच्छन् सहसा

तच्चेष्टां वीक्ष्य स्थितः । तदा स तन्तुवायो मुनिं स्माह—"त्वं किं वीक्षसे ? ईदृशं सुखं त्वया कुत्रापि दृष्टं ? तव तु स्वप्नेऽप्येतद्दर्शनं कुतः स्यात् ?" । इति साभिमानं गदितं श्रुत्वा स मुनिरवधिज्ञानोपयोगेन क्षणमात्रशेषं तदायुः परिज्ञाय स्वान्तिकमाहूयेत्यवोचत्—"हे भद्र ! किमल्पजीवितव्यार्थे इमां कन्दर्पचेष्टां तनोषि ? तवायुरधुना क्षणेन संपूर्णं भावि" । इत्याकर्ण्य स चकितः स्माह—"तर्हि कमपि जीवनोपायं त्वं वद" । स मुनिर्नमस्कारमन्त्रं ददौ । स सकृद्गुणनानन्तरं पुनः परावर्तनं ध्यायन् पञ्चत्वेन स्वर्गं प्राप । इतश्च तद्भार्यया मुनिरिति कलङ्कितः—"त्वया मत्स्वामी मुष्ट्यादिप्रयोगेण मारितः" । मुनिना त्वनेकशिक्षोपदेशा दत्तास्तथापि स्वकदाग्रहं सा नामुचत् । मुनिरपि तद्देवागमनमवेक्षमाणस्तत्रैव स्थितः । स सुरोऽपि झटिति स्वगुरूपकारगुणं संस्मरँस्तत्रागत्य स्वभार्यादिपौराशङ्कां निवार्य गुरुं नत्वा स्वर्ययौ इति ३ । चतुर्थोऽनुप्रेक्षाख्यः स्वाध्यायः सूत्रार्थयोर्मनसा स्मरणं न तु वाचाऽभ्यसनं, कायोत्सर्गादावस्वाध्यायदिने च परावर्तनाया अयोगेऽनुप्रेक्षयैव श्रुतस्मृत्यादि स्यात् । परावर्तनातश्च स्मृतेरधिकफलत्वं । मुखेन परावर्तना हि मनसः शून्यत्वेऽप्यभ्यासवशात्स्यात् । स्मृतिस्तु मनसोऽवहितत्व एव । मन्त्राराधनादौ स्मृत्यैव विशेषसिद्धिः । यदुक्तं—

संकुलाद्विजनो भव्यः सशब्दान्मौनवान् शुभः ।
मौनजापान्मानसः श्रेष्ठो जापः श्लाघ्यः परंपरः ॥ १ ॥

संलेखनानशनादिना क्षीणदेहानामपि परावर्तनाद्यशक्तानामनुप्रेक्षयैव प्रतिक्रमणादिनित्यकृत्यानुष्ठानं,

तत एव तेषां घातिकर्मक्षयात्केवलज्ञानोत्पत्तिः ततः सिद्धिश्चेति ४। धर्मकथाह्वः पञ्चमः स्वाध्यायो धर्मोपदेशस्य सूत्रार्थव्याख्यायाश्चाकर्णनं धर्मकथा, सा नन्दिषेणर्षिवत् कार्या ५ इति। अनेन स्वाध्यायेन तपःपूर्तिः स्यात्, यत उक्तं चालोचनाग्रन्थे—एकाशनभङ्गे पञ्चशतनमस्कारजापः, उपवासभङ्गे द्विसहस्रनमस्कारजापः, नीविभङ्गे सप्तषष्ठ्यधिकषट्शत ६६७ नमस्कारजापः, आचाम्लभङ्गे सहस्रनमस्कारजापः, चतुर्विधाहारभङ्गे उपवासः। तथा निरन्तरं शतनमस्कारगुणनेन वर्षे षट्त्रिंशत्सहस्रमितस्वाध्यायः स्यात्। प्रतिदिनं द्विनमस्कारावलिगुणनया द्विसप्ततिसहस्रमितस्वाध्यायः स्यात्, त्रिशतगुणनेन चाष्टसहस्राधिकैकलक्षस्वाध्यायः स्यादित्यादिकं स्वबुद्ध्याऽभ्यूह्यमिति। ततोऽर्हता सर्वोत्कृष्टः सर्वतपस्सु मध्ये श्रेष्ठः प्रोक्तः। यदुक्तं महानिशीथादौ—

बारसविहम्मि तवे सब्भिंतरबाहिरे कुसलदिट्ठे।
न वि अत्थि न वि अ होहि सज्झायसमं तवोकम्मं ॥ १ ॥
मणवयणकायगुत्तो नाणावरणं च खवइ अणुसमयं।
सज्झाए वट्टंतो खणे खणे जाइ वेरग्गं ॥ २ ॥
इगदुतिमासक्खवणं संवच्छरमवि अणसिओ हुज्जा।
सज्झायझाणरहिओ एगोपवासफलं पि न लभिज्जा ॥ ३ ॥

उग्गमउप्पायणएसणाहिं सुद्धं च निच्च भुंजंतो ।
जइ तिविहेणाउत्तो अणुसमयं भविज्ज सज्झाए ॥ ४ ॥
ता तं गोअम एगग्गमाणसं नेव उमिउं सक्का ।
संवच्छरखवणेण वि जेण तहिं निज्जराऽणंता ॥ ५ ॥

अथ प्रसङ्गागतं व्यतिरेकफलं वक्ष्यमाणसंबन्धेन ज्ञेयं—वाराणसीपुर्यां भद्रः सार्थवाहः । सुभद्राऽस्य भार्याऽस्ति । साऽनपत्या बहुविकल्पं धत्ते । एकदा तद्गृहे एक आर्यासङ्घाटको भिक्षायै समागतः । तं प्रतिलाभ्य सा विज्ञप्तिं चकार—"हे स्वामिनि ! यस्याः स्त्रियाः सुता अङ्गणे क्रीडन्ति सा धन्या रामा, अतो ममापत्यं भावि न वा ?" । "हे भद्रे ! वयं धर्मं विना नान्यज्जल्पामः" । तयोक्तं—"धर्मं कथयत" । ततस्ताभिः सम्यग्धर्मोपदेशो विस्तारितः । तेन सा विज्ञा जज्ञे । अनपत्यदुःखार्ता कालेन पतिमनुज्ञाप्य सा दीक्षां जग्राह । वरं स्वाध्यायतत्पराऽपि पौरबालान् सुरूपान् प्रेक्ष्य मोहबलवत्तया कांश्चिदुरसि उत्सङ्गे जङ्घादौ च स्थापयति । कांश्चिदङ्गुल्याधारं दत्त्वा भ्रामयति । केषाञ्चित्सुखभक्षिकां ददाति । यतः—

केसिं पि देइ खज्जं अन्नेसिं भज्जई मन्नेसिं ।
अब्भंगइ उव्वट्टइ ण्हाएइ तह फासुअजलेण ॥ १ ॥

धाईकम्माईआ जं दोसा जिणवरेहिं इह भणिया ।
इहलोअपारलोइअदुक्खाण निबंधणभूआ ॥ २ ॥

तत आर्याभिरिति शिक्षिता—"भो आर्ये! तवेदं न घटते । किं स्वाध्यायादिक्रियासु प्रमादं करोषि? मुनयस्तु द्रव्यभावतो डिम्भाशंसां विहाय निरन्तराध्यात्मरता भवन्ति"। इत्याकर्ण्यातिकुपिता भिन्नोपाश्रये स्थिता निरङ्कुशा जाता । ततः पाक्षिकानशनेन सौधर्मस्वर्गे समुत्पन्ना । अन्यदा सर्वज्ञश्रीवीरजिनवन्दनार्थं समागात् । तत्र पूर्वाभ्यासरागेण बहूनि डिम्भरूपाणि विकृत्य नाट्यं कृत्वा स्वविमाने गता । ततः श्रीगौतमस्वामिना पृष्टं—"हे भगवन्! अनेन देवेन बहुडिम्भरूपाणि केन हेतुना विकृतानि?"।

भणइ जिणो बहुपुत्तिअत्ति देवी इ माता व ।
पुव्वभवकम्मवसओ अ गोयमा इअ विउव्वए देवी ॥ १ ॥
सक्कस्स वि अग्गाणे ईहा दट्ठु बहुडिंभरूवाइं । इत्तो चेव पसिद्धा एसा बहुपुत्तिनामेण ॥ २ ॥

श्रीगौतमेन पूर्वभवः पृष्टः । स्वामिना सर्वो निगदितः । पुनरग्रेतनस्वरूपे पृष्टे स्वामी जगौ—एषा देवी चतुःपल्यायुः परिपाल्य विन्ध्यगिरिसमीपे वेभेलसन्निवेशे सामानाम्नी द्विजपुत्री रूपवती भाविनी । तत्र राष्ट्रकूटेन परिणीतायास्तस्या अपत्ययुगं यमलं भविष्यति । एवं प्रतिवर्षं युगलं जनयिष्यति । क्रमेण षोडशवर्षैर्द्वात्रिंशत्पुत्रपुत्रीणां समुदायो भविता । तदा कोऽपि पृष्ठे कोऽपि शीर्षे चटिष्यति, कोऽपि

घातं करिष्यति, कोऽपि भोजनादि याचिष्यते, कोऽप्युत्सङ्गे मूत्रादिकं करिष्यति। दिवानिशं तद्दुःखेनार्दितोद्विग्ना सतीति चिन्तयिष्यति—"वन्ध्या नारी धन्या, या सुखेन तिष्ठति शेते च"। अन्यदाऽऽर्यासङ्घाटकं प्रतिलाभयन्ती जातिस्मृत्या स्वप्राक्भवस्वरूपमवगम्य वैराग्येण दीक्षां ग्रहीष्यति। तत्रैकादशाङ्गानि पठित्वा सर्वेषां पुरः स्वप्राग्भवचरित्रं प्रकाश्य प्रान्ते मासानशनेन द्विसागरायुर्देवो भूत्वा विदेहे मोक्षं गमिष्यतीति ॥

स्वाध्यायकार्येषु प्रवर्तिनी हि, किम्भानवेद्यालसतां दधौ या।
भाव्यन्यनृत्वेऽस्य फलं समीक्ष्य, भूयस्तदालोच्य शिवं गमिष्यति ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ विंशस्तम्भे पञ्चनवत्यधिकद्विशततमं २९५ व्याख्यानम् ॥

## षण्णवत्यधिकद्विशततमं २९६ व्याख्यानम् ॥

अथैकादशध्यानतपोवर्णनमाह—

सिद्धाः सिध्यन्ति सेत्स्यन्ति यावन्तः केऽपि मानवाः। ध्यानतपोबलेनैव सर्वेपि शुभाशयाः ॥ १ ॥

स्पष्टः। अत्रार्थे इयं भावना—नानाविधदुस्तपतपस्तपना अपि शुभध्यानादेव सिद्धाः सिध्यन्ति

सेत्स्यन्ति च । यतः तपो विनाऽपि मरुदेवा भरतादयः सिद्धाः, एवं शुक्लध्यानमेव मोक्षस्याव्यवधानमवन्ध्यं साधनं, शेषाणि त्वशेषाण्यपि सुकृत्यानि पारंपर्येणैवेति सर्वसुकृतेभ्योऽपि सर्वप्रकारैरपि शुक्लध्यानस्यातिशायिता । यदाहुः—

निर्जराकरणे बाह्याच्छ्रेष्ठमाभ्यन्तरं तपः । तत्राप्येकातपत्रत्वं ध्यानस्य मुनयो जगुः ॥ १ ॥

इति । अथ ध्यानस्य कालमानादिकमाह—

अन्तर्मुहूर्तमात्रं यदेकाग्रचित्तताान्वितम् ।
तद्ध्यानं चिरकालानां कर्मणां क्षयकारणम् ॥ १ ॥

स्पष्टः । एतदर्थसमर्थकं सिद्धान्तवाक्यं चेदं—

अंतोमुहुत्तमित्तं चित्तावत्थाणमेगवत्थुम्मि । छउमत्थाणं झाणं जोगनिरोहो जिणाणं तु ॥ १ ॥

एतद्ध्यानं चिरसमयसंचितानामनन्तानामपि कर्मणां तत्क्षणं क्षयहेतुः । यतो भाष्यकृता प्रोक्तं—

जह चिरसंचियमिंधणमणलो य पवणसहिओ दुअं दहइ ।
तह कम्मिंधणममिअं खणेण झाणाणलो डहइ ॥ १ ॥
जह वा घणसंघाया खणेण पवणाहया विलिज्जंति ।
झाणपवणावहूआ तह कम्मघणा विलिज्जंति ॥ २ ॥

इति । अथ प्रशस्ताप्रशस्तनिमित्तानि ध्यानानुसारेण फलं ददतीत्याह—

प्रशस्तकारणानि स्युः शुभानि ध्यानयोगतः । अनर्हाण्यपि तान्येव अनर्हध्यानपुष्टितः ॥ १ ॥
अप्रशस्तनिमित्तानि शुभानि ध्यानशुद्धितः । तद्रूपाणि भवन्त्येव अशुभाश्रयसंश्रयात् ॥ २ ॥

अत्रार्थ इयं भावना—श्रीजिनमते यद्यपि यावन्तः सुकृतप्रकारास्तावन्तः सर्वेऽपि मुक्तिस्पष्टौ । शुभहेतवः, परं शुभध्यानानुगता एव, न त्वन्यथा, बहुसमयचारित्राराधकाङ्गारमर्दकाचार्यादिवत् । शुभध्याने सति ये केऽप्यङ्गनाधनादयो भवप्रसक्तिहेतवस्तेऽपि मुक्तिहेतवः स्युः । यदाह—

अहो ध्यानस्य माहात्म्यं येनैकाऽपि हि कामिनी । अनुरागविरागाभ्यां भवाय च शिवाय च ॥१॥

आर्षेऽपि—

जे जत्तिआ य हेऊ भवस्स ते चेव तत्तिआ मुक्खे ।
गुणगणणाइअलोगा दुण्ह वि पुन्ना भवे तुल्ला ॥ १ ॥

इत्याद्यनेकयुक्तिभिर्निदर्शितं ध्यानमाहात्म्यं निशम्याप्रशस्तानेकनिमित्तसंपर्केऽपि वसुभूतिवन्न शुभध्यानं परिहार्यं । तथाहि—वसन्तपुरे शिवभूतिवसुभूतिनामानौ द्वौ भ्रातरौ । अन्यदा ज्येष्ठभ्रातुर्भार्या कमलश्रीः स्मरसोदरं पतिसोदरं निरीक्ष्य रागात्संभोगार्थमयाचत । तदा स स्माह—"हे मुग्धे ! ज्येष्ठभ्रातुर्भार्या माता ज्ञेयेति नीतिशास्त्रे प्रोक्तमस्ति" । इत्याकर्ण्य साऽवोचत्—"हे स्वामिन् ! मदङ्गव्यासां स्मरज्वरव्यथां निर्वापय, अन्यथा तव महत्पापं लगिष्यति, त्वं तु लोकव्यवहारविमुखोऽसि, शास्त्रवाक्येन भ्रान्तोऽसि च । अत्रार्थ एकोदन्तं शृणु—हरिस्थलेऽधीततर्कज्योतिषलक्षणवैद्यकशास्त्रा अपि

लोकव्यवहारविकलाश्चत्वारो द्विजन्मसूनवः सुहृदो वसन्ति । अन्यदा ते चत्वारोऽपि स्वस्वविद्यागर्वभाजः परदेशकौतुकावलोकनाय स्वपुरतश्चलन्ति स्म । क्वापि पुरे भोजनार्थं तस्थिवांसः । ते तार्किकनैमित्तिकलाक्षणिकवैद्याः क्रमेण घृतानयनबलीवर्दचारणान्नपाचनशाकग्रहणरूपेषु प्रवृत्ताः । तेषु च प्रथमस्तार्किको घृतमादायाध्वन्यागच्छन्निति दध्यौ—"घृताधारं पात्रं पात्राधारं वा घृतं ?" इति मत्वा तद्घृतपात्रमधोमुखमकरोत् । घृतं च भुवि न्यपतत् । अथवाऽभिमुखमागच्छन्तं गजं वीक्ष्य दध्यौ—"असौ मतङ्गजः प्राप्तं हन्ति ? किं वाऽप्राप्तं हन्ति ? अप्राप्तस्य हननं करोति तदा कोऽपि न जीवति, तत्तु न दृश्यते, अतः प्राप्तस्यैव हिंसकः, तदा तु हस्तिपकं हनिष्यति, अहं तु दूरतरोऽस्मि असंपृक्तोऽस्मि च" इति ध्यायन्तं तं शीघ्रं करिणा करेण गृहीत इति । अथ द्वितीयो बलीवर्दचारको बलीवर्देषु हरिततृणाङ्कुरोत्करचरणवशादतिदूरं गतेषु ज्योतिःशास्त्रं पश्यति स्म—"ममामी वृषभा अन्धे वा एकाक्षे वा चिर्पटाक्षे वा दिव्यचक्षुषि वा नक्षत्रे गताः ? चरे वा स्थिरे वा द्विस्वभावे वा लग्ने गताः" इति यावच्चिन्तयति तावत्ते वृषभा दवीयांसोऽभूवन् । अथ तृतीयो वैयाकरणोऽन्नपाचनक्षणे खद्बद् इति शब्दं कुर्वाणां क्षिप्रचटिकां निभाल्येति दध्यौ—"अहो ! असौ शब्दः कस्मिन् व्याकरणे केन सूत्रेण निष्पन्नः ?" इति ध्यायति तस्मिन् सा क्षिप्रचटिका दग्धा । अथ चतुर्थः शाकग्रहणार्थं गच्छँश्चतुःपथे रम्भाफलाम्रफलकर्कोटकसर्षपजीवन्तीनिम्बुकादीन् बहून् शाकान् दृष्ट्वेति चिन्तयांचक्रे—"अमीभिर्वातपित्तकफश्लेष्मत्रिदोषादिमहारोगनिबन्धनैः शाकैरलं ।

निम्बो वातहरः कलौ सुरतरुः शाखाप्रशाखाकुलः,
पित्तघ्नः कृमिनाशनः कफहरो दुर्गन्धनिर्नाशनः ।
कुष्ठव्याधिविषापहो व्रणहरो ऽरुक् पाचनः शोधनो,
बालानां हितकारको विजयते निम्बाय तस्मै नमः ॥ १ ॥"

इति वैद्यकशास्त्रानुसारं शाकमादायाययौ । एवमधीतशास्त्रा अपि लोकव्यवहारविकलाश्चत्वारोऽपि स्वस्वार्थभ्रंशलज्जाजो बभूवुः इति । अथ हे देवर ! त्वमपि श्रुतिजडत्वं त्यक्त्वा मां भज, अन्यथा तव महादोषो भावी इति श्रुत्वा वैराग्यवान् गृहान्निर्गत्य यतिरभूत् । यतः—

अपसर सखे दूरादस्मात्कटाक्षविषानलात्,
प्रकृतिविषमाद्योषित्सर्पाद्विलासलसत्फणात् ।
इतरफणिना दष्टः शक्यश्चिकित्सितुमौषधै—
श्चटुलवनिताभोगिग्रस्तं त्यजन्ति हि मान्त्रिकाः ॥ १ ॥

इति वनितासङ्गं विषमं विचिन्त्य स महात्मा सर्वथा मुक्तमानिनीसंस्तवो विजहार । भ्रातृजायाऽपि तं प्रव्रजितं निशम्य रागोदयादार्तध्यानेन मृत्वा क्वापि ग्रामे शुनीत्वेनोत्पन्ना । तत्रापि गोचर्यामटन्तं तमुदीक्ष्य पूर्वाभ्यस्तरागवशात्सा शुनी कायच्छायेव तं नामुञ्चत् । सर्वदा सर्वत्र च तां पृष्ठलग्नां विलोक्य लोकैः स शुनीपतिरित्यभ्यधायि । तादृशैर्जनवचनैर्लज्जमानो मुनिः कथञ्चिदपि तस्या दृशं वञ्चयित्वा

नष्टः । तत्रापि तमपश्यन्ती साऽर्तध्यानेन विपद्य क्वापि वने वानरीत्वेनोत्पन्ना । तत्रापि कदाचित् पथि विहरन्तं तं दृष्ट्वा शुनीवत्तस्य पृष्ठे लग्ना । तां च तथावस्थां विलोक्य लोकैः स मुनिर्वानरीपतिरित्येवं कथितः । यथा यथा लोका इत्थं जल्पन्ति तथा तथा तदाकर्ण्य साऽत्यन्तं सहर्षा बभूव । प्रत्यहं सा विषयचेष्टां दर्शयति । मुनिस्त्विति दध्यौ—"अहो ! मत्कर्मणां गहना गतिर्विद्यते" इत्यादि ध्यात्वा शुनीमिवेमामपि हित्वा मुनिः क्वापि गतः । ततः साऽऽर्तध्यानेन विपद्य क्वापि जलाशये हंसीत्वेनोदपद्यत । तत्र शीतपरीषहसहनार्थं जलाभ्यर्णे प्रतिमया स्थितं तं समीक्ष्य संजातकामोदया भुजाभ्यां स्वामिनीव जलभृताभ्यां पक्षाभ्यामालिलिङ्ग । पुनः पुनः करुणशब्दैरव्यक्तमधुरं विरहविधुरं च रटति । मुनिस्तु स्वशुभध्यानमग्नोऽन्यत्र विजहार । ततः तमपश्यन्ती तन्मनाः सा हंसी आर्तध्यानेन मृत्वा व्यन्तरदेवी जाता । तत्र विभङ्गज्ञानेन तस्यात्मनश्च सर्वं वृत्तान्तं विज्ञाय "अनेन मम देवरेण मज्जणितं नाकारि" इति कुपिता सा हन्तुमुपस्थिताऽपि तं मुनिं ध्यानतपसान्वितं हन्तुं न शक्नोति स्म । तदनु मुनेः पुरः स्वशक्त्या दिव्यानुभावेनानेकवनितास्वरूपाणि विधाय प्रोवाच—"हे मुने ! त्वं किं विचारयसि ? त्वत्संयमः सद्यः सफलो जातः, एतान् दिव्यभोगान् भुङ्क्ष्व, किं मुधा परितप्यसे ? अध्यक्षप्राप्तं स्पृहानुरूपं सौख्यं स्वीकुरु" । इत्यादिप्रतिकूलानुकूलपरीषहैर्न क्षुब्धः, इति च दध्यौ—"बाह्यदृष्टेः संसाररक्तस्य सुन्दरी स्त्री अमृतघटिकेव भाति, तदर्थं धनमर्जयन्ति, त्यजन्ति प्राणान्मोहमग्ना रावणाद्या इव । निर्मलानन्दात्मस्वरूपावलोकनदक्षस्य सा सुन्दरी विण्मूत्रमांसमेदोऽस्थिमज्जाशुक्रादीनां

भाजनमाभाति, तत्त्यागिनो जम्बूस्वाम्यादय एव श्रेष्ठाः" । इत्यादिनिर्मलध्यानः क्रमेण कलितकेवलः स मुनिर्लोकानां पुरस्तादात्मनस्तस्याश्च पूर्वभवसंबन्धमभिधाय सिद्धः ॥

ध्यानाचलाच्चालयितुं क्षमाभृतं, सा विह्वला रागवती भवे भवे ।
नाभूत्क्षमाऽनेकविधैः परीषहै–रद्वैतचित्तत्वमयं मुनीश्वरम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ विंशस्तम्भे पञ्चनवत्युत्तरद्विशततमं २९६ व्याख्यानम् ॥

## सप्तनवत्युत्तरद्विशततमं २९७ व्याख्यानम् ॥

अथ द्वादशकायोत्सर्गतपोवर्णनमाह—

प्रायो वाङ्मनसोरेव स्याद्ध्याने हि नियन्त्रणा ।
कायोत्सर्गे तु कायस्याप्यतो ध्यानात् फलं महत् ॥ १ ॥

ऊर्ध्वस्थशयिताद्यैश्च कायोत्सर्गः क्रियारतैः । एकोनविंशतिदोषैर्मुक्तः कार्यो यथाविधि ॥ २ ॥

स्पष्टौ । नवरं कायोत्सर्गः प्रलम्बितभुजद्वन्द्वतया ऊर्ध्वस्थशयिताद्यैः, आदिशब्दादासितैः कार्यः । तत्र छद्मस्थतीर्थकृज्जिनकल्पिकादय ऊर्ध्वस्था एव कायोत्सर्गं कुर्वन्ति, तैरुपवेशनादेरकरणात्, जातु

जिनकल्पिक उपविशति तदाप्युत्कटिक एव तिष्ठति स्वपित्यपि तदवस्थ एव निशातृतीययामे स्थविरकल्पिकानां तु यथाशक्ति कायोत्सर्गः कार्यः, न तत्र स्थानमपेक्षितं । किंलक्षणः सः ? एकोनविंशतिदोषाः कायोत्सर्गनिर्युक्तावभिहिताः घोडग १ लयाय २ खंभे ३" इत्यादयस्तैर्मुक्तो विवर्जितः, तत्रैकोनविंशतिदोषास्त्याज्याः । अत्रार्थे वृत्तान्तो लिख्यते—

श्रीराजगृहे दर्दुराख्यदेवः श्रेणिकनृपसम्यक्त्वपरीक्षां कृत्वा तुष्टः श्रेणिकायाष्टादशवक्रं[1] हारं क्षौमयुगलं कुण्डलयुग्मं च ददौ । नृपेण हारश्चिल्लणायै दत्तः, अन्यवस्तुद्वयं नन्दायै दत्तं । तद्वीक्ष्य चिल्लणा चित्ते दूना पतिं स्माह—"यदि ममैतद्वस्तुद्वयं न ददासि तदाऽहं जीवितं त्यजा(क्ष्या)मि" । राज्ञोक्तं—"यत्तुभ्यं रोचते तत्कुरु" । ततः सा रोषवशात्प्रासादगवाक्षे एकाकिनी आर्तध्यानोपगता स्थिता निद्रां नाप । तदा तत्प्रासादस्याधोभागे सेचनकहस्तिनः कुन्तारो[2] मगधसेनादारिकया सह कथां करोति, दारिका स्वजारं प्राह—"कल्ये दासीमहोत्सवोऽस्ति, अतस्त्वं ममैतां चम्पकमालां करिकण्ठादुत्तार्य देहि, येनाहं मज्जातिमध्ये शोभां लभे" । स आह—"राजाज्ञालोपदुःखसहनेऽहं न क्षमोऽस्मि" । तदा सा प्राह—"अहं जीवितं मोक्ष्यामि" । स प्राह—"अहं ब्रह्मदत्तसदृशो मूढो न, यो वनितावचनेन चिताप्रवेशार्थं सप्रयत्नो जात', स छागेन बोधितः" । एतज्ज्ञातं मया पूर्वं लिखितमस्ति तदनुवृत्त्या ज्ञेयं । इति श्रुत्वा साऽऽह—"अहं स्वात्मभ्रष्टा भवामि, तव किं याति ? त्वं त्वन्यासक्तो जातः सन्म-

१ अष्टादशसरिकम्. २ हस्तिपकः.

न्नामापि न ग्रहीष्यसि, त्वच्चित्तमश्मतोऽपि अतिकठिनं दृश्यते"। इत्युल्लापान् श्रुत्वा चिल्लणा दध्यौ–
"अहं प्राणान् जहामि तेन काऽपि राज्ञो हानिर्न स्यात्, पञ्चशतीवनितानां पतित्वात्, नवरमहमकृत-
तपःसंयमा नरजन्मतो भ्रष्टत्वं प्राप्नोमि"। इत्यादि विचार्य सानुरागा नृपेऽभूत्। एकदा तस्य हारस्यैका
दवरिका त्रुटिता। तेन देवेन प्रागेवमभिहितं—"योऽमुं हारं त्रुटितं संधास्यति स शिरःप्रस्फोटेन मरि-
ष्यति"। ततो राज्ञा पुर उद्घोषितं—"योऽष्टादशवक्रहारं संधत्ते तस्मै नृपो लक्षदीनारान् प्रयच्छति"।
तत्रैकः स्थविरो मणिकारः स्वजनसौख्यकृते तं पटहमगृह्णात्। श्रेणिकेनार्धलक्षधनं तस्मै दत्त्वोक्तं–"अन्य-
च्चनं संधिते हारे दास्यामि"। ततः स मणिकारो निजगृहैकदेशे सन्नायां भूमौ तं हारं संस्थाप्य मधुघृ-
तवासितसूक्ष्मदवरिकां मौक्तिकच्छिद्रे संपृक्तीचकार मुक्ताफलवक्त्राणि वक्रत्वेन संधातुं नरा न क्षमाः।
अथ मध्वादिगन्धसंज्ञातः समागता बहवः पिपीलिकाः, ताभिर्दवरिकाग्रमूलानि संगृह्य शनैः शनैर्मौक्ति-
कच्छिद्रेषु दवरिका संचारिता। तेन च ग्रन्थिं दत्त्वा संधितो हारः। सहसा तत्क्षणं तस्य शिरः स्फुटितं,
स विपन्नः तत्रैव पुरे मर्कटत्वं प्राप। सोऽन्यदा प्रतिगृहमटन् स्वमन्दिरं स्वपुत्रं चावेक्ष्य जातिस्मृत्या
जातानुकम्पः पुत्रस्य पुरो"ऽहं तव पिताऽस्मि" इत्यक्षराण्यलिखत्। ते स्वजना विस्मयं प्राप्य दध्युः—
"अहो! कर्मणां विचित्रा गतिः"। पुनरक्षराणि लिखितानि—"शेषद्रव्यं तुभ्यं नृपेन दत्तं न वा?"।
तेनोक्तं—"न दत्तं"। तदाकर्ण्य प्रद्वेषमापन्नस्तद्धारचौर्यार्थं छिद्राणि गवेषयति। अन्यदा चिल्लणा

त्रिकालवेलायां वापीमध्ये स्नाति सर्वाभरणादिनिर्मुक्ता । तत्समये स हारो मर्कटेन दृष्टः । प्रच्छन्नवृत्त्या तमादाय सुताय ददौ । चिल्लणाऽलङ्कारकरणसमये हारमदृष्ट्वा विलक्षाऽभूत् । तद्व्यतिकरस्तया नृपाय निवेदितः । श्रीश्रेणिकोऽभयकुमारमाकार्येत्युवाच—"अमुं हारं सप्तदिनमध्ये त्वं प्रकटीकुरु अन्यथा त्वज्जीवनोपायो न दृश्यते" । तदनु स मन्त्री तत्प्राप्त्यर्थं नित्यं गवेषयति ।

अथ तत्पुरे पञ्चाचार्यशिष्याः समेताः सन्ति—शिवः सुव्रतो धन्यो जोणकः सुस्थितश्च । तन्मध्ये सुस्थितसाधुर्जिनकल्पिकधर्मं प्रतिपत्तुकामः पञ्चविधां भावनां भावयति । तद्यथा—

तवेण सत्तेण सुत्तेण एगत्तेण बलेण य । तुलणा पंचहा वुत्ता जिणकप्पं पडिवज्जओ ॥ १ ॥

तत्र तपोभावनाऽसौ—

जो जेण अणब्भत्थो पोरसिमाई तवो तं तिगुणं ।
करेइ छुहाविजयद्वा गिरिनइसीहेण दिट्ठंतो ॥ २ ॥
सीहो समुत्तरंतो जलभरियं गिरिनइं पयत्तेणं ।
वंकं समुत्तरंतो ता गच्छइ जा गओ उज्जू ॥ ३ ॥
एगेगं व तवं करेइ जइ तेण कीरमाणेण ।
हाणी न होइ कइया वि होइ छम्मासउस्सग्गे ॥ ४ ॥

इदानीं सत्त्वभावना—

जो वि य पुव्वं निसि निग्गमेसु वसहिसु सब्भसन्नयाणि ।
अहितकरगोवाइं विसेसघोरे य सग्गामे ॥ १ ॥
पासुत्ताण उ सद्दं सोयव्वं जं च तीसु जामेसु ।
थोवाथोवं जिणइ उ भयं से भवइ तह ॥ २ ॥
पढमा उवस्सयम्मि बीया बाहिरम्मि चच्चरे तइया ।
सुन्नघरम्मि चउत्थी तह पंचमिया मसाणम्मि ॥ ३ ॥

इत्यादि यावत्—

देवेहिं भेसिओ वि य दिया व राओ व भीमरूवेसु ।
तो सत्तभावणाए वहइ भरं निब्भओ सयलं ॥ १ ॥

इदानीं सूत्रभावना—

जइ वि सनाममि परिजियं सुयं तसनंदियं णिमाइ ।
कालपरिणामहेउ तहावि खलु तज्जयं कुणइ ॥ १ ॥
ऊसास आणपाणु तउ थोवो तओय वि य मुहुत्तो ।
मुहुत्तेहिं पोरसीओ जाणंति निसा य दिवसा य ॥ २ ॥

मेहाइछन्नेसु उन्नउं कालमहवावि उवसग्गो ।
पेहाइ निरुकपंथे नाही कालं विणा गयं ॥ ३ ॥

इदानीमेकत्वन्नावना—

जइ वि य पुव्वममत्तं भिन्नं साहूहिं दारमाईसु ।
आयरियाइममत्तं तहावि संजायए पच्छा ॥ १ ॥
दिठ्ठीनिवायालावे अवरोप्परकारियं सपक्किपुच्छं ।
परिहासमिहो य कहा पुव्वपवत्ता परिहरेइ ॥ २ ॥

इत्यादि । अथ बलन्नावना

कामं तु सरीरबलं हायइ तवनाणन्नावणजुयस्स ।
देहावयवे विजाइ जहो धेइ तहा जयइ ॥ १ ॥
घोरा परीसहचमू जइ उछेजाहि सोवसग्गा वि ।
डुन्धरपहकरवेया न्नयजणणा अन्नसत्ताणं ॥ २ ॥

एतन्नावनासु यो न क्षुब्धः स एव जिनकल्पं प्रतिपद्यते । स सुस्थितर्षिर्द्वितीयन्नावनयाऽऽत्मानं न्नावयति । तत्राप्युपाश्रयबाह्ये द्वितीयेन सत्त्वयोगेन न्नाव्यते । तत्र विहरन्तः पञ्च मुनयोऽन्नयमन्त्रिया(दा)नशालायां मासकल्पेन स्थिताः । अन्नयस्तं हारमलन्नमानः शोकमग्नो दध्यौ—"अद्य सप्तमो वासरः ।

न ज्ञायते कल्ये किं भावि ? अतः साधुसमीपे गत्वा रात्रौ पर्युपासे"। ततस्तत्र वसतौ रात्रिपौषधं गृहीत्वोषितः तदा सुस्थितर्षिः कृतावश्यकः प्रतिश्रयाद्बहिः प्रतिमया स्थितः।

इतश्च स मणिकारात्मज इति चिन्तामकरोत्—"कदाचित्स भूपो हारवार्तां ज्ञास्यति तदा जीवितव्यहानिर्भविष्यति सपरिजनस्य मम"। ततस्तेन पुनः पश्चाद्वानराय दत्तः। स मर्कटो जनेषु जातानुकम्पः साधूपाश्रयसमीप आगतो बहिर्मुनिं कायोत्सर्गस्थं वीक्ष्य तं हारं मुनिकण्ठे न्यधात्। अथ चत्वारोऽपि ते साधवः प्रतियामं सुस्थितर्षिसाधुकायप्रतिलेखनार्थं समायान्ति। तत्राद्यः शिवसाधुः प्रथमयामे कायोत्सर्गस्थमुनिकायप्रमार्जनार्थं निर्गतस्तं हारं दिव्यकान्तिं वीक्ष्य दध्यौ—"नूनं यत्कृतेऽभयः परितप्यते स एवासौ हारो दृश्यते"। ततस्तस्य देहं प्रमृज्योपाश्रयान्तर्नैषेधिकीं कृत्वा प्रविशन् जजल्प—"अहो! महाभयं समुपस्थितं"। अभयः पप्रच्छ—"स्वामिन्! निर्ग्रन्थानां कुतो भयं ?"। साधुनोक्तं—"पूर्वानुभूतं भयं संस्मृतं"। स आह—"भगवन्! तत्स्वरूपं ज्ञातुकामोऽस्मि"। तदा मुनिः स्माह—

अवन्त्यां सोमशिवदत्तौ द्वौ भ्रातरावभूतां। तौ व्यापारार्थं धनाभिलाषुकौ सौराष्ट्रजनपदे गतौ। तत्रानेकाधर्मकर्मादानवाणिज्यानि विधाय बहुधनमुपार्जयामासतुः। ततः स्वपुरं गन्तुं समुत्सुकौ समस्तधनभृतनकुलिकां निष्पाद्यैकः स्वकटीप्रदेशे बबन्ध। ततः प्रस्थितयोस्तयोर्मध्येऽग्रजो दध्यौ—"यदि लघुभ्रातरं हन्मि तदा कोऽपि धनभागं न मार्गयति, सर्वस्वं मदीयहस्त एव तिष्ठति"। ततोऽनुजेन

सह गन्धवतीनदीमागत इति दध्यौ—"प्रतिक्षणमनेन धनानुभावेन रौद्रध्यानं मम प्रजायते, अत एनां नकुलिकामनर्थकरीं नदीह्रदे निक्षिपामि"। इति ध्यात्वा झटिति ह्रदे परिक्षिप्ता। लघुबन्धुना पृष्टं—"किमिदं त्वया कृतं ?"। स स्माह—"पापध्यानेन सहासौ नवलिकाऽगाधह्रदे निक्षिप्ता" इति तेन स्वाभिप्रायः प्रोक्तः। तदाऽनुजःस्माह—"वर्यं विहितं भवता, मदीयाऽपि दुष्टबुद्धिः प्रक्षीणा"। ततः स्वावास ईयतुः। अथ सा नकुलिकैकेन मत्स्येन क्षुधातुरेण गिलिता। स मत्स्यो मात्सिकजालेऽपतत्। धीवरेण हत्वाऽऽपणे विक्रीतः। तयोर्मात्रा मूल्यं दत्त्वा गृहे समानीतः तद्विदारणार्थं स्वसुतायै दत्तः मत्स्यं विदारयन्त्या तया नकुलिका दृष्टा, प्रच्छन्नं स्वोत्सङ्गे गोपिता। मात्रा पृष्टं—"त्वया किं गोपितं ?"। साऽऽह—"न किमपि"। ततः सा विलोकनार्थं यावदायाति तावन्मङ्गिन्या कृपाणिकया सा स्थविरा हता, मृता च। तद्वीक्ष्य ससंभ्रमं मङ्गिनी उत्थिता। ततः तदुत्सङ्गात्पतन्ती नकुलिकाऽऽवाभ्यां दृष्टा। "अहो ! सोयमर्थोऽनर्थदो नूनं" इत्यादि ध्यात्वा स्थविरां संस्कृत्य तां नकुलिकां विहाय समुत्पन्नवैराग्येण द्वावपि प्रव्रजितावावामिति। तस्माद्धे श्रावक ! एतद्भयं संस्मृतं। त्वं प्रेक्षस्व, कीदृग्भयकृदर्थोऽस्ति ?। अभयः स्माह—"स्वामिन् ! प्रमाणं युष्मद्वाक्यं, भगवन् !

पाएण वेरपरिणामकारगो निद्धबंधवाणं पि।
अत्थो दोससयकरो दुक्खसहस्सागरो निच्चं ॥ १ ॥

युष्माभिरतिसुष्ठु कृतं ॥

दुःखप्रदोऽनेकविकल्पकल्पितः, अर्थो भवेदन्यमिति त्वयाऽऽहतम् ।
उत्सर्गसंस्थं जिनकल्पिकार्मुकं, स्तौति स्म मन्त्री तमकिञ्चनं पुनः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ विंशस्तम्भे सप्तनवत्यधिकद्विशततमं २९७ व्याख्यानम् ॥

## अथनवत्यधिकद्विशततमं २९८ व्याख्यानम् ॥

अथाग्रेतनदृष्टान्तानाह—

तथैव सुस्थितं साधुं कायोत्सर्गजुषं मुदा । देहप्रमार्जनार्थाय द्वियामे सुव्रतो ययौ ॥ १ ॥

स्पष्टः । श्लोकसूचितज्ञातं चेदं—अथ द्वितीयप्रहरे तन्मुनिदेहप्रतिलेखनार्थं सुव्रतर्षिः समुत्थितः । तत्कार्यं कृत्वा तं हारं वीक्ष्य प्रतिनिवृत्तः स्माहेति—"महाभयं समुत्पन्नं" । तदा मन्त्री जजल्प—"स्वामिन् ! त्यक्तगृहकार्याणां किं महाभयं ?" । साधुनोक्तं—"श्राद्ध ! पूर्वानुभूतं संस्मृतं" । मन्त्री स्माह—"किं तत्स्वरूपं ?" । साधुरुवाच—अङ्गदेशे व्रजग्रामे महेभ्यपुत्रः सुव्रतनामाऽभूत् । तस्य भार्या सिरिभद्दाह्वा । अन्यदा तत्र ग्रामे चौराः प्रविष्टाः । भयेन जनाः प्रणष्टाः । सुव्रतोऽपि विजने

ग्नः । तदा मन्नार्या चौरान् प्राह—"यूयं स्त्रियः कथं न हरथ ?" । तैस्तदीहां ज्ञात्वा हृता, पल्लीपतेः समर्पिता । ततः स स्वजनानिति प्राह—"यूयं स्नुषां बन्धनात्कथं न मोचयथ" ? । तैरुक्तं—"त्वमेव मोचय" । ततः स प्रसह्य चौरपल्ल्यां गतः । एकस्थविरौकसि उषितः । एकदा स्वभार्याहरणं तस्यै ज्ञापितं । वृद्धया तत्र गत्वा प्रोक्तं—"त्वत्कृते त्वत्पतिरागतोऽस्ति" । भार्ययोक्तं—"अद्य पल्लीपतिर्गन्तुकामोऽस्ति । तस्मिन्निर्गते विकालेऽत्र प्रेषणीयः" । ततोऽहं विकाले गतस्तत्समीपे । तयाऽतिसंमानित आसनदानादिभिः । इतश्च पल्लीशोऽपशकुनानि वीक्ष्य प्रतिनिवृत्तः, स गृहमागतः तया स ससंभ्रमं पल्यङ्काधो रक्षितः । पल्लीशस्तु तस्मिन्नेव पल्यङ्के स्थितः । तदाऽहं सभयो जातः । इतश्च तयेति पृष्टं—"हे पल्लीश ! यदि कथमपि मद्भर्ताऽत्रैति तर्हि त्वं किं कुर्याः ?" । सोऽवोचत्—"सत्कृत्य तस्मै त्वां प्रयच्छामि" । तदा च तया वक्रां भ्रूकुटिं विधाय संज्ञा कृता । ततः पुनः प्राह—"यदि पश्यामि तदा हन्मि" । तया नेत्रसंज्ञया दर्शितः । तेन केशेषु गृहीत्वा निष्कासितः, आर्द्रवाध्रेण बन्धितश्च । ततः प्रसुप्ते पल्लीशादिके तत्र सारमेयाः समेयुः । तैर्बन्धाः सर्वे भक्षिताः । तेनाहं मुत्कलोऽभूवम् । तदनु तच्चोरसंबंधिनाऽसिना स पल्लीशो हतः । साऽपि मया केशपाशेनाकर्षिता, शिक्षिता च—"यदि बुम्बारवं करिष्यसि तदाऽहं त्वच्छिरश्छेत्स्यामि" । साऽपि मौनं विधाय स्थिता । ततोऽहं तां गृहीत्वा निर्गतः । साऽपि पदे पदे वर्त्मनि ऊर्णिकाशकलानस्थापयत् । ततः प्रभाते तया सह वंशकुडङ्गे स्थितः । ततो मन्नार्यानिक्षिप्तोर्णिकाखण्डानुसारेण तदुपजीविनस्तत्र समनुगताः । तैः प्रहारो महान् दत्तः । पञ्चाङ्गानि पञ्चकीलकै-

विद्धानि। ततस्ते मद्भार्यां संगृह्य व्याघुट्य ययुः। तत्समय एको मर्कटः समेतः स मां दृष्ट्वा मूर्छितः, चिरेण लब्धसंज्ञो मत्पुरः शल्योद्धरणीं संरोहिणीं चौषधी संगृह्यागतः तेनाहं निःशल्यीकृतः। ततो मत्पुर इमानि अक्षराणि लिलेख, यथा—"अहं तव ग्रामे सिद्धकर्मनामा वैद्य आसं। तत्रापि मया पूर्वत्वं सज्जीकृतोऽभूः। सोऽहमत्रोत्पन्नोऽस्मि। अत्र वन एकेन मर्कटेन मदङ्गेषु प्रहारं विधाय मद्यूथं सर्वं गृहीतं, ततोऽहं यूथपरिभ्रष्टोऽत्रागतः, त्वां दृष्ट्वा जातिस्मरणं लब्धवान्। अधुना त्वमपि मत्साहाय्यं कुरु, येन मद्वैरिणं मर्कटं पराजयामि"। ततः स तेन सार्धं गतः। अन्योऽन्ययुद्धं ताभ्यां विस्तारितं। तदा नूतनो मर्कटो हारितस्तं नरं स्माह—"त्वया मत्साहाय्यं कथं न कृतं ?"। स स्माह—"युवां रूपवर्णादितुल्यौ दृष्टौ, स्वपरौ नोपलक्षितौ" ततोऽभिज्ञानं कृत्वा पुष्पमालां कण्ठे कृत्वा पुनस्तत्र गतः। तदा मयैकेन लेष्टुप्रहारेण स मर्मणि हतः, प्राचीनमर्कटो मारितः। ततो मत्सखायं मर्कटमापृच्छ्य चौर-पल्ल्यां गतः। मद्भार्यामालिङ्ग्य सुप्तः पल्लीशसोदरो मया खड्गेन निहतः। प्रसह्य भार्यामादाय स्वगृह एत्य वैराग्यवासितान्तःकरणः शीघ्रं संयमं जग्राहेति। अतो हे मन्त्रिन्! मम प्रविशतस्तद्भयं संस्मृतं। ततो मन्त्री स्माह—"हे मुने! त्वया तत्सङ्गं विहाय साधुत्वं स्वीकृतं तदत्युत्तमं विहितं इति।

अथ तृतीये यामे धनकर्षिर्निर्गतः। सोऽपि तथैव हारं दृष्ट्वा महाभयं समुत्पन्नमित्युवाच। अभयेन भणितं—"पूज्य! वीतरागमार्गस्थितानां कुतोऽतिभयं ?"। मुनिनोक्तं—"पूर्वानुभूतं संस्मृतं"। मन्त्री स्माह—स्वामिन्! तत्स्वरूपं प्रकाशय"। गुरुः स्माह—अवन्तिसमीप एको ग्रामः। तत्राहं कुलपुत्रदारको

धनकः । पितृभ्यामवन्त्यां विवाहितः । अन्यदाऽहं पर्वदिवसे विकाले श्वशुरगृहं प्रस्थितः । सन्ध्याकाले प्रेतवनं प्राप्तः । तत्रैकां तरुणीं क्रन्दन्तीं प्रेक्ष्य मया पृष्टं—"किमर्थं रोदिषि" सा प्राह—

जो य न दुक्खं पत्तो, जो य न दुक्खस्स निग्गहसमत्थो ।
जो य न दुहिए दुहिओ, नो तस्स कहिज्जए दुक्खं ॥ १ ॥

मयोक्तं—"तव दुःखं निराकरिष्येऽहं" । ततस्तयोक्तं—"एष शूलायां निक्षिप्तनरो मद्भर्ताऽस्ति, निर्दोषोऽसौ नृपेणेदृशीं दशां प्रापितः । ततोऽहं राजनरेभ्यो भीता न मां कोऽपि पश्यत्विति ध्यात्वा भक्तादिकं गृहीत्वा विकालेऽत्रागता ह्रस्वाङ्गाऽहं भोजनं दातुं न क्षमाऽभूवं, तेन रोदिमि" । मयोक्तं—"मत्पृष्ठिमारुह्य यथेच्छं भोजनं प्रयच्छ त्वत्पतये" । तदा सा मामशिक्षयत—"त्वयाऽधोदृष्ट्या प्रेक्षणीयं, अन्यथा पतिव्रताऽहं लज्जां प्राप्नोमि" । ततः सा पृष्ठिमारुह्य तत्कार्यकृते प्रवृत्ता । तदा मत्पृष्ठौ रुधिरबिन्दवोऽपतन्, तदा मया किञ्चिदूर्ध्वं विलोकितं दृष्टं मया कृपाण्या तदङ्गमांसादिग्रहणं, पात्रे तत्स्थापनं च । तद्बीभत्सं वीक्ष्याहं प्रणष्टः भयभीतो गोपुरयक्षिणीद्वारे शीघ्रं प्रविशँस्तया दृष्टः । मदेकचरणो देवीचैत्यद्वारस्य बहिः स्थितः, सोऽसिना मत्पृष्ठं धावन्त्या तया छिन्नः तं चरणं लात्वा साऽपि नष्टा । ततोऽहं द्वारदेव्याः पुरः करुणं क्रन्दामि । जातानुकम्पया देव्या मत्पादः समग्रोऽपि तथैवैकस्य शूलाभिन्नस्य नरस्य सजीवस्य ऊरुप्रदेशं छित्त्वाऽत्र संधाय सज्जीकृतः । ततोऽहं रात्रावेव श्वशुरगृहे गतः । यावद्द्वारछिद्रैर्दीपककान्त्या गृहस्वरूपं पश्यामि तावन्महिलां तदम्बां च पद्ममांसं भक्षयन्तीमपश्यम् ।

तदा तदम्बयोक्तं—"अहो पुत्रि ! ईदृशं वर्यं सद्यस्कं मांसं कुतः समानीतं ?"। तयोक्तं—"हे अम्ब ! एतत्पलं त्वज्जामातुः संबन्धि ज्ञेयं ।" तदनु यथाजातमभिहितं । मात्रोक्तं—"नैव तत्त्वोचितं" इति । साऽऽह—"किं करोमि ? तेन मद्वाक्यं न कृतं ऊर्ध्वविलोकनेन" । इति तयोः संलापान् श्रुत्वा व्याघुट्य पुनर्द्वारदेवीचैत्ये रात्रिमतिवाह्य धर्मं श्रुत्वा साधुसमीपे दीक्षामादाय सुस्थितर्षिसेवां तनोमीति पूर्वानुभूतं भयं स्मृतं । इत्याकर्ण्याभयेनातिस्तुतः ।

अथ चतुर्थयामे तथैव द्वयोरालापादि संजातं, तदा जोणको मुनिः स्वचरित्रं स्माह—अवन्त्यां जोणकः सार्थवाहः स्वभार्यानुरक्तोऽभूत् । एकदा भार्ययेति प्रेरितः—"त्वं मम सारङ्गपुत्रं समानीय प्रयच्छ" । भर्त्राऽभिहितं—"तत् कुतः समानयामि ?"। साऽऽह—"राजगृहभूपगृहे तदस्ति" । ततः स तत्पुरोद्यानमेत्य स्थितः । तत्र सुरूपवाराङ्गनावृन्दः ¹पयलनरैः सेवितस्तेन दृष्टः । तन्मध्येऽतियुवती मुग्धसेना एकेन विद्याधरेण हृता । न विद्याधरो वाणेन मया विद्धः । ततः कराभ्यां स्रस्ता सा सरसि पतिता । तत्रोत्पन्नानि पङ्कजान्यादाय तया मदग्रे प्राभृतीकृतानि । ततो मया सह स्नेहमकरोत् । तदनु तया ममात्रागमननिमित्तं पृष्टं । मयाऽपि रामाप्रेरितं प्रयाणस्वरूपं सर्वं निवेदितं । साऽऽह—"तव भार्या नूनमसती ज्ञायते, तया कैतवं कृत्वा वञ्चितोऽसि" । तद्वाक्यं मया न स्वीकृतं, यतः स्त्रियोऽन्यस्त्रीगुणान् श्रुत्वा न स्मेरवदना भवन्तीति । ततोऽहं वेश्यागृहे गतवान् । बहूपचारैर्मम सेवा

१ विटपुरुषैः.

तया रचिता। अन्यदा मुग्धया श्रेणिकभूपस्य पुरो नृत्यं प्रारब्धं। तदा मया मृगपुच्छं हृतं, तद्रक्षकेण दृष्टं। स नृपाग्रे पैशुन्यं चकार। तदा मुग्धयाऽहं मोचितः। अन्यदा वेश्यामादायाहं स्वपुरोद्याने समेतः। तत्र तां मुक्त्वा रात्रौ अहं प्रच्छन्नं गृहे गत्वा स्थितः। तत्र मद्भार्यां भुञ्जन्नेको जारो दृष्टः। स प्रसुप्तो मया मारितः। भार्यया स शीघ्रं स्ववाटकभूमौ गर्तायां क्षिप्तः। इत्थं स्त्रीचरित्रं निरीक्ष्य भूय उद्यान-स्थवेश्यान्तिकमागत्य मया सर्वं निवेदितं। ततश्चिरकालं तद्गृहे राजगृहे चोषितः। पुनर्वेश्यामापृच्छ्य तच्चरित्रप्रेक्षणोत्सुको गृहमागतः। अजस्रं सा मां भजति। अहमपि तच्चरित्रं न दर्शयामि। साऽपि नित्यं स्वजारस्थलं प्राग्भोजनादिनाऽर्चयति, पश्चाद्भक्ष्यति अन्यदा तया मदर्थे घृतपूरादिना प्राघूर्णकमु-पकल्पितं। तदा मया भणितं–"अद्य न कस्यापि देयं, पूर्वं यत्तवावश्यकं तत्कुरु"। साऽऽह–"त्वत्तोऽ-न्योऽधिकः कोऽपि नास्ति"। ततो मल्लोचने परिवञ्च्य तत्स्थलपूजनार्थं गता। मया तद्विज्ञायेति भणिता–"हे अप्रार्थ्यप्रार्थिके! अद्यापि स्वचरित्रं न जहासि"। तया भणितं––"मया त्वदाज्ञा कदापि नोल्लङ्घिता। कदापि न गत्वलिप्रदानं कृतं। निष्प्रयोजनं किं मामुपालभसे?" इत्युक्त्वा रोषवश्ययाऽ-श्रुपातं कुर्वन्त्या तया तप्तलोहकटाहो मदीयोपरि निक्षिप्तः। उष्णस्नेहादिबिन्दवो मेऽङ्गे लग्नाः। तेन त्वचा तु देहतो विनष्टा। ततोऽहं भयभ्रान्तः सहसा नश्यन् कथमपि मातुर्गृहमनुप्रविष्टः, मूर्छितश्च पतितः। ततः स्वजनैः शतपाकादितैलैः सज्जीकृतः। ततोऽहं स्वजनादिभ्यः (दीनां पुरः) सद्भावं

२ प्रकटीकरोमि.

प्रकाश्य साधुसमीपमागत्य धर्ममाकर्ण्य प्रव्रजितः। इदानीमपि तद्भयं संस्मृतं। अभयेन भणितं—"भगवन्! यूयं बाह्याभ्यन्तरसमस्तभयविवर्जिता दृश्यध्वे। वयमेव कर्मभारभारिताः सर्वभयाभ्यन्तरे वसामः"। इत्यादिबहूक्तिभिः स्तुत्वा स्वरात्रिपौषधं संपूर्णं विधायाभय उद्गते सूर्ये उपाश्रयान्निर्ययौ। तदैव कायोत्सर्गतत्परान्तःकरणश्रीसुस्थितानगारकण्ठे तं हारं समीक्ष्यामात्येश्वर इति दध्यौ—"अहो! रात्रौ प्रतिप्रहरं ते चत्वारो मुनयो महाभयं महाभयमित्यूचुस्तत्सत्यं, निःस्पृहाणां काञ्चनमतिभयरूपमेव। किंचाहो! साधूनामलोभत्वं! यतो दिव्यहारं राज्यतुल्यं दृष्ट्वाऽपि पञ्चापि ऋषयः सलोभत्वं क्षणमपि नाङ्गीचक्रुः। सर्वाण्यपि भयानि लोभ एव प्रतिष्ठितानि"। ततः सुस्थितसाधुं त्रिः प्रदक्षिणीकृत्य वन्दित्वा स्तुत्वेति स्माह—"अहो ते निज्जिओ कोहो०"। ततस्तं हारं मुनिकण्ठात्स्वयमेव संगृह्य हृष्टस्तुष्टो राजसद्मस्थितस्य श्रेणिकभूपस्य प्रददौ रात्रिवृत्तान्तमपि जगाद च। तच्छ्रुत्वा श्रेणिकोऽमात्यमाह—"मुनिगुणस्तुत्यादिभिरनन्तभवदुःखचिन्तादयः प्रक्षीयन्ते तर्हि त्वदीयैहिकचिन्ताहननं कियन्मात्रं? तन्महिम्ना स्वयमेव दुःखानि क्षीयन्त इति"॥

ऊर्ध्वस्थितं सुस्थितमत्र सुस्थितं, यामेषु सर्वेष्वपि योगनिश्चलम्।
स्तौमीति तं साधुममुक्तसद्गुणं, तपोऽन्तिमाचारचरं मुनीश्वरम्॥ १॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ
विंशस्तम्भे ऽष्टनवत्युत्तरद्विशततमं २९८ व्याख्यानम्॥

## नवनवत्युत्तरद्विशततमं २९९ व्याख्यानम् ॥



अथ तपसो मुख्यत्वमाह—

तपो मुख्यं हि सर्वत्र, न कुलं मुख्यमुच्यते । हरिकेशी श्वपाकोऽपि, स्वःपूज्योऽभून्महाव्रतैः ॥ १ ॥

ज्ञातं चेदं—मथुरापुर्यां शङ्खो युवराजो धर्मं श्रुत्वा दीक्षितो विहरन् गजपुरं गतः । तत्र भिक्षायै विहरँस्तप्तवालुकासमाया देवप्रभावाद्वाग्निरूपाया हुतवहाख्याया रथ्यायाः समीपेऽगात् । यस्तस्यां चलति स तदैव म्रियते । मुनिना तामसंचारां दृष्ट्वा पुरोहितसुतः पृष्टः—"इयं रथ्या वहति न वा ?" । तेनापि "दह्यतामयं" इति दुष्टाशयाद्वहतीत्युक्ते स त्वरितं तस्यामेव ययौ । तत्तपःप्रभावात्सा रथ्या शीतीभूता । पुरोहितसुतो गवाक्षस्थस्तं त्वरितमीर्यापरं यान्तं दृष्ट्वाऽहोऽयं महातपस्वीति विस्मितः । एकदा तमुद्यानस्थं नत्वोचे—"हे पूज्य ! मया तत्र गमनानुज्ञा दत्ता तत्पापतोऽहं कथं छुटिष्यामि ?" इत्युक्ते मुनिनोक्तं—"प्रव्रज्या गृहाण" । तेन दीक्षा गृहीता । द्विजत्वात्तत्र जातिमदं कृत्वा पूर्णायुष्कः स्वर्गं गत्वा च्युतो गङ्गातीरे स्मशानस्वामी बलकोट्टो नाम श्वपाकोऽभूत्तस्य द्वे भार्ये गौरी गान्धारी च तत्र स गौर्याः कुक्षौ समेतः प्राग्भवजातिमदात्कालो विरूपश्च जातः, सोऽन्त्यजानामपि हसनीयो बलनामा भण्डनकुशलो विषतरुरिव द्वेष्यो बहूनामुद्वेगकृदवर्धत । अन्यदा बन्धूनां पानगोष्ठीपराणां



१ देवपूज्यः.

मध्ये डिम्भैः सह भण्डचेष्टादिभिः कलहायमानस्तैर्बहिष्कृतः पार्श्वेऽस्थात् । तावत्तत्राहिर्निःसृतः, तैः सहसोत्थाय सविष इति हतः । क्षणेन दीपकसर्पो निःसृतः, ततस्तैः स निर्विष इति कृत्वा मुक्तः । बलेन तद्वीक्ष्याचिन्ति—“यद्विषभृदहिर्हन्यते दीपकोऽहिर्मुच्यते तर्हि सर्वः कोऽपि स्वदोषैरेव क्लेशभागिति भद्रकैरेव भाव्यं” इति ध्यायन् जातजातिस्मृतिः स्वविमानवासं दुष्टं च जातिमदं भावयन् संविग्नः साधुपादमूले धर्मं श्रुत्वा संबुद्धः, प्रव्रज्य विहरन् तिन्दुकोद्याने यक्षालये प्रतिमास्थस्तस्थौ । एकदा तत्र चैत्ये कौशलिकराजस्य दुहिता भद्राख्या बह्वीभिः सखीभिर्वृताऽऽगता । यक्षं नत्वा सर्वाः क्रीडार्थं प्रवृत्ताः । वरालिङ्गनमिषेण स्तम्भान् जगृहुः । तत्र सहसा कायोत्सर्गस्थं मुनिमेव स्तम्भं ज्ञात्वा तमालिङ्ग्य राजदुहित्रोक्तं—“मयाऽयं वरो वृतः” । क्षणेन कालं विकरालं मुनिं दृष्ट्वा पूच्चक्रे थूथूकारं चकार । तेन रुष्टो यक्षस्तां वक्रमुखीं ग्रथिलाङ्गीं परवशां चक्रे । पुनर्यक्षः प्राह—“यदीयं स्त्री मुनिं पतित्वेन स्वीकरोति तदा मुञ्चामि” । राज्ञा जीवत्वसाविति तस्मै दत्ता । सा स्वजनैरनुज्ञाता यक्षालये स्थिता साधोरनुकूलमुपसर्गं चकार । मुनिस्तु नैच्छत् । साऽपसृता । यक्षेण सर्वां रात्रिं विडम्बिता, पुनः पुनर्मुनिरूपं यक्षरूपं च दर्शयित्वा विप्रतारिता । प्रातः साधुर्नेच्छतीति यक्षोक्त्या ज्ञात्वा सा खिन्नमनाः पितुर्गृहं ययौ । पुरोहितेन दृष्ट्वा राज्ञे प्रोक्तं—“इयमृषिपत्नी द्विजेभ्यः कल्पते । राज्ञा सा तस्मै दत्ता । स पत्नीं कृत्वा सप्रियो यज्ञमारेभे । अथ हरिकेशाख्यश्वपाककुलजो बलो नाम जितेन्द्रियो भिक्षार्थमेकदा द्विजानां यज्ञपाटके प्राप्तः । तं तपस्विनमायान्तं वीक्ष्य द्विजा म्लेच्छा इव तमुपहसन्ति—“को रे

त्वं बीभत्सरूपो द्रष्टुमनर्हः कया वाञ्छयाऽत्रागतोऽसि ? अपसरास्मद्दृष्टेः" इत्याकर्ण्य रुष्टो यक्षो मुनिदेहेऽवतीर्य प्राह—"श्रमणोऽहं परार्थनिष्पन्नस्यैवान्नस्यार्थे इहागतोऽस्मि, प्रभूतमन्नं निष्पन्नमस्ति, तन्मध्याच्छेपावशेषमुद्धरितं मह्यं साधवे दीयतां"। एवं यक्षेणोक्ते याज्ञिकाः प्राहुः—इदं सिद्धभोजनं द्विजानां देयं न तुभ्यं शूद्राय दास्यामः। जगत्सु द्विजसदृशं पुण्यक्षेत्रं नास्ति, तत्रोप्तं बीजं महाफलं स्यात्"। यक्षः प्राह—यूयं यज्ञे हिंसका आरम्भरक्ता अजितेन्द्रिया अतः पापक्षेत्रं, न महाव्रतितुल्यं सुपेशलं धर्मक्षेत्रं विश्वे"। इत्थमध्यापकं यक्षेण निर्मुखीकृतं ज्ञात्वा तच्छात्राः प्राहुः—"अस्मदुपाध्यायानां प्रत्यनीकोऽसि त्वं अतो नैव तुभ्यं दास्यामः, अन्यथा तु कदाऽपि अनुकम्पया किञ्चिदन्तप्रान्तादि दद्मः"। यक्ष आह—

समिईहि मज्झं सुसमाहियस्स, गुत्तीहि गुत्तस्स जिइंदियस्स।
जइ मे न दाहित्थ अहेसणिज्जं, किमज्ज जन्नाण लभित्थ लाभं ॥ १ ॥

मह्यं यदि न दास्यथैषणीयं किञ्चित्तर्हि हे आर्या यज्ञानां लाभं न लप्स्यध्वे। इति श्रुत्वाऽध्यापकाश्छात्रान् प्राहुः—"एनं यष्टिमुष्ट्यादिभिस्ताडयित्वा निष्कासयत"। ततस्ते वेगेन धाविता मुनिं घ्नन्ति दण्डाद्यैः। तदा भद्रया निषिद्धाः—"भोः कुमारा नायं कदर्थनार्हो मुनिः। यतः—

देवाभिओगेण निओइएणं, दिन्ना मु रन्ना मणसा न झाया।
नरिंददेविंदभिवंदिएणं, जेणामि वंता इसिणा स एसो ॥ २ ॥

देवाज्ञया राज्ञा दत्ताऽपि येनास्म्यहं त्यक्ता स एष ऋषिर्ज्ञेयः । यतः—

महायसो एस महाणुभागो, घोरव्वओ घोरपरक्कमो अ ।
मा एयं हीलह अहीलणिज्जं, मा सव्वे तेएण भे निद्दहिज्जा ॥ ३ ॥

मा एनं यतिं निन्दत । अयं हि रुष्टो मा सर्वांस्तेजसा तपसा भो भवतो निर्धाक्षीत् भस्मसात्करोतु" । इति श्रुत्वा यक्षो दध्यौ—"एतदुक्तं मृषा मा भूत् इति तान्निवारयामि । यतः—

एयाइं तीसे वयणाइं सोच्चा, पत्तीइ भद्दाइ सुभासियाइं ।
इसिस्स वेयावडियट्ठयाए, जक्खा कुमारे विणिवारयंति ॥ ४ ॥

ततो यक्षो रुष्टोऽन्तरिक्षेऽनन्तरूपैः कृत्वा तानुपसर्गकारकान् विंदान् रुधिरं वमतश्चकार । भूयो भूयेदमाह—"हे छात्राः ! यथा गिरिं नखैः खनथ, अयोलोहं दन्तैः खादथ, जातवेदसं पादैर्हथ, ये यूयं भिक्षुमवगणयथ, तन्मूर्खकृत्यं नार्हं । अथ यूयं जीवितं धनं वा यदीच्छथ तदा शिरःप्रणामपूर्वं शरणं प्रपद्यध्वं" । अथ स यज्ञाचार्यः सोमदेवः सभार्यं ऊर्ध्वमुखान्निर्गतजिह्वानेत्राँश्छात्रान्[1] काष्ठोपमान् वीक्ष्य तमृषिं प्रसादयति—"हे भगवन् ! अस्मदपराधं क्षमस्व । यतः—

बालेहि मूढेहि अयाणएहिं, जं हीलिया तस्स खमामि भंते ।
महप्पसाया इसिणो भवंति, न हु मुणी कोहपरा भवंति ॥ ५ ॥

---

१ छात्रान्.

अथ मुनिराह—

"पुव्विं च इण्हिं च अणागयं च, मणप्पदोसो न मे अत्थि कोइ ।
जक्खा हु वेयावडियं करंति, तम्हा हु एए निहया कुमारा ॥ ६ ॥

पुरा इदानीमस्मिन् कालेऽनागते चाल्पोऽपि मनःप्रद्वेषो मम नास्ति नासीत् न भविष्यति च, यस्माद्यक्षो वैयावृत्त्यं करोति तस्माद्देवेनैते कुमारा नितरां हताः"। ततोऽध्यापकः प्राह—"हे पूज्य ! यूयं धर्मज्ञा न क्रोधपराः स्यात, परं वयं युष्माकमेव पादौ शरणं समागताः स्मः । इदं प्रभूतमन्नं शाल्यादिकं भुङ्क्ष्व । भुंक्त्वाऽस्माकमनुग्रहं कुरु" । तदा मुनिर्मासक्षपणपारणे शुद्धं भक्तपानं जग्राह । तदा सुरेण सर्वे कुमाराः सज्जीकृताः पञ्च दिव्यानि च कृतानि । तदा तेऽपि द्विजा हृष्टाः प्राहुः—"हे पूज्य ! वयं बाह्यस्नानादिधर्मस्पृहा युष्माभिरङ्गीकृतयागादितत्त्वं न जानीमः । यतः—

के ते जोई के व ते जोइठाणा, का ते सुया किं च ते कारिसंगं ।
का ते एहा कयरा ते संति भिक्खू, कयरेण होमेण हुणासि जोइं ॥ ७ ॥

हे पूज्य ! ते तव यजनविधौ किं ज्योतिरग्निः ? किं ते तव ज्योतिःस्थानं ? यत्र ज्योतिर्विधीयते ? काः ते शुचो घृतादिप्रक्षेपिका दर्व्यः ? किं ते कारीषाङ्गं अभ्युद्दीपनकारणं येनासौ संधुक्ष्यते ? काश्च समिधो याभिरग्निः प्रज्वाल्यते ? कतरा का शान्तिश्च दुरितोपशमहेतुरध्ययनपद्धतिः ? कतरेण कस्य संबन्धिना होमेन हवनविधिना जुहोषि आहुतिभिः प्रीणयसि ज्योतिरग्निं ? "। मुनिराह—

"तवो जोई जीवो जोइठाणं, जोगा सुया सरीरं कारिसंगं ।
कम्मेहा संजमजोग संती, होमं हुणामि इसिणं पसत्थं ॥ ८ ॥

तप आहारमूर्छात्यागो ज्योतिरग्निः, कर्मेन्धनदाहकत्वात् । जीवो ज्योतिस्थानं, ज्योतिषस्तदाश्रयत्वात् । योगा मनोवाक्कायाः शुचस्ते शुभव्यापाराः स्नेहस्थानीयाः । शरीरं करीषाङ्गं, कर्म एधाः, संयमयोगाः शान्ति, इत्यादिहोमेन जुहोमीति" । अथ स्नानस्वरूपं पृच्छति—"कस्ते ह्रदः ? किं च ते शान्त्यै पापोपशमाय ? किमिदं तीर्थं पुण्यक्षेत्रं शान्तितीर्थं ? अथवा किंरूपाणि ते सन्ति तीर्थानि संसाराब्धितारणानि ? कस्मिन् वा स्नातः शुचीभूतो रजःकर्म जहासि त्वं ? तत्किमस्माकमिव तवापि ह्रदतीर्थं शुद्धिस्थानमन्यदेति न विद्मः । हे यक्षपूजित ! आचक्ष्व, वयं भवतः सकाशे ज्ञातुमिच्छामः" । मुनिराह—

धम्मे हरए बंभे संतितित्थे, अणाविले अत्तपसन्नलेसे ।
जहिं सि एहाओ विमलो विसुद्धो, सुसीइभूओ पजहामि दोसं ॥ ९ ॥

इत्यादिशुभवाक्यैः प्रबुद्धा द्विजा जैनधर्मं प्रापुः । मुनिरप्यन्यत्र विहरन् कर्मक्षयेण परमपदं प्रापेति । यतः—

सक्खं खु दीसंति तवो विसेसो, न दीसई जाइविसेस कोइ ।
सोवागपुत्तं हरिएससाहु, जस्सेरिसा इड्ढि महाणुभावा ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ विंश
स्तम्भे नवनवत्यधिकद्विशततमं २९९ व्याख्यानम् ॥

## त्रिशततमं ३०० व्याख्यानम् ॥

अथ वीर्याचारमाह—

वाह्याभ्यन्तरसामर्थ्यानिह्नवेन प्रवर्तनम् । सर्वेषु धर्मकार्येषु वीर्याचरणमुच्यते ॥ १ ॥

स्पष्टः । अत्रार्थे भावना चेयं—वाह्यसामर्थ्यं वाक्काययोः सत्कं, अभ्यन्तरवीर्यं मनःसंबन्धिकं, तयोर्वीर्यं, तस्यानिह्नवनेन प्रवर्तनं सर्वधर्मकृत्येषु वीर्यस्फोरणं तद्वीर्याचरणं निगद्यते । यतः प्राचीनपादैः—

अणिगूहिअवलविरिओ परक्कमइ जो जहुत्तमाउत्तो ।
जुंजइ अ जहाथामं नायव्वो वीरिआयारो ॥ १ ॥

व्याख्या—अनिह्नुतवाह्याभ्यन्तरसामर्थ्यः सन् पराक्रमते चेष्टते यो ज्ञानाद्याचारमाश्रित्येति शेषः । आयुक्तोऽनन्यचित्तः पराक्रमते ग्रहणकाले, तत ऊर्ध्वं युनक्ति च योजयति च यथोक्तमाचारमेव, यथास्थामं यथासामर्थ्यं, ज्ञातव्योऽसौ वीर्याचारः, आचाराचारवतोः कथञ्चिदव्यतिरेकादिति । वीर्याचारश्च मनोवाक्कायविषयभेदात्त्रिधा । तस्य चातिचारा अपि मनोवाक्कायवीर्यापह्नवरूपास्त्रय एव प्रतिक्रम्यन्ते । यदुक्तं चतुर्विंशत्यधिकशतश्राद्धातिचारसंकलनगाथायाम्—

पण ५ संलेहणा पनरस १५ कम्मा नाणाइअठ्ठ पत्तेयं २४ ।
वारस १२ तव विरियतिगं ३ पण ५ सम्म वयाइं ६० अइआरा १२४ ॥ १ ॥

अत्राह परः—ननु किमनेनाजागलस्तनानुकारेण वीर्याचारेण सुप्रयुक्तेनापि प्रयोजनं ? यतो भव्यजीवानां भवस्थितेर्नियतत्वेन यदा येन सिद्धौ गन्तव्यं भविष्यति तेन तदा वीर्याचारप्रयोगमन्तरेणापि तत्र गन्तव्यमेवेति। अत्र प्रतिविधीयते-यदिदं भवता भवस्थितेर्नियतत्वं हेतुतयोपन्यस्तं तन्न प्रशस्यतरं, युक्तिविकलत्वात्, यतो भव्यानां भवस्थितिरेकान्तेन न नियता, नाप्यनियता, किं तु नियतानियता। कथमिति चेदुच्यते—यत्पुण्यपापादिसामग्र्या भवस्थितिर्हीयते वर्धते च तेन तस्या अनियतत्वं, यो यदा मोक्षं गन्ता स्यात्स तदा यातीति युक्त्या नियतत्वमपि। यदि हि यो यदा मोक्षं गन्तास्ति स तदैव मोक्षं यास्यत्येवेत्येकान्तेनाङ्गीक्रियते तदा गोशालकमाननं प्रसज्यते। मङ्खलीपुत्रो हि यस्य यद्यदा (भवितव्यं तत्तस्य) तदा भवत्येवेति नियतिवादं मन्यते, तन्मानने च प्रकटमेव मिथ्यात्वं, यतो जिनशासने कालादयो जगद्विवर्तकारणतया प्रत्येकं नाङ्गीक्रियन्ते, किंतु पञ्चापि समुदिता "कालो सहाव०" इत्यादि। अतो नियतानियतैव भवस्थितिरभ्युपगन्तव्या। न चैतद्वचनं युक्तिविकलं, यतो यथैकस्मिन्नेव वस्तुन्युत्पादव्ययध्रौव्याणि त्रीण्यप्यविरोधेन वर्तन्ते तथैकस्या अपि भवस्थितेर्नियतत्वमनियतत्वं च कथञ्चिदस्त्येव। इदमत्र रहस्यं—पुण्याद्युपक्रमकरणेन जीव उदयादर्वागपि मोक्षमधिरोहति, श्रीजिनाज्ञादिलोपेन महापापेन चाधिकमपि संसारं भ्रमति, तदपेक्षया भवस्थितिरनियता। न चैतत्सिद्धान्तविरहितं, श्रूयते हि श्रीमहानिशीथादौ सावद्याचार्यादीनामेकभवावशेषीकृतभवस्थितीनामप्युत्सूत्रभाषणादिनाऽधिकभवस्थितिकरणादि। यच्च प्रतिनियत एव समये कश्चिन्मोक्षगमनयोग्यं पुण्यं कर्तुं शक्नोति, नान्यदा, तदपेक्षया तु नियतेति। यत्तु केव-

लज्ञानिना प्रोक्ता सा नियता जवस्थितिः । यतः केवलज्ञानी संपूर्णज्ञानमाहात्म्यादयमेवं पुण्याद्युपक्रमं करिष्यत्ययं तु नेत्यादिजीवोपक्रमादिस्वरूपं ज्ञात्वैव जाषते नान्यथेति । किं च जवस्थितेरेकान्तनियतत्वेऽङ्गीक्रियमाणे जन्तूनां तत्तद्दुष्करधर्मकृत्यस्य प्राणातिपातादिपापव्यापारपरिहरणस्य च वैफल्यमेव प्रसज्यते । न चैतद्युक्तियुक्तं, ततः सिद्धं जव्यजन्तूनां जवस्थितेर्नियतानियतत्वं । तत्सिद्धौ च सिद्धमेव सर्वत्र धर्मानुष्ठानेषु स्वशक्त्यगोपनरूपस्य वीर्याचारस्य साफल्यं । उक्तं चाप्तागमे—

तित्थयरो चउनाणी सुरमहिओ सिज्ञियवयधुवम्मि ।
अणिगूहिअबलविरिओ सवत्थामेण उज्जमइ ॥ १ ॥

अत्र बलं दैहिकं वीर्यं च मानसमिति ।

इअ जइ ते वि हु नित्थिन्नपायसंसारसायरा वि जिणा ।
अप्पुज्जमंति तो सेसयाण को इत्थ वामोहो ॥ २ ॥

अत्र वीर्यगोपनागोपनफलमाह वक्ष्यमाणदृष्टान्तेन—पृथ्वीपुरे सुधर्मश्रेष्ठी जैनधर्मवासितान्तःकरण आसीत् । एकदा वैराग्यकथायां जारवाहकादिसदृशान् प्रबन्धान् श्रुत्वा जैनीं दीक्षां जग्राह । तथाहि—एकः कश्चित्काष्ठवाहको नित्यं काष्ठानि महता कष्टेन समानीय विक्रयागतद्रव्येण निर्वाहं करोति । एकदा ग्रीष्मर्तौ अतिजाराक्रान्तो जारमुत्तार्यैकमहेभ्यावासछायायां स्थितः, तदा तद्गृहस्वामिनीमेकां तिलोत्तमाकारधारिणीं गवाक्षस्थां वीक्ष्येति दध्यौ—"अहो ! सर्वत्रैलोक्यसौख्यं अनयैवाकर्षितं (कृष्टं),

परं तत्सौख्यनिमित्तं तु काञ्चनमेव, अतोऽहं द्रव्यमुपार्ज्येदृशं जन्मसाफल्यं विदधामि” । इति ध्यात्वा
भोजनादौ कार्पण्यं सर्वत्र विस्तारितं, स्तोकं भक्षयति, बहु संचिनोति । प्रत्यहं तद्ध्यानकल्लोललोलित-
मनाः कालं गमयति । एकदा काष्ठभारार्दितः कार्पण्यतोऽतिकृशगात्रः सूर्यरश्मितापसंतापव्याकुलो रजः
प्रस्वेदावगुण्ठितसर्वावयवो भ्रमन्नेव निःश्वसन्नुच्छ्वसन् कटिस्थापितकराभ्यां संचरन्नरण्यकूपकण्ठे समागत्य
स्थालके विश्रामाय शयितः, तत्कालं तत्र निद्रां प्राप । तदा स्वप्नमित्यद्राक्षीत्—महता कष्टेन द्रव्यमुपा-
र्जितं, तेन विवाहकार्याणि कृतानि, पूर्वं गवाक्षे प्रेक्षिता तादृशी कामिनी परिणीता, तया सह हावभा-
वादिकमनुभवति, अन्योऽन्यं प्रश्नोत्तरैः सहास्या किञ्चिद्रोषमुद्भाव्य सविभ्रमं साचिलोचनयुगं[1] नमय-
न्तीति तं स्माह—“किमिदं लज्जाकरं वाक्यं जल्पसि ? दूरे तिष्ठ” इति कोमलां मञ्जुलां वाचं वदति ।
तदाऽतिप्रेमगर्भया चेष्टया तुष्टो गाढं दोर्भ्यामालिङ्गनपरिरम्भणतत्परो जातः । तं प्रति सा सविभ्रमममृजुं
लत्ताप्रहारं व्यतनोत् । सोऽपि तां लत्तां वीक्ष्य दूरेऽपसृतः । तदा शरीरमपि निद्रायां साक्षादपसृतं
कूपमध्येऽपतत् । तदा सहसा विनिद्र इति दध्यौ—“अहो किमेतज्जातं दृष्टं ? अहो क्व सा स्त्री गता ?
क्व तद्विलासहावादिकं ? अहो प्रतिदिनं ध्यातं स्फुटं स्वप्ने फलितं । परं स्वप्नकामिन्या मायाजालेन बद्धा-
ऽत्रान्धकूपेऽधोगतौ निक्षिप्तः तर्हि साक्षादनुभूता सा ध्रुवं पातालगतौ पातयत्येव, अत्र न संदेहो देह-
धारिभिः कार्यः” इति कूपमध्यस्थितश्चिन्तयति तावदेको भूपस्तत्रागतः, मध्ये नरं पतितं वीक्ष्य बहि-

१ वक्रलोचनयुगम्.

निष्कासितस्तेन । तदनु नृपेण पृष्टः—"त्वं केन कूपे पातितः ? तमहं शिक्षयामि" । स आह—"स्वामिन् ! तदग्रे त्वं कियन्मात्र ? इन्द्रादयोऽपि तस्य शिक्षाकरणे न क्षमाः, का कथाऽन्येषां ? " । नृपस्तु स्वबलगर्वितो जगर्ज—"अहं पृथ्वीशत्वात्तद्वस्त्वेव नास्ति यत्करणे नाहं क्षमः" । ततस्तेन काष्ठवाहकेन सर्वं निवेदितं । तदाकर्ण्य नृपः प्रबुद्धः स्माह—"सत्यं जल्पितं त्वया, स्त्रीविलासजेतारस्तु महर्षय एव" । ततः स भारवाही प्रबुद्धः । यादृशो लयः प्राग्विभावपदार्थेष्वभूत्तादृश एव सत्त्वादिगुणरहितनैर्गुण्यमार्गे लयोऽभूत् । इत्याद्यनेकलोकलोकोत्तरगदितावदातान् श्रुत्वा स सुधर्मश्रेष्ठी प्रतिबुद्धः । एकं स्वसुहृदं नित्यमनेकधर्मकथाभिरबोधयत् । स तु सुहृत्तीव्रमोहाज्ञानादिसमन्वितत्वात्क्षणमात्रमपि अर्हन्मार्गे रुचिं न दधाति । तदनु सुधर्मा विषण्ण एकाक्येव प्रव्रज्यां जग्राह । एकादशाङ्गपाठी जातः । एकदा पुरमध्ये प्रविशन्नेकत्र स्थले विवाहोत्सवे मधुरगीतनृत्यवादित्रादिसुशब्दान् श्रुत्वा कमनीयकामिनीवृन्दान् कामोद्दीपकलावण्यनेपथ्यगीतालापैः कामिजनमनोविह्वलताकारकान् वीक्ष्य शीघ्रं पश्चादपसृतः । व्याघुट्यारण्यैकदेशे यथा हरिततृणपत्रबीजादिविराधना न स्यात्तथा वृक्षाधोभागे ईर्यापथिकीमालोच्य ध्यानतत्परः स्थितः—"अहो मदात्मा महालोलुपः ! यदि तानि मोहजनकनिमित्तानि वीक्ष्य न निवृत्तोऽभविष्यत्तदा महती कर्मवृद्धिरभविष्यत् । धन्यास्ते ये रम्भातिलोत्तमाऽहिकुञ्जे पतिता अपि क्षणमात्रमपि स्वात्मतत्त्वरतिं न मुञ्चन्ति" । इत्यादिशुभध्यानेनावधिज्ञानं स प्राप । तस्मिन्नेव समये स्वचोलपट्टस्योपरि तद्वृक्षपत्रमेकमपतत् । तदा मुनिनेति ध्यातं—"एतत्पत्रमध्येऽहमप्यनेकश उषितः । मम

प्राग्मित्रं तु कुत्र गतावन्नविष्यत्” । तदा ज्ञानेन तस्मिन्नेव पत्रे एकेन्द्रियत्वेनोत्पन्नो ज्ञातः । तदेति स्माह—“हे मित्र ! पूर्वं मयाऽनेकधा वारितोऽपि त्वं मोहासक्तत्वं नाजहाः, अधुना तु त्वं मनोवाक्-र्णादिरहितो जातः, इदानीं किं करोमि ? त्वया नृजन्म सर्वं निरर्थकं कृतं, हा हा त्वया परमात्मगदितं न सम्यगवधारितं” इत्यादिन्नावदयां न्नावयन् क्रमेणानन्तानन्दत्वं वन्नारेति ॥

संवन्धितः सोऽपि विलासलालसः, स्वौजांसि गोप्ता तरुपत्रतां ललौ ।
विस्तारयन् वीर्यमिहैव जन्मनि, साधुः सुधर्मा पदमव्ययं दधौ ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ
विंशस्तम्भे त्रिशततमं ३०० व्याख्यानम् ॥

## समाप्तोऽयं विंशः स्तम्भः

## ॥ एकविंशः स्तम्भः २१ ॥

### एकोत्तरशतत्रयतमं व्याख्यानम् ३०१ ॥

अथ पूर्णतागुणमाह—

पूर्णतागुणसंपृक्त—वाचंयमं महामुनिम् । जयघोषो द्विजः प्रेक्ष्य, पूर्णानन्दमयोऽभवत् ॥ १ ॥

स्पष्टः । नवरं पूर्णतागुणवर्णनं तु पूर्वसूरिणा प्रदर्शितं । यतः—

पूर्णता या परोपाधेः, सा याचितकमण्डनम् । या तु स्वाभाविकी सैव, जात्यरत्नविभानिभा ॥ १ ॥

या परोपाधेः पुद्गलसङ्गोत्पन्नदेहकाञ्चनकामिनीकीर्त्यादिलक्षणायाः पूर्णता नरेन्द्रसुरेश्वरादीनामिव, सा याचितकमण्डनं मार्गितभूषणशोभा नानन्तकालं तिष्ठति, तेन मण्डनेन यदैश्वर्यं तद्विश्ववासिजीवैरनन्तश आस्वाद्योच्छिष्टं ( अतः ) सत्त्वानामशुद्धिनिमित्तं तत् । तु पुनः या स्वाभाविकी स्वस्वरूपानुभवरूपा पूर्णता, सैव जात्यरत्नविभा श्रेष्ठरत्नकान्तिस्तत्तुल्या वर्तत इति १ ॥ इयं पूर्णता प्राप्तसम्यक्त्वादीनां स्यात् । यतः—

कृष्णपक्षे परिक्षीणे शुक्ले च समुदञ्चति । द्योतते सकलाध्यक्षा, पूर्णानन्दविधोः कला ॥ २ ॥

बहुलपक्षे क्षयं नीते उज्ज्वलपक्षे चोदयं प्राप्ते सति समस्तलोकप्रत्यक्षा चन्द्रस्य कला द्योतते इति लोकनीतिः । एवं कृष्णपक्षेऽर्धपुद्गलाधिकसंसाररूपे क्षीणे सति शुक्लपक्षेऽर्धपुद्गलाभ्यन्तरसंसाररूपे

प्रवर्तमाने सति पूर्णानन्द आत्मा स एव विधुस्तस्य कला स्वरूपानुयायिचैतन्यपर्यायप्रभवरूपा शोभते। कृष्णपक्षे तु अनादिक्षयोपशमीभूतचेतनावीर्यादिपरिणामः मिथ्यात्वासंयमैकत्वेन संसारहेतुत्वान्न शोभते इति २॥ अत्र पूर्णताऽनेकधा स्वमतिभिर्निगदिताऽपि स्याद्वादरीत्याऽऽत्मनः स्वरूपसाधनावस्था एव प्रशस्या। तथाहि—तत्र नामपूर्ण इति कस्यचिन्नाम शब्दालापरूपं यथा पूर्णपोलीति लोके १। पूर्णस्याकृतिरारोपो वा काष्ठपाषाणादौ स्थाप्यते स स्थापनापूर्णः २। द्रव्यपूर्णः द्रव्येण पूर्णः धनाढ्यो जलादिपूर्णघटादिर्वा, द्रव्यात्पूर्णः स्वकार्यपूर्णः, "अर्थक्रियाकारि द्रव्यं" इतिलक्षणात्, द्रव्येषु पूर्णः धर्मास्तिकायस्कन्धादिः, "अणुवर्त्तगो दवं" इतिवचनात्। आगमतो द्रव्यं—पूर्णपदस्यार्थज्ञोऽनुपयुक्तः, नोआगमतो ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदतस्त्रिधा, तत्र पूर्णपदज्ञकलेवरं ज्ञशरीरं, भावी पूर्णपदज्ञाता लघुशिष्यादिर्भव्यशरीरं, तद्व्यतिरिक्तस्तु सत्तया पूर्णो गुणादिभिः तथापि तत्प्रवृत्तिरहित आत्मा कर्मावृतः अविवक्षितभावस्वभावो गृह्यते, यतः कदाचिदपि पर्यायवियुक्तं द्रव्यं न स्यात् तथापि द्रव्यनिक्षेपस्थापनार्थं तद्वियुक्ततया विवक्ष्यते, इत्थं जीवसमासादिग्रन्थे निर्णीतत्वात्, पूर्णता तु जीवगुणरूपा, गुणिनमन्तरेण गुणो न भवति तदा तद्द्रव्यप्राधान्यतो द्रव्यजीवः ३। भावपूर्णः—आगमतः पूर्णपदार्थसमस्तो (ज्ञस्तत्र चो) पयोगी, नोआगमतो ज्ञानादिगुणसंपूर्णः ४। सङ्ग्रहेण सर्वे जीवाः पूर्णतागुणयुक्ताः सन्ति, नैगमेनासन्नसिद्धिवन्तो भव्याः पूर्णताऽभिलाषिणः, व्यवहारतोऽभ्यासवन्तः, ऋजुसूत्रेण स्वीयवार्तमानिकतद्विकल्पवन्तः, शब्दनयेन सम्यग्दर्शनादिसाधकगुणानन्दपूर्णाः, समभिरूढतोऽर्हदाचार्योपाध्याय-

मुनयः स्वस्वज्ञावसुखास्वादनेन ज्ञवोद्विग्नत्वात्, एवंजूतेन सिद्धः। अनन्तगुणानन्दाव्याबाधानन्दपूर्णत्वादिति । अत्र ज्ञावपूर्णता त्रिकालेष्वपि पुजलपरसंयोगजनितसौख्यादिवाञ्छाऽज्ञावेनान्यूनताऽरिक्तता च एव गुणस्तेन संयुक्तं साधुं वीक्ष्य जयघोषाह्वद्विजदेवः पूर्णानन्दमयोऽज्ञवत्। अत्र श्लोकसूचितसम्बन्धस्त्वयम्—

वाणारस्यां युग्मजसोदरौ काश्यपौ जयघोषविजयघोषाह्वावज्ञूतां। अन्यदा जयघोषो गङ्गां स्नातुं गतो मुखोपात्तरटन्मण्डूकज्ञक्षकं सर्पमेकं व्यलोकत, कुररपक्षिणा स ज्ञुजङ्गोऽपि द्रुतं गृहीत्वोत्क्षिप्याधः क्षितौ क्षिप्तो ज्ञक्षयितुं प्रारेज्ञे । तेन पक्षिणा ज्ञक्ष्यमाणोऽप्यहिः संदंशदेशीयदंष्ट्रात्रोटितविग्रहं रटन्तं तं ज्ञेकं जघास। एवं मिथो ग्रसन्तौ तौ प्रेक्ष्य जयघोषो दध्यौ—"अहो ! संसृतिस्वरूपं । यतः—

यो हि यस्मै प्रज्ञवति, ग्रसते तं स मीनवत् । न तु गोपयति स्वीयशक्तिं कोऽपि नदीनवत्[1] ॥ १ ॥
कृतान्तस्तु महाशक्तिरिति स ग्रसतेऽखिलम् । तदसारेऽत्र संसारे, का नामास्था मनीषिणाम् ॥ २ ॥

किंचेह धर्म एवैकः कृतान्तशक्तिकुण्ठकरणे क्षमः, तत्तमेवाहं श्रयामि" इति चेतसि संप्रधार्य गङ्गापरतीरं गतः स पूर्वोक्तपूर्णतागुणान्वितान् साधून् ददर्श, तद्गिरा च जैनधर्ममवेत्य ततो व्रतमादाय ज्ञुवि व्यहार्षीत् । क्रमेण विहरन् वाणारसीपुरोद्याने समागात् । तत्र पुर्यां विजयघोषो यज्ञं करोति ।

१ समुद्रवत्.

तत्र मासक्षपणपारणे सोऽनगारो भिक्षार्थं तत्र ययौ । तं संयतं याजकोऽजातप्रत्यभिज्ञो विजयघोष एव प्रतिषेधति स्म—"हे भिक्षो ! नैव दास्यामि तुभ्यं भिक्षां, याचस्वान्यतः, कुतः ? वेदविद एव द्विजा यज्ञमण्रूपनिष्पन्नान्नं भोक्तुं योग्याः" । एवं याजकेन प्रतिषिद्धोऽपि समतयैव स्थितः, नान्नाद्यर्थं, किंतु तेषां तारणबुद्ध्या इदं वाक्यमब्रवीत्—"भो द्विज ! त्वं वेदमुखं—वेदेषु प्रधानं, यज्ञमुखं—यज्ञानां यन्मुखमुपायः, नक्षत्राणां मुखं प्रधानं, धर्माणां मुखं च न जानासि" । इति श्रुत्वा स स्माह—"यूयमेव तर्हि सर्वमुपदिशथ" । मुनिः स्माह—"अहिंसादिधर्म एव प्रधानः, यज्ञमुखं भावयज्ञ एव, नक्षत्रमुखं चन्द्रः, धर्ममुखं काश्यपो युगादिदेवो मुखमुपायः तस्यैव प्रथमतस्तत्प्ररूपकत्वात्, तन्निगदितधर्माराधक एव ब्राह्मणः, यत उत्तराध्ययने पञ्चविंशाध्ययने—

जहा पउमं जले जायं, नो विलिप्पइ वारिणा एवं अलित्तकामेहिं, तं वयं बूम माहणं ॥ १ ॥

अन्यच्च—

न वि मुंडिएण समणो, न ॐकारेण बंभणो । न मुणी रण्णवासेण, कुसचीरेण न तावसो ॥ २ ॥

नापि मुण्डितेन श्रमणो निर्ग्रन्थः स्यात्, न प्रणवमात्रेण द्विजः ॐ भूर्भुवः स्वरित्यादिना, न मुनिररण्यवासेन, न कुशचीरं दर्भमयं वस्त्रं वल्कलोपलक्षणमिदं तेन न तापसः । तर्हि कथमेते भवन्तीत्याह—

समयाए समणो होइ, बंभचेरेण बंभणो । नाणेण य मुणी होइ, तवेण होइ तावसो ॥ १ ॥

कम्मुणा बंभणो होइ, कम्मुणा होइ खत्तिओ कम्मुणा वइसो होइ, सुद्दो हवइ कम्मुणा ॥ २ ॥

कर्मणा क्रियया द्विजः स्यात्, यतः—

क्षमा दानं दमो ध्यानं, सत्यं शौचं धृतिर्घृणा । ज्ञानं विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम् ॥ १ ॥

तथा कर्मणा क्षतत्राणलक्षणेन भवति क्षत्रियः, वैश्यः कृषिपशुपाल्यादिना, शूद्रो भवति कर्मणा शोचनहेतुप्रेष्यादिसंपादनरूपेण, कर्मनानात्वाभावे हि ब्राह्मणादिव्यपदेशानामभाव एवेति, अहिंसादिगुणैर्युक्ता ये द्विजोत्तमास्त एव तरणतारणक्षमाः" । इत्यादि धर्मवाक्यानि श्रुत्वा गतसंशयो विजयघोषस्तं मुनिं मम सोदरो नूनमित्युपलक्ष्य तुष्ट इदमुवाच—"हे संयताः ! यूयमेव वेदविदः, हे यथास्थिततत्त्वज्ञाः ! यूयमेव यज्ञकर्तारः भावयज्ञयष्टारः परानात्मानं चोद्धर्तुं समर्थाः, तस्मादनुग्रहमस्माकं कुरु हे भिक्षूत्तम ! भिक्षाग्रहणेन" । एवं द्विजेनोक्ते मुनिराह—"हे द्विज ! न कार्यं मम भैक्ष्येण, किंतु क्षिप्रं निष्क्रम-प्रव्रज, भयावर्ते घोरसंसारसागरे मा भ्रमीः । यथा मृत्तिकामयौ आर्द्रः शुष्कश्च द्वौ गोलकौ भित्तावास्फालितौ, य आर्द्रः स श्लिष्यति, दार्ष्टान्तिकयोजनामाह—

एवं लग्गंति दुम्मेहा, जे नरा कामलालसा । विरत्ता उ न लग्गंति, जहा सुक्के उ गोलए ॥ १ ॥"

इत्यादिधर्मं श्रुत्वा सर्वसङ्गं विमुच्य स प्रवव्राज । ततो द्वौ सोदरौ मुनी पूर्वकर्माणि छित्वा क्रमेण सिद्धिसौख्यमवापतुः ।

वास्तवी विगतकल्पनायुता, पूर्णताऽऽत्मगुणसाधनोद्यता ।
ज्ञानदृष्टिनिजकान्तिदाऽस्त्यतः कुर्वतां तदनुयायिचेतनाम् ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकोनविंश-
स्तम्भे एकोत्तरशतत्रयतमं व्याख्यानम् ॥ ३०१ ॥

## द्व्युत्तरशतत्रयतमं व्याख्यानम् ॥ ३०२ ॥

अथ मग्नतागुणमाह—

हित्वाऽक्षविषयाँश्चित्तं, समाधिसौख्यलालसम् । यस्य जातं नमस्तस्मै, मग्नतागुणधारिणे ॥ १ ॥

मग्नत्वगुणवर्णनं तु पूर्वसूरिभिः प्ररूपितं । तथाहि—अनादितोऽयं जीवः पुद्गलस्कन्धजवर्णगन्धरसस्पर्शशब्दादिषु भ्रमन् विकल्पकोटिकोटिप्राप्त इष्टान् विषयानिच्छन् वातोद्धूतशुष्कपलाशपत्रवद्भ्रमति । स च कदाचित्स्वपरविवेकरूपं भेदज्ञानं प्राप्यानन्तज्ञानदर्शनानन्दमयं स्वीयं भावं सत्तया निर्धार्येदं विभावजं सौख्यं न मम, नाहमस्य भोक्ता, उपाधिरेवैषा, न हि मम कर्तृत्वं भोक्तृत्वं ग्राहकत्वं परवस्तूनां विहितं सांप्रतं, त्रिकालज्ञवाक्याञ्जनेन जातस्वपरविवेकेन परेषु रमणास्वादनं न युक्तं इति विचार्यात्मानमनन्तानन्दमयं ज्ञात्वा परमात्मसत्तास्वरूपे मग्नो भवति स मग्नगुणधारी स्यात् । असौ मग्नतागुणो

नयनिक्षेपादिना बहुविधो ज्ञेयः । तत्र नामस्थापने सुगमे । द्रव्येण धनमदिरापानादिना इत्याद्यन्यूह्यं,
अथवा द्रव्यमग्नो द्विधा—आगमतो मग्नपदार्थज्ञाताऽनुपयोगी, नोआगमतः पूर्ववत्, तद्व्यतिरिक्तस्तु
मूढः शून्यो जडः । भावमग्नो द्विविधः—अशुद्धः शुद्धश्चेति, तत्राशुद्धः क्रोधादिमग्नो विभवभावि-
तात्मा, शुद्धश्च द्विविधः—साधको वस्तुस्वरूपाभिमुखश्च । आद्यनयचतुष्टये तु विध्युपेतो बाह्यसाधनप्र-
वृत्तिमान् वस्तुस्वरूपप्रकटनेच्छकः स्यात् । शब्दादिनयमग्नस्तु सम्यग्दर्शनज्ञानसंयमाद्यात्मसमाधिमग्नः,
सिद्धमग्नस्तु संपूर्णवस्तुस्वरूपे निरावरणे मग्नो निष्पन्न इति । अत्र हि ज्ञानादिस्वरूपानन्दमग्नत्वगुणा-
न्वितो ज्ञेयो न परभावरक्तः । यतः—

स्वभावसुखमग्नस्य, जगत्तत्त्वावलोकिनः । कर्तृत्वं नान्यभावानां साक्षित्वमवशिष्यते ॥ १ ॥

स्वभावसहजं सुखं तन्मयस्य जगल्लोकस्तस्य तत्त्वं तत्तद्धर्मं यथार्थतया दर्शनशीलस्य नरस्य अन्य-
भावानां ज्ञानावरणादिकर्मणां बाह्यस्कन्धादाननिक्षेपाणां कर्तृत्वं न, किंतु ज्ञायकस्वभावत्वात्साक्षित्व-
मेव । तत्र कर्तृत्वमेकाधिपत्ये क्रियाकारित्वं, तच्च जीवे एव, जीवगुणानामेव हि चेतनावीर्योपकरणका-
रकचक्रोपकरणे, यत एकाधिपत्यक्रियाशून्येषु धर्मादिद्रव्येषु न कर्तृत्वं । जीवस्यापि कर्तृत्वं स्वकार्यस्य,
न हि जीवः कोऽपि जगत्कर्ता, किंतु स्वकार्यपारिणामिकगुणपर्यायप्रवृत्तेरेव कर्ता, परभावानां कर्तृत्वे-
ऽसदारोपसिद्ध्यभावादयो दोषा ज्ञाता अत एव नायं परभावकर्ता, किंतु स्वभावमूढोऽशुद्धपरिणतिप्रवृ-
त्तोऽशुद्धनिश्चयेन रागादिविभावस्याशुद्धव्यवहारेण च ज्ञानावरणादिकर्मणां कर्ता जातोऽपि स एव

सहजसुखरुचिरानन्ताविनाशिस्वरूपमय आत्माऽऽत्मीयपरमानन्दभोगी, न परभावानां कर्ता, किंतु ज्ञातैवेति । अथ मग्नत्वगुणाञ्चितः कीदृग् भवतीत्याहुः पूर्वपूज्याः—

परब्रह्मणि मग्नस्य, श्लथा पौद्गलिकी कथा ।
क्वामी चामीकरोन्मादाः, स्फारा दाराऽऽदराः क्व च ॥ १ ॥

परमज्ञानात्मस्वरूपैस्तन्मयस्य पौद्गलिकी पुद्गलसंबन्धिनी कथा तदवदातवर्णनरूपा श्लथा च्युता पतितेत्यर्थः, परत्वेनाग्राह्यत्वेनाभोग्यत्वेन निर्धारात्, यस्य कथाऽपि न कार्या तस्याग्रहः कुतः स्यात् ? अत एवामी काञ्चनोन्मादास्तस्य क्व ? शुद्धात्मगुणसंपत्तश्चामीकरग्रह एव न, पापस्थाननिमित्तत्वात् । च पुनः स्फारा देदीप्यमाना दारा वनिता तस्या आदराः क्व इति कथं भवन्ति ? नैवेति, अहर्निशं पौद्गलिककथामग्नः सर्वत्रोन्मादपर एव, यथा रामचन्द्रेण सुवर्णसारङ्गमभूतपूर्वं वीक्ष्य तद्ग्रहणार्थमनेक उन्मादा विहिताः, तदनु दारार्थं बह्वादरास्तेन प्रपञ्चिताश्च, अतस्तत्कथा व्यथानुकारा येन ज्ञानगोचरीकृता स एव मग्नत्वगुणाञ्चितः स्यात् । अत्रोपयोगी सोमवसुदृष्टान्तश्चासौ—

कौशाम्ब्यां सोमविप्रोऽभूत् प्रत्यहं धर्मशास्त्रश्रवणप्रियः । एकदा पुराणे लोमशर्षिकथामिति शुश्राव, तथाहि—कश्चिद्दीर्घदर्शी तापसो द्वादश वर्षसहस्राणि तपस्तेपे । मासोपवासान्ते पञ्चसु गृहेषु बध्वां भिक्षां याचते, यदा कदाचित्तेषु गृहेषु भिक्षां न लभते तदा मासोपवासः, स च षष्ठगृहे न याति एवं चतुर्मासक्षपणानि यावल्लब्धमाहारं चतुर्भागीकृत्य जलचरस्थलचरखचरेभ्यो दत्त्वा चतुर्थांशमेकविंशति-

कृत्वः पयसा प्रक्षाल्य स्वयं भुङ्क्ते। अथ स मृत इन्द्रोऽभूत्। पृष्टं च तेन देवानां—"पुरा केनायं
स्वर्गः कृतः?"। इत्युक्ते देवा जगुः—"न केनापि कृतोऽयं, स्वयं सिद्धः"। ततः शक्रो दध्यौ—"जीर्णो-
ऽयं, तेन नवीनं स्वर्गं करिष्ये"। देवैरुक्तं—"नवीनः स्वर्गो न केनापि कर्तुं शक्यते"। शक्रोऽवक्—
"पूर्वेन्द्रा अशक्ताः, अहं तु समर्थोऽस्मि"। ततः सुरा जगुः—"स्वामिन्! पूर्वं मर्त्यलोकं विलोकय
पश्चात्स्वेहितं कुर्याः"। तत इन्द्रो नरलोकं द्रष्टुं गतः, कस्मिंश्चिद्वनेऽर्कतरुमूले लोमशनामर्षिस्तपस्तप्य-
मानो दृष्टः, इन्द्रेणेत्युक्तः—"कथं मठं विना तपः सहसे?"। तत ऋषिरवक्—चतुर्दशचतुष्किकासु
गतासु ममैकं रोम पतति, सार्धत्रिकोटी रोम्णां पतिष्यति तदा मे पञ्चत्वं भावि, अद्यापि शिरस्तश्चत्वारः
केशा न च्युताः सन्ति, चतुष्किकैका विंशतिसहस्राधिकत्रिचत्वारिंशल्लक्षवर्षाणां स्यात्, सर्वरोमसु पति-
तेषु मे मृत्युः, अतोऽनित्योऽयं देहः, यदि शाश्वतं वपुः स्यात्तदा मठादिस्थानमोहो विधीयते मया"।
तत इन्द्रो दध्यौ—"अस्य यतेरग्रे ममायुस्तुषारलवमात्रं, अतः स्वर्गकरणे को व्यामोहः"। ततो निवृत्त
इन्द्रः स्वस्थानं गतः। इत्यनित्यवाक्यं श्रुत्वा दध्यौ—"कुलजातो धर्मो न प्रशस्यतरः अतः परीक्षां
विधाय ज्ञानधर्मं श्रयामि"। नानादर्शनान्यवलोकमानः क्वापि मते परिव्राजं धर्मं पप्रच्छ। प्रभुणा धर्म-
त्रिपद्युक्ता—मिट्ठं भुंजेअव्वं १, सुहं सोअव्वं २, लोअप्पिओ अप्पा कायव्वो ३, जीर्णे भोजनं रुच्यनुरूपं,
मृदुशय्यायां सुखं शयनं, मंत्रौषधादिना लोकप्रिय आत्मा भवेत्। इति श्रुत्वा सोमवसुर्दध्यौ—"नासौ
सम्यग्धर्मः, पापप्रवृत्तिमयत्वात्"। पुनरन्यत्र साधुपार्श्वे त्रिपद्यर्थं पृच्छति। साधुरवक्—"एकान्तरेऽकृ-

ताकारितानुमतत्त्वोज्यं परमार्थतो मिष्टं, सुखं द्वयोर्दातृदानग्राहकशुद्ध्या, विधिना स्वल्पनिद्रायां सुखशयनं, महानिरीहत्वे लोकप्रियत्वं" । सोमवसुर्दध्यौ—"मार्गानुसार्यसावर्थः समीचीनः" । इत्थं द्विजस्तत्त्वज्ञानात् हृष्टः पञ्चसमितित्रिगुप्तियुतसाधुसमीपे क्रियमाणां त्रिपदीमपि दृष्ट्वा श्रुत्वा च प्रवव्राज । एकदारण्ये प्रतिमया स्थितः इन्द्रियविषयान्निवार्य आत्मस्वरूपसासनैकत्वरूपसमाधिमयं चित्तं विधायात्मस्वरूपज्ञानमग्नो बभूव । यतः—

ज्ञानमग्नस्य यत्सौख्यं, तद्वक्तुं नैव शक्यते । नोपमेयं प्रियाश्लेषैर्नापि तच्चन्दनद्रवैः ॥ १ ॥

आत्मस्वरूपोपलब्धियुक्तस्य यच्छर्म सुखं तन्न वागगोचरं । तदध्यात्मसुखं प्रियालिङ्गनैश्चन्दनविलेपनैश्च नोपमीयते आरोपजं सौख्यं स्वरूपवस्तुसौख्यतुल्यं न स्यात् । उक्तं च—

लब्भइ सुरसामित्तं, लब्भइ पहुअत्तणं न संदेहो ।
इक्को नवरि न लब्भइ, जिणिंवरदेसिउ धम्मो ॥ १ ॥
धम्मो पवित्तिरूवो, लब्भइ कइयाऽवि निरयदुक्खतया ।
जो निअवत्थुसहावो, सो धम्मो दुल्लहो लोए ॥ २ ॥

अतो वस्तुस्वरूपधर्मस्पर्शनेन शुक्लध्यानमग्नः स द्विजर्षिः कायोत्सर्गं चकार । तस्मिन् समये एकश्चक्रपतिश्चतुरशीतिलक्षहयगजरथयुक्तः पण्णवतिकोटिपदातिकलितश्चानेकवाराङ्गनाङ्गनानाट्यं कारयन्मार्गे गच्छति, तावन्मुनिं दृष्ट्वा स दध्यौ—"अहो ! अस्य स्वात्मधर्ममग्नतागुणो वागगोचरः, मत्सैन्यगतस्प-

शांदिविषयान् पश्यन्नपि न पश्यति । अहं गजस्कन्धादुत्तीर्यालापयामि—"हे मुने ! अहं सार्वभौमोऽस्मि त्वां च वन्दे" पुनः पुनरित्यादि शृण्वन्नपि न शृणोति, स्वभाववस्तुधर्मस्याष्टादशसहस्रशीलाङ्गरथादिचमूवीक्षणैकतानत्वात्, न परावलोकनं तव धर्मः, विभावत्वात् इत्यादिभावितात्मगुणमग्नरूपो मुनिर्यामार्धं यावद्विलोकितोऽपि न ध्यानमग्नतागुणं जहौ । तदनु मुनिगुणान् ध्यात्वा नुत्वा च श्रावकधर्मं ललौ । मुनिरपि क्रमेणापूर्वज्ञानं सिद्धिं च प्रापेति ॥

नाक्षभोगविषयावलोकनां, मग्नतां सकलसाध्यसाध ( धि ) काम् ।
प्राप्य वीक्षति ( ते ) निजात्मजां चमूं, चित्समाधिपथगां तपोधनः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकविंशस्तम्भे द्व्युत्तरत्रिशततमं व्याख्यानम् ॥ ३०२ ॥

---

## त्र्युत्तरत्रिशततमं व्याख्यानम् ॥ ३०३ ॥

अथ स्थिरतागुणमाह—

दर्शनादिगुणावासौ, विभावेष्वपवर्तना । सा स्थिरता दिवारात्रावरक्तद्विष्टतां गता ॥ १ ॥

स्पष्टः । नवरं सा स्थिरता बहुरूपा दर्शिता पूर्वपूज्यैः । तत्र धर्मास्तिकायादीनां त्रयाणां स्थिरताऽक्रि-

यत्वात्, पुद्गलानां स्थिरता स्कन्धादिनिबद्धा, सा तु न साधने हेतुः। तत्र नामस्थापने सुगमे। द्रव्यतः स्थिरता योगचेष्टारोधरूपा, द्रव्ये स्थिरता मम्मणश्रेष्ठिवत् प्राप्तद्रव्यव्ययत्वानिच्छकत्वात्, द्रव्यस्य स्थिरता रोगादिप्रभवा मलकोष्ठबन्धरूपा। यद्वा तद्व्यतिरिक्ता[1] स्वरूपोपयोगशून्यस्य साध्यविकलस्य, प्रणामादिषु कायोत्सर्गादि वा द्रव्यस्थिरता। यतः—

अस्थिरे हृदये चित्रा वाङ्नेत्राकारगोपना। पुंश्चली इव कल्याणकारिणी न प्रकीर्तिता॥ १॥

परभावप्रवर्तने चित्ते सति अनेकधा वाग्लोचनादिगोपना द्रव्यक्रिया पुंश्चली इवासती स्त्रीव हितकारिणी न मता। जैनानां द्रव्यक्रिया भावनाभिलाषिणी एव प्रशस्या, भावहीना तु मार्जारसंयमतुल्या, यतः "सहस्रमध्ये शतं नास्ति" इत्यादि लौकिकग्रन्थतो ज्ञेयं। तत्त्वार्थे केषाञ्चिद्द्रव्यक्रिया परंपरया धर्महेतुतया जाता, सा तु देवादियशोवाञ्छारहितानामेव, न तु लोकसंज्ञारूढानामिति। भावतो द्विधा—अशुद्धा रागद्वेषतन्मयरूपा, शुद्धा च सम्यग्ज्ञानादिस्वरूपतन्मयत्वरूपा। या तु साध्याभिलाषसाध्योद्यमपरिणत्या कारणभूता योगादीनां द्रव्याश्रवत्यागरूपा स्थिरता सा आद्यनयचतुष्टयरूपा, या तु सम्यग्दर्शनादिना स्वरूपनिष्पादनाभ्यासवती सा शब्दनयस्थिरता, या तु धर्मध्यानशुक्लध्यानगतस्वरूपाप्रच्युतिपरिणतिरूपा सा षष्ठनयार्हा, या तु क्षायिकज्ञानादिसुखादिभ्योऽप्रच्युतिरूपा सा

१ ज्ञशरीरभव्यशरीरव्यतिरिक्ता.

एवंजूतस्थिरता । विजावेऽपि सर्वनयरूपा सा तत्त्वविकल्पानामिष्यते, अत्र तु परजावेष्वप्रवर्तनारूपा सैव परमानन्दसन्दोहस्वरूपा । यतः—

स्थैर्यरत्नप्रदीपश्चेद्दीप्तः संकल्पदीपजैः । तद्विकल्पैरलं धूमैरलं धूमैस्तथाऽऽश्रवैः ॥ १ ॥

यस्य नरस्य चेद्यदि स्थिरतारूपरत्नदीपको दीप्तः समुद्योतितः तत्तदा परचिन्तानुगताशुद्धचापल्यरूपः संकल्पः स एव दीपस्तदुद्भवैः पुनः पुनः स्मरणरूपैर्विकल्पैर्धूमैरलं सृतं, यद्यपि निर्विकल्पसमाधिरजेद-रत्नत्रयीकाले तथापि स्वरूपलीनानां सांसारिकसंकल्पविकल्पाजावः । तथाऽऽश्रवैर्धूमैः सृतं परिपूर्णं जातं ऽव्यजावप्राणातिपाताद्याश्रवैः सृतं, यो ह्यात्मसमाधिरतस्तस्याश्रवाः कुतः ? स्वरूपज्रान्तानामेव तत्परिणतिः । यदा त्वस्य स्वरूपाववोधो जातस्तदा स्वपरिणतीन् ( णामान् ) स्वकार्यकरणे एव व्यापारयति, न परकर्तृत्वे, षट्कारकचक्रमपि स्वरूपमूढत्वेन परकर्तृत्वादिव्यापारणेऽशुद्धं कृतं । यदा स्वपरविवेकेन "अहं परः नाहं परकर्ता परजोक्ता ( च ) एवं लब्धविवेकस्तदा स्वकारकचक्रं स्वकार्यकरणे तनोति आत्मा १ आत्मानं २ आत्मना ३ आत्मने ४ आत्मनः ५–६ आत्मनि ७ प्रवर्तयति, अतः स्वरूपस्थिरतायुक्तानामाश्रवा न जवन्ति । अत्र स्थिरतागुणान्वितराजीमतीदृष्टान्तश्चायम्—

श्रीनेमिजिनो दशधनुस्तुङ्गः कौमारे त्रीणि वर्षशतानि गमयामास । अन्यदा बन्धूनामुपरोधेन पद्मावतीगौरीगान्धार्यादिकृष्णाग्रमहिष्यादिजिर्द्वात्रिंशत्सहस्रगोपाङ्गनाजिर्जलक्रीडासमये हावजाववाक्यकटाक्षबाणपुष्पकन्दुकनिक्षेपादिना खेदितो नेमिर्मौनेन स्थितः, स पाणिग्रहममन्यत । ततो मुदितो हरिः

सत्यभामाया लघुस्वसारं राजिमतीमुग्रसेननृपपार्श्वे ययाचे, तेनापि दत्ता । ततो लग्नदिने यादवैः सह रथारूढो भोजनृपाङ्गणं प्राप । तत्रैकवाटके दीनान् जलस्थलखचारिणस्तारं क्रन्दतो दृढरश्मिभिर्बद्धानै-क्षिष्ट. सारथिमिति पप्रच्छ—"अमी वराकाः किं बद्धाः सन्ति ?" । स प्राह—"स्वामिविवाहे यदूनां भोज्यहेतवे" । श्रुत्वेत्याह—

धिगनाराजकं विश्वं, धिगमी निष्कृपा जनाः । यदेवमशरण्यानां, पशूनां कुर्वते वधम् ॥ १ ॥

इत्यादिश्य पशुवाटकतो जीवान् विमोच्य स्यन्दनं वालयामास । अथातिसंभ्रान्ता नेमिपितरस्तं प्राहुः—"वत्स ! हर्षस्थाने नार्हो विरसः" । नेमिः प्राह—"हे पितरौ ! अत्रागमनाद्यारम्भः सर्वेषां कृपाधर्मज्ञापनार्थं पशुगणमोचनार्थं च मया विहितः" । इत्युक्त्वा रुदतः सर्वान् यदूनुपेक्ष्य स्वामी गृहं गतः । यतः—

देवाधीशगिरा स्वर्णढौकितैर्जृम्भकामरैः । वार्षिकं दानमारभ्य, जिनस्ततोऽग्रहीद्व्रतम् ॥ १ ॥

पञ्चाशतं च चतुरश्च दिनानतीत्य, चित्रास्थिते शशिनि रैवतकाद्रिमूर्ध्नि ।
आजन्मशीलकलितं कलयांबभूव, ज्ञानं स केवलमथाश्विनमास्यमायाम् ॥ १ ॥
भोजाङ्गजाऽपि वलिते दयिते तदोद्यन्मूर्छावशेन पतिता भुवि सा सखीभिः ।
सज्जीकृता च विललाप कपोलपालिनिभालुपाणिकमला मुखचन्द्रयोगात् ॥ २ ॥

व्यावर्तनं यदि विचिन्तितमेतदासीत्तद्विप्रतारणमिदं विहितं किमीश ।
नैतत्सतां समुचितं किमिति श्रुतं न, प्रारब्धमुत्तमनरा न परित्यजन्ति ॥ ३ ॥
किं पूर्वजन्मनि मया विहितोऽत्र जायापत्योः कयोश्चिदपि भोगसुखान्तरायः ।
किं चक्रयोर्विघटनं विदधे करस्य, स्पर्शोऽपि नाप्यत मया यदयं त्वदीयः ॥ ४ ॥

अथ सखीगणस्तं प्राह—

किं रोषणं वितनुषे सखि निष्ठुरोऽयं, यातः प्रयातु किमु तेन यतो यदूनाम् ।
ये सन्ति रूपजितपुष्पशराः कुमाराः, किं तेषु कोऽपि भवतीं परिणेष्यते न ॥ ५ ॥
इत्थं सखीर्निगदतीर्निजगाद, सेति किं लप्यते कुलकलङ्ककरं वयस्याः ।
कन्याप्रदानमसकृद्भणितं क्व शास्त्रे, नेमिर्वरोऽस्तु मनसा वचसाऽपि नान्यः ॥ ६ ॥
कालेन साऽथ कियताऽपि हि मन्दशोका, ज्ञानोद्भवं भगवतः परीपालयन्ती ।
दीक्षोत्सुका गमयति स्म दिनानि दुःखं, चक्रप्रियेव रजनीपतिसङ्गमोत्का ॥ ७ ॥

अथ रथनेमिर्लघुभ्राता पाणिग्रहणलिप्सया राजीमतीं प्रति प्राभृतानि प्रसत्तये प्रैषीत् । तदा राजीमती दध्यौ—"स्वभ्रातुः प्रेमतो मयि एष प्राभृतं प्रेषयति, अतो गृह्णामि" । अन्येद्युर्विवाहाकाङ्क्षया प्रार्थयन्तं तं नृपाङ्गजेत्यब्रवीत्—"मदनफलमाघ्राय वान्त्वेदं भुङ्क्ष्व" । स स्माह—"किमहं श्वानोऽस्मि यद्वान्तं भुञ्जे ?" । सा स्माह—"तर्हि भ्रातृत्यक्तां मामुपभोक्तुं कथं वाञ्छसि ? अन्यच्च—

को नाम गजमुज्झित्वा, रासभं बहु मन्यते । को वा रत्नमनादृत्य, काचेऽपि कुरुते मतिः ॥ १ ॥

मम जन्मान्तरेऽपि नेमिर्वरो भूयान्नापरः । अन्यदोत्पन्नपूर्णज्ञानो जगदीशः पुना रैवतके समवासरत् । तदा राजीमती व्रतमादाय महत्तरा जज्ञे । नेमेरनुजोऽपि व्रतमुपादत्ते स्म । अन्यदा जिनानुज्ञां प्राप्य भिक्षार्थं पुरे परिभ्रम्य पश्चान्निवृत्त इति दध्यौ—

मा भूद्विनाशो जलकायिकानां, मद्देहसङ्गेन तदेति वृष्ट्याम् ।
भिक्षानिवृत्तो रथनेमिसाधुर्विवेश कस्यांचन कन्दरायाम् ॥ १ ॥
व्यावर्तमाना प्रणिपत्य नाथं, राजीमती साऽपि भयेन वृष्टेः ।
पूर्वप्रविष्टं तमजानती द्राग्विवेश तामेव गुहां नगस्य ॥ २ ॥
गताऽपि मध्ये न तमन्धकारे, ददर्श कोणे स्थितमेतदीये ।
क्लिन्नानि किञ्चिद्वसनानि साध्वी, ततश्च निःशोषयितुं प्रवृत्ता ॥ ३ ॥
स्वर्गलोकजयायैव, साधयन्तीं तपःक्रियाम् ।
दृष्ट्वा विवसनां तन्वीं, बभूवोत्कलिकाकुलः[1] ॥ ४ ॥
एतस्य सोदरेणाहमाजन्मापि तिरस्कृतः ।
इति भ्रातृविरोधेन, स्मरो मुनिमपीमयत् ॥ ५ ॥

---

१ विषयाकुलः.

पिण्डितं सृष्टिसर्वस्वमिवासौ हा मृगेक्षणा ।
नैकशोऽपि मया भुक्ता, धिग्मे जन्म निरर्थकम् ॥ ६ ॥
ईषत्कम्पवपुर्भूत्य, इवोत्थाय विसंस्थुलः ।
रथनेमिः पुरस्तस्यास्तस्थावुत्तानितेक्षणः ॥ ७ ॥

हे भद्रे ! स्वेच्छयाऽऽगच्छ, आवां जन्म सफलं कुर्वहे । पुनः प्रान्ते उभावपि तपोविधिं चरिष्यावः । श्रुत्वेत्यव्याजचित्ता सा धीरतां धारयित्वा सती स्पष्टमभाषिष्ट । यतः—

प्रावृत्य वासांसि तदैव साध्वी, साधुं सुधासोदरया गिरा तम् ।
प्रचक्रमे वक्तुमियं मुनीन्दो, न युज्यतेऽदस्तव सद्व्रतस्य ॥ १ ॥
साधो क्व ते जन्म कुलेऽमलेऽस्मिन्, क्वेदं कुकर्माञ्जनतोऽपि कालम् ।
निर्वाहयस्व व्रतमेतदात्तं, हतव्रताः स्युर्न कदापि धीराः ॥ २ ॥

अन्यच्च—

संयतीप्रतिसेवायां धर्मोड्डाहर्षिघातयोः । देवद्रव्यविनाशे च, बोधिघातो निवेदितः ॥ ३ ॥

पूर्वं गृहस्थया मया वाचाऽपि यस्त्वं नेहितः, व्रतप्रतिज्ञाता साऽहं त्वामद्य कथमाद्रिये ? अगन्धनकुलजा भुजङ्गमास्तेऽपि वर्याः ये वान्तं विषं नाश्नन्ति, त्वं तु ततोऽपि निकृष्टः, खण्डितशीलस्येदं जीवितं धिक् । यतः—

दर्श्यं दर्श्यं योषितं चेद्विधत्से, त्वात्वं कामाराधने साधुवर्य ।
तन्नो वाताद्धिङ्गितो वाहवस्त्वं, मुग्धो धैर्येणास्थितात्मेव त्वावी ॥ १ ॥
वराटिकाकृते तस्मान्मा स्म कोटिं विनाशय ।
तस्माद्धीरत्वमाधाय, शुद्धधर्मं समाचर ॥ २ ॥

इत्यादितदुक्तिं युक्तियुक्तामाकर्ण्येदं दध्यौ—

स्त्रीजातावपि धन्याऽसौ, निधानं गुणसंपदाम् ।
कुकर्मजलधौ मग्नो, धिगहं पुरुषोऽपि हि ॥ ३ ॥
एवं तस्या राजिमत्याः सुमत्याः, श्रुत्वा शिक्षां दक्षमुख्यस्तदैव ।
दत्त्वा मिथ्यादुष्कृतं श्रीजिनान्ते, भूयो धर्मं साधुचीर्णं चचार ॥ ४ ॥

सा महत्तराऽपि गार्हस्थ्ये चतुर्वर्षशतीं,[1]छाद्मस्थ्य एकं वत्सरं, केवलत्वे च पञ्च वर्षशतानि अगमयत्, एवमेकोत्तराणि नव वर्षशतानि निजमायुर्व्यतीत्य मोक्षपदं जगामेति ॥

पञ्चापि पञ्चेषुनिवारणाय, शस्त्राणि धार्याणि महाव्रतानि ।
स्थैर्यत्वमेतेषु विशेषधार्यं, विनाऽमुनाऽन्यान्यपि निष्फलानि ॥ १ ॥

---

१ वृद्धसदृशाः.

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकविंशस्तम्भे त्र्युत्तरत्रिशततमं ३०३ व्याख्यानम् ॥

---

## चतुरुत्तरत्रिशततमं व्याख्यानम् ३०४ ॥

अथ मुनीनां स्थैर्यमाह—

नेच्छन्ति मुनयः केचिच्चिकित्सां व्याधिपीडिताः । निष्प्रकम्पा यतेर्धर्मे, श्रीमत्सनत्कुमारवत् ॥ १ ॥

स्पष्टः । ज्ञातं चेदम्—काञ्चनपुरे विक्रमयशा नृपः । तस्य पञ्चशतीमिताः स्त्रियः सन्ति । तत्र नागदत्त इभ्यः । तस्य विष्णुश्रीर्भार्याऽस्ति । अन्यदा नृपः पथि गच्छन् विष्णुश्रीरूपमोहितस्तामन्तःपुरे चिक्षेप । यतो धर्मोपदेशमालायां वृत्तौ—

सन्ति मार्गणाघातानां, सोढारः प्रचुरा युधि । विरलास्तु स्मरशस्त्रप्रहाराणामिहावनौ ॥ १ ॥

नागदत्तस्तु प्रियाविरहविह्वलः पुरान्तः परिबभ्राम । अपरा नृपपत्न्यो भर्तुरात्मच्छेदात्कुपिताः कार्मणयोगेनेमां मृत्युमवापयन् । नृपो मोहमोहितः कुपितां बुध्यमानो मृतामजानानस्तत्पदे लग्न इत्यभ्यधात्—"निरपराधे मयि कथं कोपः त्वया कृतः" तथाप्यजल्पन्तीं तामुत्सङ्गगतां कृत्वा तस्थौ, तस्याः संस्कारं कर्तुं न ददाति, तदा मन्त्रिभिर्मन्त्रदम्भतो नृपः कार्यव्यग्रीकृतः । ततो राजदृष्टिं परिवञ्च्य सा

विपिने नीता। अचिरान्मन्त्रयित्वाऽऽगतस्तामवीक्ष्य मूर्च्छितः, चन्दनाम्भोभिः सिक्तः। मूर्च्छान्ते प्राह—"प्रिया मे क्वास्ति? यत्रास्ति ततोऽप्यानीय दर्श्यतां"। "स्वामिन्! सा वाटिकायां गताऽस्ति त्वद्विरहार्दिता क्रोधं विहाय त्वद्गुणान् संस्मृत्य पुनरेष्यति, मा चिन्तां कुरु"। अन्नाद्यभिग्रहं कृत्वा नृपः स्थितः। इत्थं शोकाक्रन्दपरो दिनद्वयेऽतीते धीसखैः स तच्छवसन्निधौ निन्ये। तत्र विवृतास्यतया दन्तसन्ततिभैरवमदृश्यं खगैस्तुण्डैर्मूलादुत्खातलोचनं कृमिसंकुलमकर्णनासिकं शृगालश्वानकाकोलूकादिभिश्चर्वितं प्रवहत्पूयधाराभिः पिच्छलोपान्तभूतलं तच्छवं वीक्ष्य भूपः परमवैराग्यं प्राप—ममापि जीवोऽयं वपुस्त्यक्त्वा यावन्न याति तावदहमपि शरीरेणात्महितं कुर्वे। ध्यात्वेति स व्रतं जग्राह। तपस्तप्त्वा तृतीये कल्पे देवोऽभूत्। ततश्च्युत्वा रत्नपुरे जिनधर्माभिधो वणिगासीत्। नागदत्तो भवं भ्रान्त्वाऽग्निशर्मविप्रतापसः सिंहपुरेऽजनि। स भ्राम्यन् द्विमासक्षपणव्रती रत्नपुरमाययौ। राज्ञा पारणार्थं निमन्त्रितः। तत्र स जिनधर्मं श्राद्धं वीक्ष्य नृपमिति प्राह—"यद्यस्य वणिजः पृष्ठे भोजनपात्रं न्यस्य हे भूप! मां त्वं भोजयसि तद्भुञ्जे"। राज्ञा तत्कारितं। श्रेष्ठिनः पृष्ठत्वगुत्पतिता। श्रेष्ठिना पूर्वकर्मफलं विचारितं। ततः सप्तक्षेत्र्यां धनं वितीर्य व्रतमादायानशनेनैकं मासं स्थित्वा सौधर्मेन्द्रो जातः। स तापस ऐरावणोऽभूत्। ततश्च्युत्वा भवं भ्रान्त्वाऽमिताख्यगुह्यकोऽजनि। इन्द्रस्त्वायुषि पूर्णे चतुर्दशमहास्वप्नसूचितः सहदेवीतनुजोऽश्वसेनभूपपुत्रस्तुर्यचक्री सनत्कुमारो हस्तिनागपुरे बभूव। तच्चक्रिणो मित्रं महेन्द्रसिंहोऽभूत्। अन्यदा यौवनारम्भे तेन मित्रेण सह वसन्ते मकरन्दाख्यवनं नन्दनसोदरं

सनत्कुमारोऽगात्। अत्रान्तरे केनापि अश्वपतिना कुमाराय वराश्व उपढौकितः, तमारुह्य वाहयितुमारेभे। तदा सोऽश्वः क्षणात्सर्वेषां दृष्टिगोचरोऽभूत्। ततोऽश्वसेननृपेण गवेषितोऽपि साश्वः पुत्रः कुत्रापि न लब्धः। तदा चक्रिमित्रं नृपमापृच्छ्य मित्रदर्शनाय महेन्द्रसिंहश्चचाल। एकं वर्षं महाऽरण्ये बभ्राम। एकदा सारसध्वनिं श्रुत्वा यावदग्रे याति तावत्सरोवरमेकं दृष्टं, तत्र कदलीगृहे स्त्रीवृन्दैरनुगम्यमानं बन्दिमुखादेवं स्तुतिश्लोकमशृणोत्—

कुरुदेशैकमाणिक्य, अश्वसेननृपाङ्गज। श्रीमन् सनत्कुमार त्वं, जय त्रैलोक्यविश्रुत ॥ १ ॥

इति पाठश्रवणेन हृष्टो यावदग्रे व्रजति तावद् दृष्टश्चक्री। परस्परं मिलितौ। मित्रं पप्रच्छ—"हे कुमार! एतावन्तो वासरास्त्वया क्व गमिताः?" कुमारेणोक्तं—"मम निद्राऽऽयाति, अन्यत्स्वरूपं बकुलमती मम प्रिया प्रज्ञप्तिविद्यया कथयिष्यति"। एवं निगद्य स सुप्तः। बकुलमती प्राह—शृणु महेन्द्रसिंह!

तदाऽश्वेनापहृतः स महारण्ये पतितः, तृतीये दिने क्षुधातृषाक्रान्तो जिह्वां कृष्ट्वा तुरङ्गो मृतः। कुमारोऽपि जलाप्राप्त्या भ्रान्ताक्षोऽचेतनो भूमौ पतितः। तदैकयक्षसिक्तजललब्धचैतन्ये तेनोक्तं—"एवंविधं जलं क्वास्ति?"। यक्षोऽवक्—"मानससरसि"। कुमारः स्माह—"यदि तत्र स्नानं करोमि तदा देहातपो याति"। यक्षेण तत्र सरसि नीतः। तत्र स्नात्वा जलं पीत्वा सरःपाल्यामुपविष्टः तावत्पूर्वचतुर्भववैरिणाऽसितयक्षेण दृष्टः। कुमारयक्षयोर्युद्धं बभूव। चिरं युद्धात्क्रुद्धस्तत्र सुहृत्कुमारेण मुष्टिना तं जघान,

॥१००॥

देवत्वाच्च मृतः, परं नष्टः, ततोऽग्रे व्रजति तावदष्टौ स्वसुता भानुवेगविद्याभृता तस्मै विवाहिताः, ताभिः सह सुप्तः, तेन वैरिणाऽन्यत्र क्षिप्तः, प्रभाते जजागार, पुरोऽचलत्, एकं तुङ्गं सौधं वीक्ष्य प्रविष्टः, तत्रैकां सुलोचनां वीक्ष्य पृष्टं—'का त्वं ?' साऽऽह—"साकेतपुरेशपुत्र्यस्म्यहं, मत्पित्रा दैवज्ञवाक्यतो ध्यातं—इयं पुत्री तुर्यचक्रिसनत्कुमाराही । तदैकेन विद्याभृता हृता, अत्रानीता, न जानेऽतः परं किं स विधास्यति ?" । इति श्रुत्वा स प्राह—'मा भैषीः, सोऽहमस्मि' । इतश्चागतं तत्कन्याचौरं वज्रवेगं खेचरं हत्वा तामुपायंस्त । ततो वज्रवेगस्वसा सन्ध्यावली भ्रातृहन्ता पतिर्भावीति ज्ञानिनोदितं स्मृत्वाऽमुं वव्रे । ततो वज्रवेगपिता सन्ध्यावलीदत्तपाठसिद्धविद्यातो जितः, युद्धे चक्ररत्नमुत्पन्नं, ततो विद्याधरै-र्वैताढ्ये नीतः, कन्याशतं परिणीतं । ततोऽत्र क्रीडार्थं तव सखाऽऽयातः, त्वं च मिलितः । यावत्त्वेवं जल्पति तावच्चक्रिणो निद्रान्तो जातः । वैताढ्ये गत्वा मित्रप्रार्थितः स्वपुरमाययौ । ततोऽश्वसेनः सुतं राज्ये न्यस्य श्रीधर्मनाथमुनीन्द्राणामन्तिके व्रतमाददे ।

अथाश्वसेनभूर्दशभिर्वर्षसहस्रैर्भरतं साधयित्वा सार्वभौमोऽभूत् । अथान्यदा सौधर्माधिपः शक्रो दिव्यनाटकं पश्यति । तावदीशानकल्पात्कोऽपि महाद्युतिर्देव आगच्छत् । स देवः परदेवानां तेजांसि निजतेजसा धिष्ण्यानां भानुमानिव स्थगयामास । अथ तस्मिन्सुर ईशानं गते सुरैरमरपतिरिति पृष्टः—"नाथ ! अयं देवोऽधिककान्तिमान् कथं ?" । इन्द्रोऽवदत्—"प्राग्भवेऽनेन सुदुस्तपमाचाम्लवर्ध-

मानं तपस्तप्तं, तस्यायं महामहिमा"। पुनः सुरैः पृष्टः—"देव ! देवो वा मानवो वेदृक् कोऽप्यस्त्य-
न्योऽपि ?"। इन्द्र इति प्रोचिवान्—

सनत्कुमाररूपेन्दोस्तेजो रूपं च यादृशम्। अस्ति तस्य प्रतिच्छन्दो न नरेषु सुरेषु वा ॥ १ ॥

तद्वाक्यमश्रद्दधानौ द्वौ देवौ विप्ररूपं विधाय चक्रिमन्दिरे आगतौ। निरुपमं रूपं वीक्ष्य विस्मितौ
इति अजल्पतां, यतः—

अहो रूपमहो कान्तिरहो लवणिमाऽद्भुतः। त्वदङ्गवर्णने नूनं मूकाः कविवरा अपि ॥ १ ॥
एकमेव प्रतीकं ते पश्यतां पूर्वतो (र्यते) जवम् (वः)। कतिजित्तज्ञवैर्भूप प्रेक्ष्यते निखिलं वपुः ॥ २ ॥

तदा चक्रिणोचे—"अधुना खेलतैलाभ्यङ्गेन पिच्छलेऽङ्गे किं लावण्यं पश्यथः ? सज्जावसर आग-
न्तव्यं"। तौ विसृज्य स्नात्वा सर्वालङ्कारानङ्गे निधाय छत्राद्यलङ्कृतः सदसि सिंहासने स्थितः। ततस्तौ
विप्रावाकार्य स्वरूपमदीदृशत्। स्फारशृङ्गाराञ्चितं तं वीक्ष्य तौ द्विजौ जवात् प्रदोषे पद्मवन्म्लानान-
नत्वं जेजतुः। तौ दध्यतुः—"अहो ! नृणां कीदृग्विनश्वरं रूपं ?"। अथ तौ चक्रिणा पृष्टौ—'किं
वां वैवर्ण्यकारणं ?'। तावूचतुः तववृत्तं त्वदङ्गे रुगागमं च। "युवाभ्यां कथं ज्ञातं ?"। "हे नरेन्द्र !
ज्ञानेन, परं त्वमपि तम्बोलनिष्ठ्यूतेऽवलोकय, मूलवर्णं त्यक्त्वा पूयसदृशं निष्ठ्यूतं जातं कास-

१ अवयवम्.

श्वासाजीर्णार्शज्वरादयः षोडश रोगाः समुत्पन्नाः सन्ति" । ततः स्वशरीरं विवर्णतेजोऽवलोक्य चक्री दध्यौ, यतो योगशास्त्रे स्वोपज्ञवृत्तौ तुर्यचक्रिभावनायां—

अचिन्तयच्च धिगिमं सदा गदपदं वपुः । मुधैव मुग्धाः कुर्वन्ति तन्मूर्छां तुच्छबुद्धयः ॥ १ ॥
शरीरमन्तरुत्पन्नैर्व्याधिभिर्विविधैरिदम् । दीर्यते दारुणैर्दारु दारुकीटगणैरिव ॥ २ ॥
अद्यश्वीनविनाशस्य शरीरस्य शरीरिणाम् । सकामनिर्जरासारं तप एव महत्फलम् ॥ ३ ॥

इति विचार्य विनयन्धरगुरुपार्श्वे दीक्षामङ्गीकृत्य गीतार्थः सन्नेकाकिविहारप्रतिमया विजहार । तन्मुनीन्द्रपृष्ठे षण्मासीं यावद्विविधालापं कुर्वन्त्यः प्रेयस्यः प्रकृतयश्चान्येयुरनुरागतः परं मुनीन्द्रो दृशाऽपि न संभावयामास । कृतषष्ठाष्टमादितपा गोचर्यां भ्रमन् चीनककूरमजातक्रं च लब्धवान्, तेनाहारेण सप्त व्याधयः संजाताः—

शुष्ककच्छूज्वरश्वासकासाश्चान्नारुचिस्तथा । अक्षिदुःखं तुन्ददुःखं सप्तैतेऽत्यन्तदारुणाः ॥ १ ॥

सप्त वर्षशतानि सप्तरोगदुःखं सेहे । कदाप्युपयोगो न दत्तः यन्मद्देहे व्याधयः सन्ति । संयमक्रियाव्यतिरिक्तः कोऽपि कालो नास्ति यत्र देहव्याधिस्मरणं स्यात् । तं वीक्ष्यावधिनेन्द्रः सदसि स्थितः प्राह— "अहो ! सनत्कुमारमुनेर्निष्प्रतिकर्मता" । इति श्रुत्वा तावेव देवौ वैद्यीभूय भुवमागतौ । तान्यामूचे— "हे व्रतिन् ! यद्यनुज्ञां ददासि तदा वैद्यावावां भवन्तं प्रासुकभेषजैर्निजैश्चिकित्साव:" । मुनिः प्राह—

"द्विधा रोगा भवन्त्यावभिन्नेदतः, बाह्यप्रतीकारं त्वहं जानामि"। इत्युक्त्वा निजामङ्गुलिं श्लेष्मणा विलिप्य हेमरूपां दर्शितवान्।

भूयोऽप्यधान्मुनिः कर्माण्यष्टौ भावरुजः स्मृताः। अष्टपञ्चाशदधिकं, शतं तत्प्रकृतीर्विदुः ॥ १ ॥
एषामहं प्रतीकारं, क्रियाभिर्विदधे स्वयम्। दुष्करः स च विज्ञानविकलैः क्लीबजन्तुभिः ॥ २ ॥
चित्तं पुनः क्रियायत्तं, न मुञ्चामि कदाचन। इत्यहं भावरोगेभ्यो, बिभ्यत्तिष्ठामि सर्वदा ॥ ३ ॥

युवां यदि वैद्यौ स्तस्तर्हि भावरोगप्रतिकारं कुरुतं। इति निशम्य तौ देवौ निजागमनकारणं निवेद्य स्तुत्वा गतौ तथैव शक्रस्य पुरतः प्रोचतुः। इति ॥

कृत्वेत्ययं मुनिवरस्तरवारिधारातीव्रं व्रतं विरचितानशनोऽन्तकाले।
व्युत्सृज्य देहमनुपाधिसमाधिनाऽभूत्, कल्पे महर्द्धिकलितस्त्रिदशस्तृतीये ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेक-
विंशतितमे स्तम्भे चतुरधिकत्रिशततमं ३०४ व्याख्यानम् ॥

## पञ्चोत्तरत्रिशततमं व्याख्यानम् ३०५ ॥

अथ मोहत्यागाधिकारमाह—

स्वरूपानवबोधेन, मोहमूढा ममत्वगाः। भ्रमन्ति भवकान्तारे, हेयो मोहस्ततोऽशुभः ॥ १ ॥

स्पष्टः । श्लोकोक्तार्थसमर्थनार्थं भावना चेयं—ज्ञानादिगुणसुखरोधकेषु चलेषु अनन्तवारमनन्तजीवैर्भुक्तमुक्तेषु जडेषु अग्राह्येषु पुद्गलेषु ग्रहणरूपो विकल्पो मोहः, तत्र रता भ्रमन्ति, ततस्तत्त्यागो हितः । उक्तं च—

अप्पा नाणसहावी दंसणसीलो विसुद्धसुहरूवो । सो संसारे भमइ एसो दोसो खु मोहस्स ॥ १ ॥

मोहत्यागस्तु शुद्धात्मज्ञानेन भवेत् ज्ञानाद्यनन्तगुणपर्यायमयो नित्यानित्याद्यनन्तस्वभावमयोऽसङ्ख्यप्रदेशी स्वभावपरिणामी स्वभावकर्तृत्वभोक्तृत्वादिगुणोपेतः शुद्धात्मद्रव्यरूप एवाहमनन्तस्याद्वादस्वसत्तारसिक एकसमये त्रिकालत्रिलोकगतसर्वद्रव्यपर्यायोत्पादव्ययध्रौव्यावबोधकं ज्ञानं मम गुण इत्याद्यनन्तस्वस्वरूपज्ञायको मोहं जयति, नान्यः, मोहनीयकर्मणो महादुर्जयत्वात् । अत्रार्थेऽर्हद्दत्तज्ञातमिदम्—

अचलपुरेशसुतो युवराड्वैराग्येण प्रव्रज्यां प्रतिपद्य विहरन्नवन्त्यां समागात् । मध्याह्ने भिक्षार्थं भूपमन्दिरे गच्छन् जनैरिति प्रोक्तः—"राजपुरोधसोः सुतौ साधुं दृष्ट्वा पीडयतः, अतो नोऽत्र स्थातव्यं" । इति श्रुत्वाऽपि निर्भीकस्तत्र गत्वा गाढस्वरं धर्मलाभं स्माह । तदाकर्ण्य एकवेश्मस्थितौ तौ पापग्रहौ तदभ्यर्णमुपेयतुः, अभ्यधत्तां च—"हे साधो ! त्वमस्मत्पुरो नृत्यं विधेहि, आवां तूर्यं वादयावः" । ततः साधुर्नृत्यं वितताम । तौ तूर्यताडनं प्रारेभाते । ततः साधुः प्रोचे—रे कौलिकौ ! सम्यग्वादित्रवादनं युवां न जानीथो जडत्वात्" । तदाकर्ण्य रुष्टौ तौ मुनिं हन्तुमधावतां । नियुद्धवेदी साधुस्तु तदङ्गानि सन्धिभ्य उदतारयत् । ऋषिद्विषोस्तयोरेवं शिक्षां दत्त्वा मुनिर्गतः । सद्यो राजपुरोहितौ पुत्रयोर्दु-

रवस्थां तां वीक्ष्यातिखिन्नौ युवराजर्षिसमीपे समेयतुः । तं मुनिमुपलक्ष्य नृपो व्यजिज्ञपत्—"हे भ्रातः !
स्वभ्रातृव्यं पटूकुरु, क्षमस्व शिशोरपराधं" ।
स्वभ्रातृव्यं पट्टूकुरु, क्षमस्व शिशोरपराधं" । तदा तौ सज्जयामि द्राक् कुमारौ नान्यथा पुनः ॥ १ ॥

मुनिः प्रोवाच यद्येतावाददाते व्रतं हितम् । तदा तौ सज्जयामि द्राक् कुमारौ नान्यथा पुनः ॥ १ ॥

ततः प्राक् तयोर्लुञ्चनं कृत्वा पश्चात्तौ सज्जयामास । तदनु नृपात्मजो निःशङ्को द्वाभ्यां तत्प्रतिपन्नं । ततः प्राक् तयोर्लुञ्चनं कृत्वा पश्चात्तौ सज्जयामास । तदनु नृपात्मजो निःशङ्को व्रतमपालयत् । अन्यस्तु द्विजत्वाद्दीक्षां पालयन्नपि 'मुनिनाऽहं बलाद्दीक्षितः' ( इति सातिचारं पालयति ) । क्रमात् द्वावपि देवौ जातौ

इतश्च कौशाम्ब्यां तापसाख्यश्रेष्ठी स्वगृहोत्करे शूकरो जज्ञे । स स्वसौधादिकं दृष्ट्वा जातिस्मृतिधरो ऽजनि । अन्यदा तस्यैव श्राद्धदिने स तत्सुतैर्निजघ्ने, स्वगृह एव स सर्पोऽजनि, सुतैरेव गृहान्तर्भ्रमन् सोऽहिर्हतः स्वसूनोस्तनयोऽभवत्, प्राग्भवजातिस्मृतिं प्राप्तः स्नुषामम्बां सुतं च तातं कथं वच्मीति चिन्तयन्मूकत्वं स्वीचकार, तेनाशोकदत्तस्थाने मूक इति नाम सर्वत्र प्रसृतम् । अन्यदा चतुर्ज्ञानधराः सूरयो मूकगृहे इमां गाथां शिक्षयित्वा द्वौ श्रमणौ मुमुचुः—

तावस किमिणा मूअ-वएण पडिवज्ज जाणिउं धम्मं ।
मरिऊणं सुअरोरग, जाओ पुत्तस्स पुत्तोसि ॥ १ ॥

इमां गाथां श्रुत्वा मूको विस्मितस्तौ नत्वा पृष्टवान्—"एतद्युवां कथं वित्थः ?" तावूचतुः—"उद्यानस्थितास्मद्गुरुवाक्यतः" । तदनु गुरुपार्श्वे देशनां श्रुत्वा त्यक्तमूकत्वः श्राद्धो जातः ।

इतश्च जातिमदकृत् पुरोहितसुतोऽमरो महाविदेहे जिनेन्द्रमित्यपृच्छत्—"अहं सुप्रापबोधिरस्मि किं ? अथवा तदितरोऽस्मि ?" । स्वामी स्माह—"त्वं दुर्लभबोधिरसि, इतश्च्युतः कौशाम्ब्यां मूकभ्राता भावी तव मूकाम्बगर्भप्राप्तिर्भाविनी" । इति श्रुत्वा तत्रागत्य मूकं प्राह—"अहं स्वर्गाच्च्युतस्त्वन्मातुर्गर्भे उत्पत्स्ये, अकालेऽपि तदा तस्या माकन्ददोहदो भावी, तद्धेतोः समीपगिरौ मया सदाफलाम्रो रोपितोऽस्ति, सा भृशमाम्राणि यदा याचते तदा तस्याः पुर एतान्यक्षराणि लेखयेः—गर्भस्थमङ्गजमिमं मातर्मम ददासि चेत्तदाऽहं दोहदं पूरयामि इति एतत्स्वीकृते तस्यै फलानि दद्याः, मां च जातं स्वाधीनं कृत्वा जैनं धर्मं विबोधयेः, वैताढ्ये पुष्करिणीगोपितकुण्डलद्वयं मन्नामाङ्कितं त्वया दर्शनीयम्, न पुनर्देवभूयं गतोऽपि त्वं मामुपेक्षेथाः" । इति तद्वाक्ये मूकेनाङ्गीकृते सुरः स्वर्गतः । क्रमाच्च्युत्वा मूकाम्बाकुक्षौ समागतः, तस्याश्चाकाले आम्रफलदोहदे जाते स्मृतदेवगीर्मूकः स्माह—"यदि ममामुं गर्भं दत्से तदाऽऽम्राणि ददामि" । तया तद्वचसि प्रतिपन्ने देवोक्तपर्वतात्तान्यानीय तमपूरयत् । समये सा सुतं सुषुवे । तस्यार्हद्दत्त इत्याह्वां पितरौ मुदा चक्रतुः । ततो मूकस्तं बालं सोदरं स्वयं लालयन् चैत्योपाश्रयेष्वनयत् । स तु मुनीन् वीक्ष्योच्चैररोदीत्, न च तानवन्दत । मूकेन बहुधा नोदितोऽपि साधूनां गन्धमप्यसौ न सेहे । ततः श्रान्तो मूकः साधुसन्निधौ प्रव्रज्य स्वर्गं गतः, अवधिं प्रायुङ्क्त च । स्वानुजं परिणीतचतुःस्त्रियं तमपश्यत्, तत्पूर्वभववाक्यमात्मना स्वीकृतं चास्मार्षीत् । ततः सोऽमरस्तत्प्रतिबोधाय तस्य जलोदरं चक्रे । अर्हद्दत्तस्तद्भाराद्उत्थातुमपि न शशाक । सर्वेऽपि वैद्याश्चिकित्सितुमक्षमास्तं

जडुः । तदा स देवो वैद्याडम्बरं कुर्वन् तत्रागात् । सोऽपि तं वीक्ष्य दीनः स्माह—"हे वैद्य ! मां नीरुजं कुरु" । वैद्यः स्माह—"तवायं गदोऽसाध्योऽस्ति, तथापि विविधौषधैरहं नूनं शमयामि, नवरं भेषजशस्त्रादेरमुं कोत्थलकं मामकं समुत्पाट्य यावज्जीवं त्वयाऽन्वहमहं सेव्यः" । तेन तदुक्तं स्वीकृतम् । ततो मायाभिषजा भेषजैः स नीरोगतां नीतः । तदा सत्त्वमुरीकृत्य स तेन साकं चचाल । देवो निज-कोत्थलकं वैद्यार्हंशस्त्रभृतं तस्योत्पाटनार्थं ददौ, मायया महाभारं च तन्निर्ममे । अर्हद्दत्तोऽपि तं भूरि-भारमन्वहमुद्वहन्निति दध्यौ—"कथमयं मया शश्वदुह्यते" ? इति चिन्तयन्नन्यदा क्वापि साधून् संय-मयोगयुक्तान् ददर्श । तदा तमुद्विग्नमेव सुरो जगौ—"यदि त्वं प्रव्रज्यां गृह्णासि तदा मया मुच्यसे" । इति सुरोक्तं निशम्य भारार्दितः स जगौ—"अहं वज्रसारमहर्निशममुं भारं वाहंवाहं कुब्जीभूतोऽस्मि, तन्मे व्रतं साम्प्रतम्" । ततः सुरो मुनिसन्निधौ तस्मै व्रतं प्रदाप्य स्वयं स्वर्गतः । देवे गते व्रतं हित्वा-ऽर्हद्दत्तो निजं गृहं जगाम । सुरोऽप्यवधिना तं प्रव्रज्यापरिच्युतमज्ञासीत् । ततः पुनर्जलोदरव्याधिबा-धितं तं व्यधात् । भूयस्तथैव परिपाट्या स दीक्षयामास । इत्थं चतुर्थवेलायां पुनस्तं प्रव्राज्य सुरस्तत्स्थि-रीकरणाय नित्यं तत्पार्श्वं एवास्थात् । अन्यदा तृणभारधरः सुरस्तेन समं प्रज्वलद्ग्रामे प्रवेशं प्रचक्रमे, तदा देवमर्हद्दत्त एवमब्रवीत्—"तृणभारं दधन् प्रदीपनमध्ये कथं यासि ?" । देवोऽवक्—"यद्येतद्वेत्सि तर्हि कोपादिपावकैर्जाज्वल्यमानं गृहवासं कुतो भवान् विशति ?" । तन्निशम्याप्यबुद्धं तं सहादाय पुरो व्रजन् सुरो मार्गं मुक्त्वा भीमारण्यं प्रत्यचालीत्, तदा स स्माह—"किं सुपन्थानं हित्वोन्मार्गं

प्रविशसि?"। स्वर्गी जगौ—"यद्येतज्जानासि त्वं तदा कुतो मुक्तिमार्गं विहाय भवाटवीं विविक्षसि?"। तथाप्यबुद्धेन तेन सह "अनिर्वेदः श्रियां मूलम्" इति ध्यायन् पुरो ययौ। क्वचिच्चैत्ये पूजितं सन्तं व्यन्तरमधोमुखं निपतन्तं दिव्यशक्त्याऽदर्शयत्। तदा स जगौ—"यथा यथा लोकैरसौ व्यन्तरो पूज्यते तथा तथाऽधोमुखः पतति, ततोऽस्मादधन्योऽन्यः कोऽपि भूतले न दृष्टः। देवः पुनस्तमेवमवदत्—"यदुच्चैः संयमस्थाने स्थापितोऽपि पुनः पुनर्द्रुतमधः पतसि, तस्मात्त्वमपि रे दुर्बोधशेखर! अधन्योऽसि"। तदाऽर्हद्दत्तः पृष्टवान्—भूयो भूय एवं वदन् त्वं कोऽसि? मे वद"। ततः सुरो मूकरूपं दर्शयित्वा तमुवाच सर्वं प्राग्भवस्वरूपम्। तत् श्रुत्वा स पप्रच्छ—"प्राग्भवेऽहं देवोऽभूवं तत्र कः प्रत्ययः?"। ततः सुरस्तमादाय वैताढ्यपर्वतं ययौ।

कुण्डलद्वितयं तेन, प्रोक्तपूर्वं स निर्जरः। तन्नामाङ्कं समाकृष्य, पुष्करिण्या अदर्शयत् ॥ १ ॥

तद्वीक्ष्य स जातिस्मरणं प्राप, ततो लब्धबोधिर्भावसंयमं प्रत्यपद्यत। इत्थं तं धर्मे स्थापयित्वा त्रिदशः स्वस्थानं ययाविति ॥

सर्वकर्मसु जिनैः प्रदर्शितो, मोह एव खलु दुर्जयो मतः।
त्याजितस्तदमरेण तस्य स, सोऽर्हद्दत्त इति शाश्वतं ललौ ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकविंशस्तम्भे पञ्चोत्तरशतत्रयतमं व्याख्यानम् ३०५ ॥

## ॥ अथ षडुत्तरत्रिशततमं व्याख्यानम् ३०६ ॥

अथ ज्ञानाज्ञानविषयमाह—

मज्जत्यज्ञः किलाज्ञाने, विष्ठायामिव शूकरः । ज्ञानी निमज्जति ज्ञाने, मराल इव मानसे ॥ १ ॥

अज्ञः स्वभावविभावाविवेचकः अज्ञानेऽयथार्थोपयोगे मग्नीभवति विष्टायां शूकर इव । ज्ञानी यथार्थोपयोगी ज्ञाने तत्त्वावबोधे आत्मस्वरूपे निमज्जति यथा मरालो मानसे तथेति ॥

अत्रार्थे सालमहासालसम्बन्धः । स चासौ—

पृष्ठचम्पाधिपपुत्रौ सालमहासालौ युवराजौ बभूवतुः । अन्यदा तत्र श्रीवीरः समवासार्षीत् । महर्ष्या तौ सार्वं वन्दितुं जग्मतुः । तत्र श्रीसार्वं नत्वा धर्मं श्रुत्वा विरक्तात्मानौ गृहं गतौ स्वजामेयं गाङ्गिलं राज्ये न्यस्य जिनान्तिके प्राव्राजिष्टाम् । स्थविरपार्श्वेऽन्यूनमेकादशाङ्गीसूत्रं पेठतुः । अन्यदा जिनाज्ञां लात्वा श्रीमदाद्यगणभृता सह स्वजनप्रतिबोधार्थं पृष्ठचम्पायामाययतुः । श्रुत्वा गाङ्गिलभूपोऽपि वन्दितुमगात् । तत्र श्रीचतुर्ज्ञानी गणभृद्धर्मदेशनां प्रारेभे—

निर्वाणपदमप्येकं, भाव्यते यन्मुहुर्मुहुः । तदेव ज्ञानमुत्कृष्टं, निर्बन्धो नास्ति भूयसा ॥ १ ॥

निर्वाणपदं निष्कर्मताहेतुपदमेकमपि स्याद्वादसापेक्षं मुहुर्मुहुः आत्मतन्मयतया क्रियते स्वरूपैकत्वं तदे-

वोत्कृष्टं ज्ञानम्, येनात्माऽनादितोऽनासादितात्मसुखमनुभवति, शेषेण वाग्विस्तारेण भूयसाऽपि संवेदनज्ञानेन न निर्बन्धः निश्चयः स्वल्पमप्यमृतकल्पमनादिकर्मरोगापगममिति ॥

वादांश्च प्रतिवादांश्च, वदन्तोऽनिश्चितांस्तथा । तत्त्वान्तं नैव गच्छन्ति, तिलपीलकवद्गतौ ॥ २ ॥

वादान् पूर्वपक्षरूपान् प्रतिवादान् उत्तरपक्षरूपान् परपराजयस्वजयेच्छया वदन्तो विवादं कुर्वन्तः तत्त्वान्तं तत्त्वस्य वस्तुधर्मरूपस्यान्तं पारं नैव गच्छन्ति, (तथा) अनिर्धारितपदार्थस्वरूपान् वदन्तः तत्तत्त्वं स्वीयात्यन्तिकाकृत्रिमात्मज्ञानानुभवरूपं नैव लभन्ते । किंवत्? गतौ गमने तिलपीलकवृषभवत् किञ्चित्स्थानान्तरं न लभन्ते, एवं तत्त्वज्ञानानभिलाषी अनेकशास्त्रश्रमं कुर्वन् न तत्त्वानुभवं स्पृशति ॥

अत एव सप्त नयाः स्वेच्छया ज्ञानस्वरूपं वदन्ति—नामज्ञानं शब्दालापरूपं, स्थापनाज्ञानं सिद्धचक्रादौ स्थापितं, द्रव्यज्ञानमनुपयोगेन भणनं, तत्त्वार्थे द्रव्यज्ञानं पुस्तकन्यस्तम्, अथवाऽनुप्रेक्षाहीनः[1] स्वाध्यायः, भावज्ञानमुपयोगपरिणतिः । तत्र नैगमेन ज्ञानभाषादिस्कन्धो ज्ञानम् १ । सङ्ग्रहेण सर्वजीवा ज्ञानम्, अभेदोपचारात् २ । व्यवहारेण पुस्तकादिज्ञानम् ३ । ऋजुसूत्रेण तत्परिणामसङ्कल्परूपं ज्ञानम् ४ । अथवा ज्ञानहेतुवीर्यं नैगमेन, सङ्ग्रहेण आत्मा, व्यवहारेण क्षयोपशमीभूतज्ञानव्यवहारप्रवृत्तिः, ऋजुसूत्रेण वर्तमानबोधः यथार्थायथार्थरूपमुभयज्ञानम् । शब्दनयेन सम्यग्दर्शनपूर्वकयथार्थबोधलक्षणं कारणकार्यसापेक्षं स्वपरप्रकाशकं स्याद्वादोपेतं ज्ञानम् ५ । समभिरूढनयेन सकलज्ञानवचनपर्यायश-

---

१ विचारणारहितः.

क्तिप्रकृतिरूपम् ६ । एवंभूतनयेन वस्तुतः केवलज्ञानम् ७ । अत्र सम्यग्रत्नत्रयोपादेयलक्षणं परमज्ञानं शुद्धम् । यतः—

पीयूषमसमुद्रोत्थं, रसायनमनौषधम् । अनन्यापेक्षमैश्वर्यं, ज्ञानमाहुर्मनीषिणः ॥ १ ॥

समुद्रं विनोत्पन्नममृतमौषधरहितं रसायनं जरामरणवारकं सेनाद्यपेक्षामुक्तमैश्वर्यं शक्रचक्रित्वम्, एतादृशं पण्डिता ज्ञानमाहुः ॥

अतो ज्ञानं सम्यगुपादेयम् । इत्यादिगणधरदेशनां निशम्य विरक्तधीर्गाङ्गिलनृपः स्वाङ्गजं राज्ये न्यस्य पितृभ्यां सहितः प्राज्यैरुत्सवैर्व्रतमाददे । ततः सालमहासालगाङ्गिलादित्रिरन्वितो गणी जिनान्त्यर्णे गन्तुं चम्पां प्रत्यचलत् । तदा सालमहासालौ इति दध्यतुः—"धन्या इमेऽस्मद्भगिनीभगिनीपतिभागिनेया अचिरेण सर्वविरतिं प्राप्ताः" । ते त्रयोऽपीत्थं दध्युः—

"एताभ्यां हि वयं पूर्वं, राज्यश्रीभाजनीकृताः । इदानीं तु महानन्द-प्रापकं प्रापितं व्रतम् ॥ १ ॥"

इत्यादिलोकोत्तरध्यानमग्नाः क्षपकश्रेणिमाश्रिताः पञ्चमज्ञानमासदन् । अथ ते जिनान्त्यर्णे गता गणाधिपेन समं जिनं प्रदक्षिणीकृत्य केवलिपर्षदि जग्मुः । ततस्तान् गौतमः प्रोचे—"भो अनभिज्ञा इव कथं यूयं यात ? समायात, त्रिभुवनप्रभुं वन्दध्वम्" । अथ श्रीवीरेण गौतमो जिनान्माऽऽशातयेत्युक्तस्तत्क्षणं तान् क्षमयित्वेति निजे हृदि दध्यौ—

"दुर्जनं हरिणादीव, त्यजतेऽद्यापि मां न हि ।
केवलज्ञानलक्ष्मीस्तत्, किं सेत्स्यामि न वाऽथवा ॥ १ ॥"

इति चिन्तयन्निति सुरालापं शुश्राव—

"जिनेनाद्योदितं यो हि, जिनान्नमति भूचरः ।
स्वलब्ध्याष्टापदं गत्वा, स हि तद्भवसिद्धिकः ॥ १ ॥"

इति देवगिरं श्रुत्वा जिनाज्ञां लात्वाऽष्टापदं प्रति प्रतस्थे ।

इतश्च कोडिन्नदिन्नसेवालास्तापसास्त्रयः प्रत्येकं पञ्चशतीतापसान्विता 'अष्टापदारोहान्मुक्तिः स्यात्' इति विभोर्वचो जनाननाच्छ्रुत्वा पूर्वं तं प्रति प्रस्थिताः सन्ति । तेषूपवासतपोभृत् प्रथमः सपरिच्छदस्तस्याद्रेरादिममेखलां कन्दादिभोजनो भेजे । षष्ठकारी द्वितीयस्तु पक्वपत्रादिभोजनः सतन्त्रस्तस्य भूभृतो द्वितीयां मेखलां प्राप । शुष्कसेवालभोजी तृतीयस्तु अष्टमतपाः सपरिकरस्तस्याद्रेस्तृतीयां मेखलां प्राप । न तु क्लिश्यमानोऽपि कोऽपि तस्य गिरेः शिरोऽगात् ।

अथ ते तापसा आयान्तं गौतमं प्रेक्ष्याचिन्तयन्—"तपःकृशाङ्गा अपि यत्र वयमारोढुं न क्षमास्तत्रायं स्थूलयतिः कथमारोक्ष्यति ?" । तेष्वेवं चिन्तयत्स्वेव गौतमो जङ्घाचारणलब्ध्याऽर्करश्मीनालम्ब्य संचरँस्तूर्णं तेषामुपर्यगात्, क्षणाददृश्यतामगात् । विस्मयं गतास्त ऊचुः—'अस्य शिष्या भविष्यामः' ।

गौतमस्तु शैलमौलौ जरतकारितं चैत्यं ददर्श, तत्र चतुर्विंशतिं जिनान्ननाम 'जगच्चिंतामणि जगनाह०' इति स्तुत्वा चैत्यान्निर्गत्य रात्रिवासायाशोकतरोस्तले उवास । इतश्च धनदः शक्रदिक्पालोऽर्हतो नन्तुं तत्रागात् । जिनान्नत्वा गणिनं प्रणम्येति देशनामश्रृणोत्—

"महाव्रतधरास्तीव्र—तपःशोषितविग्रहाः । तारयन्ति परं ये हि, तरन्तः पोतवत्स्वयम् ॥ १ ॥"

तच्छ्रुत्वा श्रीदो दध्यौ—

"अन्तप्रान्ताशनत्वे हि नेदृक् स्यादङ्गसौष्ठवम् । "

इति वैश्रवणः किञ्चि—ज्जहास विकसन्मुखः ॥ १ ॥

ततस्तदाकूतं ज्ञात्वा पुण्डरीकाध्ययनं प्रकाशितम् ।

कृशोऽपि पश्य दुर्ध्यानात्, कण्डरीको ययावधः ।

पुष्टोऽपि पुण्डरीकस्तु, शुभध्यानात्सुरोऽभवत् ॥ १ ॥

ततो धनदः क्षामयित्वा स्वाश्रयं ययौ । तदा श्रीदसामानिको वज्रस्वामिजीवः सम्यक्त्वं प्राप । तं चान्ये जृम्भकामरं जाषन्ते ।

प्रजाते गिरेरुत्तरन् गौतमस्तैः प्रोचे—"त्वं नो गुरुः, वयं तव शिष्याः" । गणी स्माह—"युष्माकमस्माकं च गुरुः श्रीवीर एव" । ततस्ते देवार्पितवेषा गौतमान्तिके प्राव्रजन् । ततस्तत्पारणार्थं प्रासुक-

पायसभृतं पतद्ग्रहमानीय विधिवत् परिपाट्या तान्निवेश्य यथाकाममक्षीणमहानस्या लब्ध्याऽभोजयत्। तदा सेवालभक्षिणामेकोत्तरा पञ्चशती तद्गुणग्रामस्तुतिमग्ना भुञ्जाना एव क्षणात् केवलज्ञानमुज्ज्वलं प्रापुः। अथ सर्वेषु तृप्तेषु गणेशः स्वयं बुभुजे। तान् सहादाय पुरः प्राचलत्। क्रमात् समवसरणभुवमीयुषां दिन्नादीनामाप्तस्य प्रातिहार्यलक्ष्मीं पश्यतां षष्ठकारिणां पञ्चशतीमितानां केवलज्ञानमुत्पेदे। तावतामेव कोडिन्नप्रमुखाणां तत्क्षणं सर्वज्ञं पश्यतां पञ्चमज्ञानं जज्ञे। अथ तैर्वृतो गणी जिनं प्रदक्षिणीचक्रे, जिनपर्षदि व्रजतस्तांश्चैवं प्रेक्ष्याब्रवीत्—"भो यूयमिहायात, त्रिजगद्गुरुं नमत"। ततो गणी भगवता 'जिनान्माऽऽशातय' इत्युक्तो मिथ्यादुष्कृतपूर्वं तान् क्षमयित्वा इत्यचिन्तयत्—

"गुरुकर्मा ह्यहं नास्मिन्, भवे प्राप्स्यामि निर्वृतिम्।<br>अमी मद्दीक्षिता धन्या–स्तत्कालोत्पन्नकेवलाः॥ १॥"

एवमधृतिं कुर्वाणं गणिनं श्रीवीर इति स्माह—"यदङ्गिनां स्नेहाः शुष्कद्विदलचर्मोर्णाकटसन्निभाः सन्ति, चिरन्तनात् परिचयात्तवोर्णाकटसन्निभोऽस्मासु प्रशस्तः प्रणयो वर्तते, तन्न केवलं प्राप्यते, तद्विगमे तव केवलं भावि, इतश्चयुतावावां तुल्यौ भविष्यावः, माऽधृतिं कुरु"। इति श्रुत्वा श्रीगणभृन्मुदितमानसः संयमतत्परः श्रीजिनमसेवत इति।

---

१ प्रभोः

स्वभावलाभात्मकसत्यसद्मनि, सालादयो गाङ्गिलभूपतापसाः ।
सत्तागतानन्तसुखानि तत्क्षणं, भेजुर्ययुश्च क्रमतः शिवालये ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकविंशस्तम्भे
षडुत्तरत्रिशततमं व्याख्यानम् ३०६ ॥

## सप्तोत्तरत्रिशततमं व्याख्यानम् ३०७ ॥

अथ शमगुणमाह—

विकल्पविषयोत्तीर्णः, स्वभावालम्बनः सदा । ज्ञानस्य परिपाको यः, स शमः परिकीर्तितः ॥ १ ॥

विकल्पश्चित्तविभ्रमस्तस्य विषयो विस्तारस्तेनोत्तीर्णः निवृत्तः, स्वभावस्तद्गुणपर्यायसम्यग्रत्नत्रयस्वरूपस्तस्यालम्बनः स्वभावालम्बनः, ज्ञानस्यात्मोपयोगलक्षणस्य यः परिपाकः प्रौढावसरः स शमः प्रोक्तः ॥

अत्र भावशमः शुद्धः । तत्र नामस्थापनाशमौ सुगमौ । द्रव्यशम आगमतः शमस्वरूपज्ञानी अनुपयुक्तश्च, नोआगमतो मायया लब्धिसिद्ध्यादि (द्धि) देवगत्याद्यर्थमुपकारापकारविपाकक्षमादिक्रोधोपशमत्वम् । भावत उपशमस्वरूपोपयुक्तः आगमतः, नोआगमतश्च मिथ्यात्वमपहाय यथार्थभासनपूर्वकचारित्रमोहोदयाभावात्क्षमादिगुणपरिणतिः शमः, सोऽपि लौकिकलोकोत्तरभेदाद् द्विविधः, लौकिको वेदान्तवादिनां लोकोत्तरो जैनप्रवचनानुसारी शुद्धः ।

अत्रार्थे मृगापुत्रज्ञातम्—

तच्चेदम्–सुग्रीवपुरीशपुत्रो मृगापुत्रः प्रासादगवाक्षे स्थितो नगरस्वरूपमालोकयन् शमगुणागारमेकमनगारं पश्यन्निर्निमेषदृष्ट्या विलोकयन् जातिस्मृतिं प्राप, पुराकृतं श्रामण्यं संस्मृत्याम्बापितरावुपागम्येदं वाक्यमब्रवीत्—

"सुयाणि मे पंच महव्वयाणि, नरएसु दुक्खं च तिरिक्खजोणिसु।
निव्विण्णकामो म्हि महण्णवाओ, अणुजाणह पव्वइस्सामि अम्मो ॥ १ ॥

इत्यादिना देहभोगोपभोगादीनामनित्यत्वमुक्त्वा प्रव्रज्याज्ञां ययाचे, तदा पितृभ्यां श्रामण्यपालनमनेकयुक्त्या यावज्जीवं दुष्करं दर्शितम्–"त्वमतिसुकुमारः श्रामण्यं पालयितुं न क्षमोऽसि, इन्द्रियमनसां दुर्जयत्वात्, लोहमययवचर्वणवद्दुष्करं चारित्रम्, दीप्तामग्निशिखां पातुमिव मन्दरगिरेस्तुलारोपणमिव वा तारुण्ये संयमोद्वहनं सुदुष्करम्, पश्चाद्वार्धके चरणाचरणं न्याय्यम्" । मृगापुत्र ऊचे—"हे पितरौ ! इह लोके निःस्पृहस्य न किञ्चिदपि दुष्करम्, यच्चतुर्गतिषु अनेकवेदना मयाऽनुभूता वागगोचराः, यतः—

सव्वभवेसु असाया, वेअणा वेइआ मए। निमिसंतरमित्तं पि, जं साया नत्थि वेयणा ॥ १ ॥

येन मया ईदृश्यो नरकादिव्यथाः सोढास्तस्य कथं दीक्षा दुष्करा ? इत्यसौ मया ग्राह्यैव । प्रव्रज्याया

साम्यसुखमग्नो जीवो देशोनपूर्वकोटिकालं सुखेनादीनमनसा
यः साम्यगुणसुखास्वादः स एव महाधारः । नान्येति, यदुक्तम्—
गमयति, मेषोन्मेषमात्रमपि प्रमादावसरं नान्येति, यदुक्तम्— रागोरगविषोर्मिभिः ॥ १ ॥

शमसूक्तसुधासिक्तं, येषां नक्तंदिनं मनः । कदापि ते न दह्यन्ते, रागोरगविषोर्मिभिः ॥ १ ॥

येषां महात्मनां मनः शमः कषायाभावस्तस्य सूक्तानि अध्यात्मोपनिषद्वाक्यानि तान्येव सुधा अमृतं तेन सिक्तं चित्तं भवति अहोरात्रं, ते रागोऽभिष्वङ्गलक्षणः स एवोरगः सर्पस्तस्य विषस्योर्मयस्ताभिः ते समतासिक्ता न दह्यन्ते ॥

जगज्जीवा रागादिदष्टा विषयघूर्णिता भ्रमन्ति, इष्टसंयोगानिष्टवियोगचिन्तया विकल्पयति, बहुविधानभ्रशोकादिकल्पनाकल्लोलान् संगृह्णन्ति, अनेकान् जगदुच्छिष्टान् पुद्गलस्कन्धान् याचन्ते, अतः शमगुणाविष्करणं श्रेयस्करं निरुपमानं च । यतः—

स्वयंभूरमणस्पर्धि-वर्धिष्णुसमतारसः । मुनिर्येनोपमीयेत, कोऽपि नासौ चराचरे ॥ १ ॥

स्वयंभूरमणोऽर्धरज्जुप्रमाणः प्रान्तसागरस्तस्य स्पर्धाकारी वर्धमानः समतारसो यस्य स एवंविधो मुनिः, त्रिकालाविषयी, तथाहि—अतीतकालभोगस्मृत्यभावः, वर्तमानेन्द्रियगोचरप्राप्तविषयरमणाभावः, अनागतकालमनोज्ञविषयेच्छाऽभावः मुनिः येनोपमानेनोपमीयेत चराचरे विश्वे असौ कोऽपि नास्ति, यत्सर्वमचेतनपुद्गलस्कधजं मूर्तं च तत्समतारसेन सहजात्यन्तिकनिरुपचरितसमभावस्वरूपेण सह कथमुपमीयते ?" ॥

इत्यादिविविधोपायेन पितरौ प्रतिबोध्यानुज्ञां लात्वा समस्तपरिग्रहं त्यक्त्वा प्रव्रजितः । यदुक्तम्—

अणिस्सिउ इह लोए, परलोए अणिस्सिउ । वासिचंदणकप्पो अ, असणे अणसणे तहा ॥ १ ॥

नेहलोकार्थं परलोकार्थं वा तपोऽनुष्ठायीति वासीचन्दनव्यापारकपुरुषयोस्तुल्यः सः । तथाऽशने आहारे अनशने तदभावे तुल्यः ॥ इत्थं बहुवर्षाणि यावत् श्रामण्यं परिपाल्य मासिकानशनेन सिद्धिं प्रापेति ॥

देदीप्यमानो हृदये शमो गुणः, अन्तर्गतध्यानविशुद्धिकृत्किल ।
स्याद्यस्य रत्नत्रयपुष्टितां व्रजेत्, तूर्णं मृगापुत्रमुनीन्द्रवत्तु तत्राम् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकविंश-
स्तम्भे सप्तोत्तरत्रिशततमं व्याख्यानम् ॥ ३०७ ॥

## अष्टोत्तरत्रिशततमं ३०८ व्याख्यानम् ॥

अथ पञ्चेन्द्रियस्वरूपमाह—

श्रुत्वेन्द्रियस्वरूपाणि, श्रीज्ञातनन्दनास्यतः । स सुभद्रोऽनुचानोऽभूत्, पश्चाद्धविषयोन्मुखः ॥ १ ॥

स्पष्टः । भावार्थस्तु सुभद्रज्ञातेन ज्ञेयः । तथाहि—

श्रीराजगृहे कश्चिदिभ्यात्मजः सुभद्र आजन्मतः प्राप्तदारिद्र्यः प्रत्यहं भिक्षावृत्त्या प्राणयात्रां तनोति । तत्रैकदा श्रीमहावीरः परमात्मा गुणशिलचैत्ये समवसृतः । तं परमात्मानं वन्दितुं राजादिपौरा व्रजन्ति स्म । तद्वीक्ष्य सोऽपि सुभद्रस्तत्सार्थे तत्राययौ । त्रिभुवनतारणक्षमनिरुपमतीर्थकृद्वाचां श्रुत्वा प्राप्ताश्चर्यो दध्यौ—"अहो ! अद्य निःसीमगुणगणान्वितो विगतकल्मषो मया दृष्टः, मज्जन्म सफलं जातम्" । इतश्च श्रीवीरः समस्तजगज्जीवोद्धारणबोधिबीजज्ञः पञ्चेन्द्रियव्याख्यानं तमुद्दिश्य व्याख्याति स्म—

जितान्यक्षाणि मोक्षाय, संसारायाजितानि च । भद्र तदन्तरं ज्ञात्वा, यद्युक्तं तत्समाचर ॥ १ ॥

अत्रेन्द्रियाणि पञ्चधा—श्रोत्राक्षिघ्राणरसनस्पर्शनानि । एकैकं तद्द्रव्यभावभेदतो द्विभेदम् । तन्मध्ये द्रव्येन्द्रियं द्विधा—निर्वृतीन्द्रियमुपकरणेन्द्रियं च । निर्वृति नाम इन्द्रियाकारः, सोऽपि बाह्योऽभ्यन्तरश्च, बाह्यस्तु स्फुटं प्रतिजाति पृथग्रूपः कर्णपर्पटिकादिक ईक्ष्यते, यतो विचित्राकृतितया वाजिनरादिषु न समानाकारः । अभ्यन्तराकृतिस्तु सर्वजातिषु समाना स्यात्, तथाहि—श्रोत्रं कदम्बपुष्पाकारं मांसगोलकं स्यात् १ । नेत्रयोरन्तर्गताकृतिर्मसूरधान्यतुल्या स्यात् २ । घ्राणेन्द्रियाकारोऽतिमुक्तकपुष्पाभः ३ । रसनेन्द्रियाकृतिः क्षुरप्रतुल्या स्यात् ४ । स्पर्शेन्द्रियं नानाकारं ज्ञेयं, परं बाह्याभ्यन्तरैकस्वरूपं च ५ । उपकरणद्रव्येन्द्रियं यथा खड्गधारायां छेदशक्तिस्तथा स्वच्छपुद्गलमयं शब्दादिविषयग्रहणशक्तिविशेषं

ज्ञेयम्, तदुपघाते सति बधिरादित्वं लभतेऽतिघोरघनगर्जितादिनेति । भावेन्द्रियमपि द्विधा—लब्धि-रुपयोगश्च । तत्र लब्धिः श्रोत्रेन्द्रियादिविषयसर्वात्मप्रदेशानां तदावरणकर्मक्षयोपशमः । उपयोगश्च स्वस्वविषये लब्धिरूपेन्द्रियानुसारेणात्मनो व्यापारः प्रणिधानमिति ॥

तथा पञ्चाप्युपकरणेन्द्रियाणि अङ्गुलासङ्ख्येयभागप्रमाणानि बाहल्यतः पृथुत्वतश्च । तथा श्रोत्रघ्राणचक्षुषामङ्गुलासङ्ख्येयभागपृथुत्वम्, अङ्गुलपृथक्त्वविस्तरं जिह्वेन्द्रियं, स्पर्शनं पुनः शरीरविस्तृतं स्यात् । पृथक्त्वं नाम द्विप्रभृति नवकं यावत्स्यात् ॥

अथ विषयमानमिदम्—नेत्रं विना चत्वारीन्द्रियाणि जघन्यतोऽङ्गुलासङ्ख्येयभागमात्रव्यवस्थितं पश्यति, न तु ततोऽप्यर्वाक्तरं, चक्षुस्तु अङ्गुलसङ्ख्येयभागगतं ज्ञेयं, अतिसन्निकृष्टमञ्जनरजोमलादिकं न पश्यतीति । तथा त्रीणीन्द्रियाणि नवयोजनेभ्य आगतं गन्धं रसं स्पर्शं चोत्कृष्टतो गृह्णन्ति, श्रुति-र्द्वादशयोजनेभ्यः समेतं शब्दं शृणोति, चक्षुश्च साधिकयोजनलक्षतो रूपं पश्यति । अपि च—

एकाक्षादिव्यवहारो, भवेद्द्रव्येन्द्रियैः किल ।
अन्यथा बकुलः पञ्चा—क्षः स्यात् पञ्चोपयोगतः ॥ १ ॥
रणन्नूपुरशृङ्गार—चारुलोलेक्षणामुखात् । निर्यत्सुगन्धिमदिरा—गण्डूषादेष पुष्प्यति ॥ २ ॥

ततः पञ्चाप्युपयोगा भाव्या इति । अथैतदिन्द्रियस्वरूपं विज्ञाय इन्द्रियविषयेषु शब्दादिषु मनो न विधेयं क्षणमात्रमपि, यत उक्तम्—

इंदियधुत्ताण अहो, तिलतुसमित्तं पि देसु मा पसरं ।
अह दिन्नो तो नीओ, जत्थ खणो वरिसकोडिसमो ॥ १ ॥

इन्द्रियोपरि ज्ञाताधर्मकथाङ्गसूत्रोक्तः कूर्मद्वयदृष्टान्तः । तथा च तद्गाथे—

विसएसु इंदिआइं, रुंभंता रागदोसनिम्मुक्का ।
पावंति निव्वुइसुहं, कुम्मु व्व मयंगदहसुक्खं ॥ १ ॥
अवरे उ अणत्थपरं—परा उ पावंति पावकम्मवसा ।
संसारसागरगया, गोमाउअगसिअकुम्मु व्व ॥ २ ॥

तथाहि–वाणारस्यां गङ्गायां मृदङ्गतीरे ह्रदे गुप्तेन्द्रियागुप्तेन्द्रियौ कूर्मौ वसतः । तौ स्थलचरकीटकाद्यामिषार्थिनौ बहिर्निर्गतौ दुष्टशृगालाभ्यां दृष्टौ, भीतौ चतुष्पादीं ग्रीवां च करोटिमध्ये संगोप्य निश्चेष्टौ निर्जीवाविव स्थितौ । जम्बूकाभ्यामसकृल्लोठनोत्पाटनाधःपातनपादघातादिभिरपि किञ्चिद्विप्रकर्तुमशक्ताभ्यां किञ्चिद्दूरे गत्वा रहोऽस्थीयत । अगुप्तेन्द्रियश्चापल्यादेकं पादं यावद्ग्रीवां कर्षस्ताभ्यां खण्डशः कृतः । द्वितीयस्त्वचपलः सुचिरं तथैव स्थितः तावद्यावन्निवृत्तौ बहु स्थित्वा श्रान्तौ गतौ । ततः स दिगवलोकं कृत्वोत्पत्य सद्यो ह्रदे प्राप्तः सुखी जातः ॥

पञ्चाङ्गगोपककूर्मवत् पञ्चेन्द्रियगोप्ता सुखी स्यादित्याद्युपनयः । तथा सर्वेषामपीन्द्रियाणां प्रयुञ्जनं प्रशस्ताप्रशस्ताध्यवसायाभ्यां द्विविधं स्यात् । तत्र श्रवणेन्द्रियं प्रशस्तं देवगुरुगुणधर्मदेशनाश्रवणादौ

शुभाध्यवसायहेतुत्वेन यदुपयुज्यते, अप्रशस्तं च यदिष्टानिष्टेषु शब्देषु रागद्वेषनिमित्तं स्यात् १। चक्षुः प्रशस्तं यद्देवगुरुसङ्घशास्त्रप्रत्युपेक्षणप्रमार्जनाद्यसमितिधर्मस्थानावलोकनादिना पवित्रीस्यात्, यच्च हसननर्तनक्रीडनरुदनत्राणैन्द्रजालनिरीक्षणान्योन्ययुद्धावेक्षणकामिनीसुरूपकुरूपाङ्गोपाङ्गाद्यालोकने व्याप्रियते तदप्रशस्तम् २। घ्राणं प्रशस्तं यदर्हत्पूजायां कुसुमकुङ्कुमकर्पूरादीनां सुगन्धितेतरपरीक्षायां गुरुग्लानादीनां च पथ्यौषधदानादौ साधूनां च संसक्तपानभक्तयात्नदयजिज्ञासायामुपयुज्यते, अप्रशस्तं तु सुगन्धदुर्गन्धयो रागद्वेषकृत् ३। जिह्वेन्द्रियं प्रशस्तं यत्पञ्चविधे स्वाध्याये देवगुरुस्तुतिपरानुशिष्ट्यादौ गुर्वादिभक्त्या भक्तपानपरीक्षादौ चोपयोगि, अप्रशस्तं स्त्र्यादिचतुर्विधविकथापापशास्त्रपरतप्त्यादौ रक्तद्विष्टश्रेष्ठानिष्टाहारादौ च यद्व्याप्रियते ४। स्पर्शनेन्द्रियं प्रशस्तं यज्जिनस्नपनादौ गुरुग्लानादिवैयावृत्त्ये चोपयोगवत्, अप्रशस्तं तु सूनुस्त्र्याद्यालिङ्गनादौ व्यापारवत् ५। अनया रीत्या सर्ववस्तुषु प्रशस्ताप्रशस्तभावौ शुभाशुभाध्यवसायफलप्राप्त्यनुसारेणानुगन्तव्यौ, तेनात्र चतुर्भङ्गी स्यात्—केषाञ्चिज्जीवानां प्रशस्तं वस्तु जिनबिम्बादिकं साधकं कारणं दृष्ट्वाऽप्रशस्तो बाधकभाव उदयति कालसौकरिकादिवत् १। केषाञ्चित्प्रशस्तं वस्तु समवसरणादिकं साधककारणं वीक्ष्य प्रशस्तः साधकभावो जायते पञ्चदशशततापसादिवत् २। केषाञ्चिदप्रशस्तं बाधकनिमित्तं प्रेक्ष्य प्रशस्तसाधकभावः प्रवर्धते आषाढनर्तकर्षिप्रमुखवत् ३। केषाञ्चिदप्रशस्तं बाधकवस्तु समीक्ष्याप्रशस्तभावः समुदेति, अस्य भङ्गस्य स्वामिनोऽनेके सुभूमब्रह्मदत्तादयो ज्ञेयाः ४।

इत्यादिधर्मदेशनां श्रीत्रैशलेयास्यतः श्रुत्वा स निःस्वो रथ्यापतितवस्त्रखण्डकन्थाधारी शरावपात्री

सुजङ्गः प्राप्तज्ञानो मूर्छां सर्वां विहाय विहायोवदप्रतिबन्धविहारी संयमधारी बभूव । प्रभुप्रसादादेकादशाङ्गसूत्रार्थविज्ञातः । एकदा नागरास्तस्य मुनेः पूर्वावस्थां संस्मृत्येति दध्युः—"अहो ! अयं कां राजर्द्धिं मुक्त्वा व्रती जातः ? पूर्वावस्थातोऽधुनाऽऽहारादिप्राप्त्या महान् सुखी विद्यते । प्रागसौ रङ्कोऽनेकरङ्कैर्निन्द्य आसीत्, इदानीमिन्द्रादिभिर्वन्द्यो जातः । प्रागुच्छिष्टाहारप्राप्तिरपि दुर्लभाऽऽसीत्, सम्प्रति यथेच्छमश्नाति । अस्य वैराग्योदन्तः सर्वोऽस्माभिर्निर्णीतः" । इत्यादिनिन्दां कुर्वतः पौरान् वीक्ष्य श्रेणिकनृपपुत्रोऽभयकुमारः सचिवो दध्यौ—"अहो ! निष्कारणमिमे पौरास्त्यागीशममुं मुनिं निन्दन्ति, परमार्थतत्त्वाविज्ञा मूढा अस्मिन्निःस्पृहे मुधा वैरदोषोद्भावनं वहन्ति, मुनिनिन्दया दृढतरकर्मसमूहं चिन्वन्ति,अतोऽहं सर्वानप्येतान् बोधयामि" इति ध्यात्वा एकदा राजपथे सर्वपुरजनान् समूहीभूय स्थितान् प्रेक्ष्य दूरात्तमेव मुनिं समागच्छन्तमालोक्यावसरज्ञोऽभयकुमारः स्वयानादुत्तीर्य त्रिः प्रदक्षिणां कृत्वा मुनिं प्रणम्य पप्रच्छ—"हे पूज्य ! एकस्मिन् काले कतीन्द्रियाणामुपयोगः स्यात् ?" । गुरुः स्माह—"एकस्मिन् काल एकस्यैवोपयोगो जायते" । स पुनः पप्रच्छ—"एकैकमपि सेवितमिन्द्रियं दुःखदं स्यान्न वा ?" । गुरुः स्माह—एकैकमपीन्द्रियं मृगादेरिवेह प्रेत्य च महाननर्थहेतुः, किं पुनः समुदितानि तानि ? । उक्तं च—

कुरङ्गमातङ्गपतङ्गभृङ्ग—मीना हताः पञ्चभिरेव पञ्च ।
एकः प्रमादी स कथं न हन्या[1]—द्यः सेवते पञ्चभिरेव पञ्च ॥ १ ॥

१ हन्येत इत्यर्थः.

कुरङ्गो मृगः स्वैरं वनेषु भ्रमति, लुब्धकनराः सारङ्गीवीणादिनादं तन्वन्ति, कर्णविषयरसिको हरिणस्तत्स्वादमोहितः शब्दश्रवणार्थं समेति, तदा झटिति ते व्याधास्तं हिंसन्तीति १। मातङ्गस्तु दुष्टनररचितां गर्तागतां कागजैर्विनिर्मितां हस्तिनीं वीक्ष्य तत्स्पर्शकरणे औत्सुक्यं दधत्तत्र पतति, क्षुधातृपादिभिर्निर्बलं जातं तं ज्ञात्वा कतिपयदिनानन्तरं तं बध्नन्ति हिंसन्ति चेति २। पतङ्गस्तु चक्षुर्विषयवशगो दीपकलिकायां मोहितो झम्पां ददाति स्वाङ्गं च जुहोति ३। पङ्कजसुगन्धमोहितो घ्राणेन्द्रियपरवशो भृङ्गो दिवा पङ्कजे तिष्ठति, रात्रौ तस्मिन् सङ्कोचं प्राप्ते महद्दुःखं प्राप्नोतीति ४। जिह्वावशिनो मीनास्तीक्ष्णलोहकण्टकाग्रस्थापितपिष्टगोलिकां वीक्ष्य लोलुपा मांसबुद्ध्या तां गृह्णन्ति, तत्क्षणं च कण्टकाग्रभिन्ना मरणं लभन्ते ५। इत्यादिवाक्यं श्रुत्वाऽभयकुमारः सर्वजनान् स्माह—"भो लोकाः! भवतां मध्ये यः कोऽपि एकैकमिन्द्रियं वशीकरोति श्रीवीरप्रत्यहं च प्रत्याख्याति तस्यैकैकं महामूल्यमिदं रत्नं ददामि"। तदा न कोऽपि तत्करणार्थं समर्थोऽभूत्, सर्वेऽपि मौनं दधुः, तदाऽभयकुमारो मुनीशं स्माह—"स्वामिन्! भवद्भिस्तु ज्ञातसुतसमीपे पञ्चेन्द्रियविषयाः सर्वथा प्रत्याख्याताः, अतोऽमूनि पञ्च रत्नानि यूयं गृह्णीत"। तदा मुनिः स्माह—"किं करोम्यहं? समा बुद्धिर्मे काञ्चनपाषाणेषु, मया त्रिविधत्रिविधेन शरीरशुश्रूषाकरणं परिग्रहमात्रं प्रत्याख्यातम्, इन्द्रादिसौख्येष्वपि त्रिकालं मम स्पृहा नास्ति"। इति श्रुत्वा सर्वेऽपि ते लोका विस्मयं प्रापुः—"अहो! असौ सत्यो निःस्पृहः, अस्मान्वि-

रङ्गैर्मुधा निन्दितः” इत्यादिमुनिस्तुतिं तेषां मुखाच्छ्रुत्वाऽन्नयः कृतकृत्यो मुनिं विसृज्य जिनधर्ममाहात्म्यं प्रवर्ध्य स्वगृहं ययौ। मुनिस्तु शुद्धोपयोगपूर्णः स्वात्मकार्यमसाधयदिति ॥

नो विश्वसेयाः क्षणमिन्द्रियार्था,लब्ध्वेन्द्रियार्थान् स्मृतवीरवाक्यः।
वश्येन्द्रियः सोऽपि मुनिर्जनेऽमु—मध्यात्मधर्मं प्रकटीचकार ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकविंशस्तम्भेऽष्टोत्तरत्रिशततमं व्याख्यानम् ॥ ३०८ ॥

## नवोत्तरत्रिशततमं ३०९ व्याख्यानम् ॥

अथ पुनरपीन्द्रियस्वरूपमेवाह—

आत्मानं विषयैः पाशै—र्भववासपराङ्मुखम्।
इन्द्रियाणि निबध्नन्ति, मोहराजस्य किङ्कराः ॥ १ ॥

भवः संसारस्तस्मिन् वासो निवासस्तत्र पराङ्मुखः निवृत्त उद्विग्नस्तम् आत्मानमिन्द्रियाणि निबध्नन्ति। कैः? विषयपाशैः कृत्वा, अत एवैते ( तानि ) मोहराजस्य किङ्कराः ॥

अत्रार्थे सुकुमारिकायाःसंबन्धः स चायम्—

वसन्तपुराद्राजसुतौ ससकभसकाभिधानौ निष्क्रान्तौ, पश्चाद्गीतार्थौ जातौ। भगिनीं सुकुमारिकां तौ

प्रव्राजयामासतुः । तस्याश्चोत्कृष्टरूपतयाऽऽकृष्टचेतसस्तरुणाः साध्वीप्रतिश्रये प्रविश्य तां निरीक्षांचक्रिरे । ततस्तदुपद्रवः कथितस्तयोर्महत्तरया । पश्चात्तामेकगृहे निक्षिप्य रक्षिता । ताभ्यां सह ते तरुणा योद्धुमारब्धाः । ततो "मन्निमित्तोऽयं मुन्योः क्लेश इति धिग्मामनर्थकारिशरीराम्" इति वैराग्यात्प्रतिपन्नं तयाऽनशनम् । ततोऽतिक्षीणशरीरत्वात्संजातमोहातिरेकान्मृतेति मत्वा परिष्ठापिता ताभ्याम् । शीतपवनसंपर्कात्प्रत्यागतप्राणा दृष्टा सार्थवाहेन । स्त्रीरत्नमेतदिति बुद्ध्याऽभ्यङ्गोद्वर्तनौषधादिक्रमेण स तां पुनर्नवां चक्रे । तयाऽपि तथाभवितव्यतया कर्मवैचित्र्यादनुपकृतवत्सलोऽयमिति मत्वा सर्वं प्रतिपेदे । स्थिता कियन्तमपि कालम् । अन्यदा दृष्टौ भ्रातरौ, पतिता तच्चरणेषु, निवेदितो वृत्तान्तः । ताभ्यां विमोच्य सार्थवाहात् पुनरिति शिक्षिता, यतः—

सरित्सहस्रदुष्पूर—समुद्रोदरसोदरः । तृप्तिमान्नेन्द्रियग्रामो, भव तृप्तोऽन्तरात्मना ॥ १ ॥

हे भव्य! अयमिन्द्रियग्रामः तृप्तिमान् न भवति कदापि तृप्तिं न लभते, यस्मादभुक्तेषु ईहा भुज्यमानेषु मग्नता भुक्तपूर्वेषु स्मरणम् इति त्रैकालिकी अशुद्धा प्रवृत्तिरिन्द्रियार्थरक्तस्य, तेन न तृप्तिः । कीदृश इन्द्रियग्रामः ? सरितां सहस्रेण दुष्पूर्यते सहस्रशो नदीपूरैः दुष्पूरोऽपूर्यमाणो यः समुद्रस्तस्य सोदरः सदृशः । इन्द्रियाभिलाषस्तु शमसंतोषेणैव पूर्यते तदर्थं हितोक्तिरियम्—हे उत्तम ! अन्तरात्मना आत्मनोऽन्तर्गतेन स्वरूपेण तृप्तो भव । अयं हि जीवः संसारचक्रक्रोमीभूतपरभावान् आत्मतया मन्यमानः शरीरमेवात्मा इति बहिर्भावे कृतात्मबुद्धिः बाह्यात्मा सन् अनन्तपुद्गलपरावर्तकालं मोहावगुण्ठितः पर्यटति,

स एव निसर्गाधिगमाभ्यां स्वरूपपररूपविज्जनेन अहं शुद्ध इतिकृतनिश्चयः सम्यग्रत्नत्रयात्मकमात्मान-मात्मत्वेन जानन् रागादीन् परत्वेन निर्धारयन् सम्यग् अन्तरात्मा उच्यते, स एव सम्यग्दर्शनला-जकाले निर्धारितस्वरूपपूर्णताप्राप्तौ परमात्मा जवति, अत इन्द्रियविषयत्यागो युक्तः ॥

पुरः पुरः स्फुरत्तृष्णा—मृगतृष्णानुकारिषु ।
इन्द्रियार्थेषु धावन्ति, त्यक्त्वा ज्ञानामृतं जमाः ॥ २ ॥

मूर्खा ज्ञानामृतं त्यक्त्वा इन्द्रियार्थेषु रूपरसगन्धस्पर्शशब्दलक्षणेषु धावन्ति आतुरा जवन्ति तदर्थे यलदम्जवाणिज्यमुएमनादि कर्म कुर्वन्ति । कीदृशेषु इन्द्रियार्थेषु? पुरः पुरः अग्रेऽग्रे स्फुरन्ती या तृष्णा जोगपिपासा तया मृगतृष्णा जलज्रान्तिस्तत्सदृशेषु ॥

इन्द्रियजोगा न सुखं, ज्रान्तिरेव तत्त्वविकलानाम् । यतः—
वारमणंतं जुत्ता, वंता चत्ता य धीरपुरिसेहिं ।
ते जोगा पुण इछइ, जोत्तुं तिएहाउलो जीवो ॥ १ ॥

अत एव महाचक्रधरा वासुदेवा मएमलिकादयः कएमरीकादयश्च विषयव्यामोहितचेतना नरके दीनावस्थां प्राप्ताः । किं बहुना? मा कुरुध्वं मा कुरुध्वं विषयविश्वासम् । अहह पूर्वजवास्वादितसाम्य-सुखस्मरणेन तृणीयन्ति अनुत्तरविमानसुखं लवसत्तमाः । इन्द्रादयोऽपि विषयत्यागेऽसमर्था लुठन्ति जूपीठे मुनीनां चरणकमलेषु। अतोऽनादिकालादनेकधा जुक्तविषया वारणीयाः, तत्सङ्गोऽपि न विधेयः, न

स्मरणीयः पूर्वपरिचयः, निर्ग्रन्थास्तु निवर्तयन्ति कालं वाचनादिना तत्त्वावलोकनेहादिषु । उक्तं च—
"निम्मलनिक्कलंकनिस्संगसिद्धसव्वावकासणा कइया" इत्यादिध्यानतत्परास्तिष्ठन्ति । इत्युपदेशवाक्यं श्रुत्वा पुनः सुकुमारिका सा चारित्रं चचार, निर्मलमनसा तपो विधाय दिवमापेति ॥

धीरेषु मुख्यः पुरुषेषु गण्यते, बद्धो न योऽङ्गादिविधाक्षरज्जुभिः ।
भ्रष्टाऽपि ताभ्यामचिरात्समुद्धृता, साऽघं समालोच्य ययौ दिवौकसम् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकविंशे स्तम्भे नवाधिकत्रिशततमं व्याख्यानम् ॥ ३०९ ॥

## दशाधिकत्रिशततमं ३१० व्याख्यानम् ॥

अथेन्द्रियजयमाह—

स्यादक्षाणां जयस्त्यागात्, त्यागोऽत्र परवस्तुषु ।
जनन्यादिष्वभिष्वङ्गं, (मात्रादिष्वनभिष्वङ्गं) स एव निर्जरां श्रयेत् ॥ १ ॥

स्पष्टः । अत्रार्थे सुभानुसंबन्धश्चायम्—

भरतक्षेत्रे मगधदेशे सुवप्रापुरीशोऽरिदमनभूपः, धारिणी भार्या, तयोः पुत्रः सुभानुः कुमारः सुरव-

१ त्यजेदित्यध्याहारः.

भासुरो यौवनं प्राप । जनकेन रूपलावण्यकलावत्य एकशतकन्याः परिणायिताः । ताभिः सह विषयान् भुञ्जमानो भानुकुमारः सुखेन दिनान्निर्वाहयति । एकदा श्रीसंभवजिनागमनं वनपालमुखादशृणोत् । तथाहि सूत्रम्—"अणेगेहिं केवलिहिं अणेगेहिं विउलमइहिं अणेगेहिं उज्जुमइहिं अणेगेहिं ओहि-नाणिहिं अणेगेहिं पुवधरेहिं अणेगेहिं आयरियउवज्झाएहिं तवोधणेहिं नवदिक्खिएहिं अणेगेहिं देव-देवीहिं संपरिवुडो सिरिसंभवो अरिहा सवन्नू सवदंसी आगासएणं चक्केणं" इत्यादि वर्ण्यम् । तदा शतस्त्रीपरिवृतः कुमारो महर्द्ध्या श्रीसेनाङ्गजं समवसरणस्थं प्रणम्य विनयेन तस्थौ । श्रीजिनेन धर्म उपदिष्टः—"सर्वधर्मेषु मुख्यहेतुः परभावग्रहणत्याग एव ज्ञेयः । तत्र स्वद्रव्यस्वक्षेत्रस्वकालस्वभावत्वेन स्यादस्तीति प्रथमभङ्गगृहीतात्मपरिणामः स्वात्मनि वर्तमानः स्वधर्मः, तस्य समवायत्वेनाभेदात् न त्यागः, अनादिमिथ्यादृष्टित्वकुदेवादिरक्तत्वाद्यप्रशस्तवस्तुग्रहणस्य त्यागो मतः । तत्र नामतः त्यागः शब्दालापरूपः, स्थापनात्यागो दर्शनयतिधर्मपूजनादौ स्थाप्यमानः, द्रव्यत्यागो बाह्यवृत्त्या इन्द्रियाभि-लाषाहारोपधिप्रमुखाणां त्यागः, भावतोऽभ्यन्तररागद्वेषमिथ्यात्वाद्याश्रवपरिणतित्यागः, नामस्थापनां यावत् नैगमसंग्रहो, व्यवहारः विषगरलानुष्ठानेन, ऋजुसूत्रेण(त्रः) कटुविपाकभीत्या, शब्दसमभिरूढौ तद्धेतुतया, एवंभूतस्त्यागः सर्वथा वर्जनं वर्जनायत्नेन" । इत्याद्यनेकयुक्तिगर्भितमुपदेशं श्रुत्वा भानुकु-मारस्तीर्थंकरचरणावभिवन्द्य चारित्रमोहक्षयोपशमेन जातविरतिमतिर्भणति स्म—"हे नाथ ! अश-रणशरणमहासार्थवाह ! भवसमुद्रनिर्यामक ! मम सर्वविरतिसामायिकमुपदिश, येन विषयकषायत्यागो

॥११५॥

वर्धते" । एवं निशम्यार्हता सामायिकचारित्रं दत्तम्। गृहीतव्रतः श्रमणो जातः। तदैवायुः क्षयो जातः। स कुमारो मृतः। तत्र तज्जनकः सपरिकर आगतः सुतं मृतं वीक्ष्य विषण्णोऽभूत्। जननी विलापं वितन्वती क्रन्दन्ती रुदनं चकार। तदा झटित्येव देवत्वं लब्ध्वा समागात्स जिनान्त्यर्णे। तौ पितरौ विलपन्तौ दृष्ट्वा भणति—"किमेतादृशं दुःखं? यज्जिनचरणौ परमसुखदायकौ लब्ध्वा रुदनं कुरुथः?"। तावूचतुः—"अस्मत्सुतः परमवल्लभो विपन्नः, तस्य वियोगो जातः, तद्दुःखं दुःसहम्"। सुरः प्राह—"हे नृप! शृणु, तस्य शरीरं तवेष्टं तदा एतत्तत्पतितकलेवरे रागं कुरु। हे मातः! त्वं कथं पुनः पुनर्विलपसि? तव पुत्रः क्व कस्मिन् स्थले शरीरे वा जीवे वा? द्वावपि तव पुरो वर्तेते, न युक्तं रोदनम्"। ततो जनकोऽवदत्—"नोऽत्र रागोऽस्माकं प्रसरति"। सुरोऽवदत्—"तर्हि स्वार्थ एव सर्वेष्विष्टः, परं परमार्थस्तु न, तदा सर्वमनित्यमेव, व्यलीकमेव संबन्धव्यूहमवस्तु, युवां कथं मुह्यथः? सर्वो लौकिकसंबन्धो भ्रमरूप एव। यतः—

युष्माकं सङ्गमोऽनादि—र्बन्धवोऽनियतात्मनाम्।
ध्रुवैकरूपान् शीलादि—बन्धून्नित्यं समाश्रये ॥ १ ॥

हे बन्धवः! युष्माकं संबन्धोऽनादिः असंयतात्मनां भवति। अधुना ध्रुवैकरूपान् शीलादिबन्धून् शीलशमदमादिबन्धून् हितकारकान् नित्यं सदा समाश्रये (अहम्)

कान्ता मे समतैवैका, ज्ञातयो मे समक्रियाः ।
बाह्यवर्गमिति त्यक्त्वा, धर्मसन्न्यासवान् भवेत् ॥ २ ॥

औदयिकसंपदं विहाय क्षयोपशमजां स्वीयां साधनसंपदं प्राप्नोति, तदनु क्षायिकाभेदरत्नत्रयीरूपां प्राप्नोति"। इत्यादिना प्रबुद्धं सर्वं कुटुम्बं श्रीमत्संभवजिनपार्श्वे प्रव्रज्यां प्रतिपन्नं महानन्दमसाधयत् ॥

सम्यक्क्रियोद्भूतनिजात्मधर्मं, आविर्भवत्येव प्रशस्तयोगात् ।
त्यागोऽप्रशस्तस्य सुभानुबन्ध, शीघ्रं विधेयोऽपररागकस्य ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकविंशे स्तम्भे दशाधिकत्रिशततमं व्याख्यानम् ॥ ३१० ॥

## एकादशाधिकत्रिशततमं ३११ व्याख्यानम् ॥

अथ ज्ञानयुक्तक्रियायाः फलमाह—

जिताक्षः साम्यशुद्धात्मा, तत्त्वबोधी क्रियापरः ।
विश्वाम्भोधेः स्वयं तीर्णो—ऽन्येषामुत्तारणे क्षमः ॥ १ ॥

तत्त्वबोधी यथार्थस्वरूपज्ञः क्रिया आत्मसाधनकारणानुयायियोगप्रवृत्तिरूपा स्वगुणानुयायिवीर्य-

प्रवृत्तिरूपा वा तस्यां पर उद्युक्तः, क्रियतेऽसौ क्रिया, सा द्विविधा—साधका बाधका च। तत्रानादिसंसारेऽशुद्धकायिक्यादिव्यापारनिष्पन्ना बाधका। सैव विशुद्धसमितिगुप्त्यादिनिष्पन्ना साधका। अतः संसारक्षपणाय सैव क्रिया संवरनिर्जरारूपा कार्या, सैव च भावक्रिया। तत्र क्रियासङ्कल्पो नैगमेन, सङ्ग्रहेण सर्वे संसारिजीवाः सक्रिया उक्ताः, व्यवहारेण शरीरपर्याप्त्यनन्तरक्रिया, ऋजुसूत्रनयेन कार्यसाधनार्थं योगवीर्यप्रवृत्तिपरिणामरूपा क्रिया, शब्दनयेन वीर्यपरिस्पंदात्मिका, समभिरूढेन आत्मगुणसाधनरूपसकलकर्तव्यव्यापाररूपा, एवंभूतनयेन तत्त्वैकत्वरूपवीर्यतीक्ष्णतासहायकगुणपरिणमनरूपा क्रिया। अत्र स्वरूपग्रहणपरभावत्यागरूपाः क्रिया एव मोक्षसाधकाः, अतो ज्ञाततत्त्वेन तत्त्वसाधनार्थं सम्यक् क्रिया कार्या, यतः—"ज्ञानाचारादयोऽपीष्टाः शुद्धस्वस्वपदावधि"। क्षायिकसम्यक्त्वं यावन्निरन्तरं निःशङ्काद्यष्टदर्शनाचारसेवना, केवलज्ञानं यावत्कालविनयादिज्ञानाचारता निरन्तरम्, यथाख्यातचारित्रादर्वाक् चारित्राचारसेवनम्, परशुक्लध्यानं यावत्तपआचारसेवना, सर्वसंवरं यावद्वीर्याचारस्याराधना, न हि पञ्चाचारमन्तरेण मोक्षनिष्पत्तिः। अतो ज्ञानक्रियापरः समतया शुद्धात्मा पुनर्जितेन्द्रियो भवसमुद्रात् स्वयं तीर्णः पारं गतः, अन्यान् आश्रितानुपदेशेनोत्तारयितुं समर्थो भवति यो हि आत्मारामीति॥

अथ ज्ञानं क्रियायुक्तं हिताय, नैकमेवेत्याह—

क्रियाविरहितं हन्त, ज्ञानमात्रमनर्थकम्। गतिं विना पथज्ञोऽपि, नाप्नोति पुरमीप्सितम्॥ २॥

क्रियामुक्तं संवेदनज्ञानं वाङ्मात्रव्यापारं मनोविकल्परूपं व्यर्थं वन्ध्यं च न मुक्तिसाधकम्, मार्गज्ञाताऽपि गतिं विना चङ्क्रमणेन विना इप्सितपुरं नाप्नोति ॥

पुनस्तदेव दृढयन्नाह—

स्वानुकूलां क्रियां काले, ज्ञानपूर्णोऽप्यपेक्षते ।
प्रदीपः स्वप्रकाशोऽपि तैलपूर्त्यादिकं यथा ॥ ३ ॥

तत्त्वबोधप्राप्तिरूपस्पर्शज्ञानपूर्णोऽपि कार्यसाधनक्षणे स्वकार्यार्हां क्रियामपेक्षते, तदर्थमेवावश्यककरणं मुनीनाम् । यथा प्रदीपः स्वयंप्रकाशोऽपि तैलपूर्त्यादिक्रियां तनोति ॥

अथ क्रियानिष्पादनफलमाह—

गुणवद्बहुमानाद्यै—र्नित्यस्मृत्या च सत्क्रिया ।
जातं न पातयेद्भाव—मजातं जनयेदपि ॥ ४ ॥

सम्यग्यतिधर्मादिगुणवतां बहुमानम्, आदिशब्दात् पापजुगुप्सातिचारालोचनादिकं सर्वं ग्राह्यम् । च पुनर्नित्यस्मृत्या पूर्वगृहीतव्रतस्मरणादिना या सत्क्रिया सा जातं भावं न पातयेत्, अपि चाजातमनुत्पन्नं शुक्लध्यानादिकं जनयेन्निष्पादयेत् । श्रेणिककृष्णादीनां गुणिबहुमानेन, मृगावत्याः पश्चात्तापेन, अतिमुक्तस्य चालोचनेन, रतिसुन्दर्याः स्थिरतया इत्याद्यनेकभव्यानां परमानन्दनिष्पत्तिः ॥

अत्र रतिसुन्दरीसंबन्धः, स चायम्—

साकेतपुरे जितशत्रुपुत्री रतिसुन्दरी, तत्रैव श्रेष्ठिसुता ऋद्धिसुन्दरी, मन्त्रिसुता बुद्धिसुन्दरी, पुरोहित-तनुजा गुणसुन्दरी, चतस्रोऽपि सुरूपाः सुश्राविका धर्मगोष्ठीदेवगुरुस्थले धर्मक्रियां वितन्वत्यः परपुरुषनियमं जगृहुः। इतश्च नन्दपुरविभुना रतिसुन्दरी परिणीता, तस्या रूपलावण्यं सर्वत्र प्रसृतम्। सैकदा हस्तिनागपुरेशेन दूतमुखेनार्थिता। नन्दपुरेशः प्राह—"सामान्यजनः स्वकलत्रं नार्पयति, कथमहं तामर्पयामि? याहि स्वस्थानम्" इति प्रोक्ते स दूतो गत्वा स्वस्वामिनेऽकथयत्। द्वयोर्युद्धे हस्तिनागेशस्य जयोऽभूत्। रतिसुन्दरीं लात्वा स्वस्थानं गतः। साऽर्थिता प्राह—"मम चतुर्मासकं यावच्छीलं वर्तते"। राज्ञाऽचिन्ति—"पश्चादपि ममायत्ताऽस्ति"। सा सदा प्रतिबोधं ददाति। तस्य राज्ञो रागो न याति। ततो नृप आह—"भद्रे! त्वया प्रतिदिनं देशना कृता, तपसा कृशाङ्गी जाता, त्यक्तनेपथ्याऽपि च, तथापि मम मनो वाढं त्वयि रक्तम्। किं स्तूयतेऽङ्गमन्यत्? तव लोचनसुभगत्वमात्रमपि वर्णयितुमशक्यम्"। तया स्वशीललोपके स्वनेत्रे ज्ञात्वा नृपपुरस्तत्क्षणं लोचने निष्कास्य कृपाण्या आकृष्य नृपकरे स्थापिते। राज्ञः खेदः संजातः। सा देशनां चकार। तेन क्षमिता। सोऽत्यन्तं दुःखं दधाति मदर्थमनया लोचने कर्षिते। तस्य दुःखापनोदाय तयाऽऽराद्धा देवता। तया दत्ते द्वे। लोचने। तस्याग्रहतो दिनानि कियन्ति स्थित्वा दीक्षामादात्। इति रतिसुन्दरी॥

अथ द्वितीया ऋद्धिसुन्दरी श्रेष्ठिसुता ताम्रलिप्तीश्रीवणिजा श्रीमता परिणीता । तया सह वणिक् समुद्रे चलितः । पोते भग्ने द्वयमप्येकत्र फलके लग्नं, क्वापि द्वीपे स्थितम्, चिह्नं कृतम्, केनापि वणिजा तच्चिह्नं वीक्ष्य स्वपोते दम्पती नीतौ । वणिजा ऋद्धिसुन्दरीलुब्धेन भर्ता समुद्रे पातितः । सा प्रार्थिता । तयोपदेशः प्रदत्तः । स प्राह—"तव कृते तव पतिः समुद्रे मया पातितः" । सा तत्स्वरूपं ज्ञात्वा कालविलम्बं व्यधत्त । पोते भग्ने सा फलकेन सोपारे प्राप्ता, तत्र फलकेन पूर्वायातेन भर्त्रा सह मेलापको जज्ञे । सोऽपि वणिक् पोते भग्ने फलकं लब्ध्वा तत्रैवागात्, पापेन कुष्ठी जज्ञे । ततो दम्पत्यो-रनयोर्नयनगोचरं गतः । पूर्वोपकारकृतं तं विज्ञाय ताभ्यां स औषधादिना नीरोगः कृतः । तेन तौ क्षमितौ । ताभ्यां स धर्मं ग्राहितः । श्रियमुपार्ज्य स्वस्थानं गतौ । सा दीक्षामाददे । इति ऋद्धिसुन्दरी ॥

उज्जयवयस्ययोर्दृष्टान्तमुक्त्वाऽनन्तरतृप्तिवर्णनावसरे शेषयोर्द्वयोः स्वरूपं लिखिष्यामीति ॥

प्रशान्तचित्तेन जिताहवभावे—नैवाहता सा सफला क्रिया च ।
प्राप्तेऽपि कष्टे स्वक्रियां सुशीला, मुञ्चन्ति नो तां रतिसुन्दरीवत् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकविंशे स्तम्भे एकादशाधिकत्रिशततमं व्याख्यानम् ॥ ३११ ॥

## द्वादशाधिकत्रिशततमं ३१२ व्याख्यानम् ॥

अथ तृप्तातृप्तस्वरूपमाह—

विषयोर्मिविषोद्गारः, स्यादतृप्तस्य पुद्गलैः । ज्ञानतृप्तस्य तु ध्यान—सुधोद्गारपरम्परा ॥ १ ॥

अतृप्तस्य स्वरूपस्वादरहितस्य पुद्गलैरङ्गरागाङ्गनालिङ्गनादिकैः विषय इन्द्रियविलासः स एव विषस्योद्गारः प्रकाशः स्यात् । ज्ञानतृप्तस्य स्वात्मतत्त्वावबोधपूर्णस्य ध्यानं तत्त्वैकत्वं तदेव सुधाऽमृतं तस्योद्गारः तस्य परंपरा श्रेणिर्भवेत् ॥

अत्रार्थे बुद्धिसुन्दरीसंबन्धश्चायम्—

या तु प्रधानसुता बुद्धिसुन्दरी साररूपाऽस्ति सा राज्ञा दृष्टा, दूत्या याचिता, साऽन्यं नरं नेच्छति । राज्ञा कूटरचनां विधाय सकुटुम्बो मन्त्री धृतः । अमात्यं प्राह नृपः—"यदा मदाज्ञां करोषि तदा त्वां मुञ्चामि" । स ऊचे—"यदेव आज्ञापयति तत्प्रमाणम्" । तथोक्ते बुद्धिसुन्दरी रक्षिता स्वान्तःपुरे, सा भृशमर्थिताऽपि नेच्छति, उपदेशं च ददाति । यतः—

संसारे स्वप्नवन्मिथ्या, तृप्तिः स्यादभिमानिकी ।
तथ्या तु भ्रान्तिशून्यस्य, साऽऽत्मवीर्यविपाककृत् ॥ १ ॥

संसारे ऽन्यतश्चतुर्गतिरूपे भावतो मिथ्यात्वादिभावलक्षणे संसरणे अभिमानिकी "मया लब्धवधं

कृत्वेदमनुजूतम् मत्सदृशः कोऽपि जगति नास्तीत्यहं कृती" इति मिथ्याजिमानोत्पन्ना या तृप्तिः सा स्वप्नवन्मिथ्या वितथा कल्पनारूपा एव गत्वरत्वात् परत्वात् स्वसत्तारोधकाऽष्टकर्मबन्धनिदानरागद्वेषोत्पादकत्वात् मरुमरीचिकाकल्पा तृप्तिर्न सुखहेतुः । पुनः ज्रान्तिशून्यस्य सम्यग्ज्ञानोपयुक्तस्य तथ्या सत्या स्वस्वजावाविर्जावानुजवात्मिका तृप्तिः सुखहेतुः किंतु सा तृप्तिः आत्मवीर्यविपाककृत् आत्मनो वीर्यं तस्य विपाकः पुष्टिस्तं करोतीति ॥

सुखिनो विषयातृप्ता, नेन्द्रोपेन्द्रादयोऽप्यहो ।
जिक्षुरेकः सुखी लोके, ज्ञानतृप्तो निरञ्जनः ॥ २ ॥

अहो आश्चर्यं इन्द्र उपेन्द्रः कृष्ण इत्यादयो न सुखिनः । कथंजूताः ? विषयैः मनोज्ञेन्द्रियसंयोगैः अतृप्ता अनेकवनिताविलासषड्रसग्राससुरजिकुसुमवासरम्यावासादिजिः मृडुशब्दाकर्णनवर्णवर्णावलोकनैः असङ्ख्यकालजोगैरप्यतृप्ताः, न चैते तृप्तिहेतवः, असदारोप एवायम् । लोके चतुर्दशरज्ज्वात्मके, एको जिक्षुः आहाराद्यगृद्धः, संयमयात्रार्थं जिक्षणशीलो, निष्परिग्रहः सुखी अस्ति । ज्ञानं स्वरूपावबोधस्तेन तृप्तः, रागाद्यञ्जनश्यामतामुक्तः स्वधर्मजोगत्वात् ॥

इत्याद्यनेकोपदेशैरपि न बुद्धः, तदा तया पञ्चालिका सुशिरा स्वसदृशी मद्यपूरिता कारिता । तदुद्गानान्तरं राजा सरागवाक्यैर्जल्पति, तदा तया प्रछन्नं स्वपश्चाज्ञागतः पुत्तलिकामुखमुद्घाटितम् । पूतिगन्धः प्रसृतः । नृपेणोक्तम्—'किमिदम् ?' । तयोक्तम्—'अङ्गमीदृशमस्ति' । तथापि राज्ञो रागापगमो

न जातः । तया गवाक्षतः झम्पापातो दत्तः, तेन तस्या मूर्छाऽभूत् । ततो नृपस्यानुतापो जातः । सा सज्जीकृता तेन । तस्य परस्त्रीनियमः । सा दीक्षिताऽभूत्, संपूर्णतृप्तिगुणेन शिवमापेति ॥

संपूर्णतृप्तिप्रभवाश्च सद्गुणाः, शीलादयो भान्ति शुभात्मनि भृशम् ।
तां बुद्धिनाम्नीं रमणीमिवाञ्चति, तेषां प्रशंसा जगति क्रमाच्छिवम् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकविंशस्तम्भे
द्वादशाधिकत्रिशततमं व्याख्यानम् ॥ ३१२ ॥



## त्रयोदशाधिकत्रिशततमं व्याख्यानम् ३१३ ॥

अथ लेप्यालेप्यमाह—

संसारे निवसन् स्वार्थ—सज्जः कज्जलवेश्मनि ।
लिप्यते निखिलो लोको, ज्ञानसिद्धो न लिप्यते ॥ १ ॥

निखिलः समस्तो लोकः कज्जलवेश्मनि रागादिपापस्थानकविभावे तन्निमित्तभूतधनस्वजनादिग्रहे संसारे निवसन् स्वार्थः अहङ्कारादिरूपः तत्र सज्जः सावधानः लिप्यते, तथा ज्ञानसिद्धो हेयोपादेयपरीक्षापरीक्षितवस्तुस्वरूपो न लिप्यते ॥

अत्रार्थे गुणसुन्दरीसंबन्धः, स चायम्—

श्रावस्त्यां पुरोहितसुतेन गुणसुन्दरी परिणीता। तस्यां साकेतपुरद्विजो रक्तः। ततः पत्नीं गतो निद्रानाह—"मम गुणसुन्दरी जवतु युष्माकं चार्था जवन्तु" इति प्रोच्य ते तत्र नीताः। द्विजेन सुन्दरी गृहीता। क्वापि नगरे स्थित्वा तां प्राह—'मम पत्नी जव'। तयोक्तम्—'नियमोऽस्ति'। कियन्ति दिनानि सा उत्क्षालनं करोति। जैषज्ययोगेन साऽशुचिगुणिताङ्गी स्थिता। द्विजेन जातः। तद्भावं विज्ञाय सा प्राह—'मम पितुः पार्श्वे मां नय'। तेन तथा कृतम्। द्विजो विरागी जस्तया सज्जितः। गुरुपार्श्वे नीतः। तत्रेति धर्मदेशनामश्रृणोत्—"जीवो निर्लेपगुणान्वितोऽनेकगुणा-नाप्नोति। किंनामा निर्लेपः? चेतनस्य सकलपरजावसंयोगाज्जावेन स्वजावावस्थानं निर्लेपः। यतः—

लिप्यते पुद्गलस्कन्धो, न लिप्ये पुद्गलैरहम्।
चित्रैर्व्योमाञ्जनेनैव, ध्यायन्निति न लिप्यते ॥ १ ॥

लिप्यतेऽन्योऽन्याश्लेषेण संक्रमादिना पुद्गलस्कन्धः अन्यैः पुद्गलैर्लिप्यते उपचयी स्यात्। अन्यदा सर्पदष्टद्वि-सर्वेषां जावनावचनम्, अहं निर्मलश्चिद्रूपो न पुद्गलाश्लेषी। अहमिति एव नास्ति, संयोगसंबन्धस्त्वौपाधिकः। यथा व्योम आकाशं चित्रैरञ्जनैः संलिप्यमानमपि न लिप्यते तथाऽहमपि अमूर्तात्मस्वजावः पुद्गलैरेकक्षेत्रावगाढैर्न लिप्ये। वस्तुवृत्त्या पुद्गलात्मनोस्तादात्म्यसंबन्ध यो ह्यात्मस्वजाववेदी स स्ववीर्यं ज्ञाना-

दिशक्तिं आत्मनि व्यापारयन् अभिनवकर्मग्रहणैर्न लिप्यते । यावदात्मशक्तिः परानुयायिनी तावदाश्रवः, यावत् स्वशक्तिः स्वरूपानुयायिनी तावत्संवरः ॥ यतः—

तपःश्रुतादिना मत्तः, क्रियावानपि लिप्यते । भावनाज्ञानसंपन्नो, निष्क्रियोऽपि न लिप्यते ॥ २ ॥

जिनकल्पादितुल्यक्रियाभ्यासप्रवृत्तिर्न धर्मः । भावनाऽनुप्रेक्षा तज्ज्ञानमग्नो निष्क्रियोऽपि न लिप्यते ॥ यतः—

न कम्मुणा कम्म खवंति बाला, अकम्मुणा कम्म खवंति वीरा ।
मेहाविणो लोभमया वतीता, संतोसिणो नो पकरंति पावं ॥ १ ॥
जहा कुम्मो सअंगाइं, सए देहे समाय(ह)
एवं पावाइ मेहावी, अज्झत्ते एं समाहरे ॥ २ ॥

इत्यादिधर्मज्ञानोपदेशः श्रीगुरुणोदितः । तं श्रुत्वा स द्विजो बुद्धः परदारनियमं जग्राह । सा गुणसुन्दरी स्वरूपसौन्दर्यकृशीकरणाय साध्वी धर्मक्रियामकरोत् । क्रमाद्दिवं प्रापेति ॥

अथ पूर्ववर्णिता रतिसुन्दर्याद्याश्चतस्रो दिवं गत्वा चम्पायामिभ्यसुताः पृथक् पृथगुत्पन्नाः विनयन्धरेण परिणीताः । एकदा राजा तासां तुल्यस्वरूपमेकयोन्युत्पन्नानामिव लावण्यं दृष्ट्वाऽनुरागी बभूव । राज्ञा श्रेष्ठिना सह कूटमैत्री कृता । राजमान्यत्वेन राजान्तःपुरे स व्यवहारं चक्रे । अन्यदा राज्ञा वणिजो हस्तेन लिखापिता गाथैका, सा चेयम्—

एस छेर विअरकणि, अज्ज उ जच्चस्स तुह विर्तअम्मि ।
सा रयणी चउजामा, जामसहस्सं च वोलीणा ॥ १ ॥

श्रेष्ठिना क्रमेण सा वार्ताऽपि विस्मृता । सा गाथा नृपेण सभाग्रे कथिता 'ममान्तःपुरं प्रति प्रेषिता श्रेष्ठिना' इति तत्पत्नीग्रहणार्थं कूटालं दत्त्वा श्रेष्ठी गुप्तौ क्षिप्तः, तत्पत्न्यश्चतस्रोऽन्तःपुरे मुक्ताः । तच्च-यशीलानुभावाद्ब्रह्मलोपाभावात्ताश्चतस्रोऽत्यन्तं कुरूपा अभवन् । राजा वीक्ष्य भीतः । सकुटुम्बः श्रेष्ठी मुक्तः । पत्नीनां शीलप्रभावो भुवि जृम्भितः ॥

अब्रह्मलेशो न कदा तदङ्गे—ष्वाविर्बभूवैहिकसौख्यसङ्गैः ।
लेपैर्न लिप्ताः प्रविशुद्धकृत्याः, स्त्रियश्चतस्रस्त्रिदिवत्वमापुः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकविंशस्तम्भे
त्रयोदशाधिकत्रिशततमं व्याख्यानम् ॥ ३१३ ॥

## चतुर्दशाधिकत्रिशततमं ३१४ व्याख्यानम् ॥

अथ मन्त्रित्वं प्राज्ञो नाङ्गीकरोतीत्याह—

ध्यायत्यशुभकर्माणि, प्रत्यहं राष्ट्रचिन्तया ।
अनेकपापपाथोधि—मन्त्रित्वं नाद्रियेत्सुधीः ॥ १ ॥

स्पष्टः। ज्ञातं चेदम् (शकटालमन्त्रिकथा)—

पाटलीपुरे कोणिकात्मजोदायिक्ष्मापान्वये नन्दभूपोऽभूत्। तस्य शकटालमन्त्री। तस्य पत्नी लक्ष्मीवती। तयोः सुतौ द्वौ स्थूलभद्रश्रीयकाह्वौ अभूताम्। तत्र चातुर्यरूपश्रीकोशा कोशाभिधा पण्यस्त्री अभवत्। एकदा स्थूलभद्रस्तां वीक्ष्यानुरक्तस्तस्या गृहे तस्थौ। ततो विविधविलासैस्तयोर्निबिडं प्रेमाभूत्। उक्तं च—

> दृढानुरागिणौ भिन्न—देहावप्येकमानसौ।
> अन्योऽन्यविरहं नाधि—सेहाते नखमांसवत्॥ १॥

तन्मनाः स निजगृहं नागात्, द्वादशाब्दीमुवास। इतश्च वररुचिः कविर्नव्यैरष्टोत्तरशतकाव्यैरन्वहं नन्दभूपमस्तवीत्। तानि श्रुत्वा भूपो हृष्टो मन्त्रिवक्त्रं व्यलोकयत्। मन्त्री तु तस्य मिथ्यात्वमतेः कवेः प्रशंसां नाकरोत्। तदा तुष्टोऽपि नृपो भट्टाय दानं न ददौ। विप्रोऽपि धीसखाधीनं नृपं विवेद। ततो लोकोक्त्या स्त्रीवशं तं सचिवं विज्ञाय द्विजो मन्त्रिभार्यां स्वार्थसिद्ध्यै भेजे। अन्येद्युः संतुष्टया तया कार्यं पृष्ट इदमब्रवीत्—"तव भर्ता मे काव्यानि राज्ञः पुरस्तात् प्रशंसतु"। ततस्तदुपरोधेन तया पतिर्विज्ञप्तः, सोऽवदत्—"जैनदर्शनिनो मे तत्काव्यप्रशंसनं न युक्तं, तथापि हे प्रिये! त्वदाग्रहाधीनः करिष्ये"। ततः सभायां मन्त्रिणा तस्य कवेः कला स्तुता। तुष्टो नृपोऽष्टाग्रदीनारशतं तस्मै ददौ। इत्थं नवं काव्यं श्रुत्वा प्रत्यहं तावद्धनं तस्मै नृपोऽदात्। तेन रिक्तीभवन्तं कोशं वीक्ष्य मन्त्री भूपं

न्यषेधयत्—"स्वामिन् ! अधुना तु जीर्णानि काव्यानि पठति, यद्यत्र प्रत्ययो न स्यात्तदा सप्तापि मत्सुताः प्रभोः पुरस्तदुक्तान्येव पठिष्यन्ति" । इति श्रुत्वा विस्मयापन्नो नृपो जवनिकान्तरे सप्तापि मन्त्रिपुत्रीः समाहूय न्यवीविशत् ।

जक्खा १ य जक्खदिन्ना २, भूया ३ तह चेव भूअदिन्ना ४ य ।
सेणा ५ वेणा ६ रेणा ७, भयणीओ थूलभद्दस्स ॥ १ ॥

तासु ज्यायसी सकृदपि श्रुतं शास्त्रमाशु अग्रहीत् । एवमेकवारवृद्ध्या अन्या अपि द्रुतं जगृहुः यावद्रेणा सप्तकृत्वः काव्याद्याकर्ण्य सत्वरं गृणाति । अथ वररुचिपठितकाव्यान्येकवारं श्रुत्वा यक्षा तद्रूपाण्येव पपाठ । द्वितीया द्विवारं श्रुत्वा च, एवं सप्ताप्यूचुः । ततो नृपो द्विजमेवमाह—"परकाव्यानि स्वकीयीकृत्य पठसि" इति तिरस्कृतः । ततो वररुचिर्गङ्गाजले गत्वा यन्त्रं व्यधात् । तन्मध्ये वस्त्रबद्धामष्टाग्रदीनारशतयुक्तां ग्रन्थिकां स्थापितवान् । प्रातर्गङ्गां स्तुत्वाऽसौ तद्यन्त्रं चरणेनाक्रमत, तदा तद्दीनारग्रन्थिरुत्प्लुत्य तत्करे न्यपतत् । लोकाः प्रेक्ष्य विस्मिताः नृपमिति प्रोचुः—"अहो ! गङ्गाप्यस्मै दीनारान् प्रत्यहं स्तुता सती दत्ते" । तन्नृपो मन्त्रिणं स्माह । मन्त्री प्रोचे—"प्रभो ! प्रातः स्वयं वयं द्रक्ष्यामः" । ततो मन्त्रिणा सायं शिक्षां दत्त्वा तत्र चरः प्रेषितः । सोऽपि शरस्तम्बनिलीनः पश्यन्नास्थात् । तदा स द्विजस्तत्र एत्य गङ्गापयोयन्त्रेऽष्टोत्तरदीनारशतग्रन्थिं न्यस्य गृहं ययौ । तच्चरेण निष्कास्य तत्र कर्कशकर्कराण्यस्य मन्त्रिणे दत्तम् । अथ प्रजाते द्विजो गङ्गां स्तोतुं प्रववृते, मन्त्रियुत-

॥१२२॥

नृपादय एत्य प्रेक्षन्ते। स पुनः पुनर्गङ्गां स्तुत्वा चरणेन यन्त्रचालनं करोति, परं दुर्जनचिन्तितमिव करोदरे किञ्चिन्नाप। ततः पाणिना तज्जले ग्रन्थिं विलोकयामास, तदाऽमात्य एवमूचे—"अद्य जाह्नवी किं ते न दत्ते? किं मुधुन्यासीकृतं द्रव्यं गवेषयसि? गृहाणेदं निजं द्रव्यं, अद्येयं मम प्रसन्नाऽभूत्"। नृपोऽपि स्वदत्तधनमुपलक्ष्य तं द्विजं निनिन्द। अथ न्यग्मुखः स नित्यं मन्त्रिछलानि गवेषयति। अन्यदा श्रीयकविवाहयोग्यसामग्रीं मेलयति अनेकशस्त्रवस्त्रहयगजादिकाम्। तद्वीक्ष्य द्विजश्छलं प्राप्य नैशालिकान् (छात्रान्) इत्यशिक्षयत्—

यत्कर्ता शकटालोऽयं, तन्न जानाति पार्थिवः।
हत्वा नन्दं तस्य राज्ये, श्रीयकं स्थापयिष्यति॥ १॥

स्थाने स्थाने डिम्भा नित्यमेवं पठन्ति, तन्निशम्य नृपो दध्यौ—

"बालका यच्च भाषन्ते, भाषन्ते यच्च योषितः।
औत्पातिकी च या भाषा, सा भवत्यन्यथा न हि॥ १॥"

तत्प्रत्ययाथ राज्ञा तद्गृहे चरः प्रेषितः। तेनैत्य सर्वं तथैव प्रोक्तम्। ततः सेवाऽवसरे प्रणामं कुर्वतो मन्त्रिणः कोपाद्राजा पराङ्मुखस्तस्थौ। तज्ज्ञावज्ञो मन्त्री गृहमेत्य श्रीयकं प्राह—"राज्ञा कस्यचित्पैशुन्येनापूर्वः कोपः कृतः, अकस्मादस्माकं कुलक्षयचिह्नमुपस्थितम्, अतो हे वत्स! यदाहं राजानं नमामि तदाऽसिना मे शिरश्छिन्द्याः, तदनु नृपेण पृष्टे स्वामिनोऽभक्तः पिताऽपि वध्य इति वदेः"। श्रीयको

रुदन्नेवमवदत्—"हे तात! एवं घोरं कर्म श्वपचोऽपि किं करोति?"। अमात्योऽब्रवीत्—"एवं विचारणां कुर्वन् वैरिणां मनोरथान् पूरयसि, राजा यम इवोद्दण्डः सकुटुम्बं मां यावन्न निहन्ति तावन्ममैकस्य क्षयात्कुटुम्बं रक्ष, अहं तु मुखे तालपुटविषं न्यस्य नृपं नमस्यामि तदा परासोर्मे शिरश्छिन्द्याः, तेन तव पितृहत्या न स्यात्"। पित्रैवं बोधितः स प्रतिपेदे। ततो राजसमक्षं श्रीयकेन तत्कृतम्। तदा नृपः ससंभ्रममिति प्राह—'हे वत्स! किमिदं दुष्कर्म कृतम्?'। श्रीयकोऽवक्—'स्वामिनाऽयं द्रोही ज्ञातस्ततो निहतः; भूपाभिप्रायकरा भृत्या भवन्ति, यतः परिशिष्टपर्वणि—

भृत्यानां युज्यते दोषे, स्वयं ज्ञाते विचारणा।
स्वामिज्ञाते प्रतीकारो, युज्यते न विचारणा ॥ १ ॥

कृतौर्ध्वदेहिकं श्रीयकं नन्दनृपोऽवक्—'सर्वव्यापारसहितेयं मुद्रा गृह्यताम्'। श्रीयको नृपमब्रवीत्—"हे पूज्य! पितृतुल्यो ममाग्रजः स्थूलभद्रः कोशाया गृहे पितृप्रसादान्निर्बाधं भोगानुपभुञ्जानोऽस्ति, तस्य द्वादशाब्दा गताः सन्ति"। नृपेण स आहूय तदर्थमुदितः, स प्राह—'स्वामिन्! विचार्येदं करिष्यामि'। नृपोऽवदत्—'अद्यैव पर्यालोचय' इत्युक्तः सोऽशोकवनिकां गत्वा चेतसेति विममर्श—"राजकार्यकरो मत्पिता कर्णचञ्चलनृपेणाकालमृत्युना मारितः, अतो राजनियोगिनां क्व सुखं भवेत्! उक्तं च—

त्यक्त्वा सर्वमपि स्वार्थं, राजार्थं कुर्वतामपि।
उपद्रवन्ति पिशुना, उद्भ्रान्तानामिव द्विकाः ॥ १ ॥

यथा स्वदेहद्रविण—व्ययेनापि प्रयत्यते ।
राजार्थे तद्वदात्मार्थे, यत्यते किं न धीमता ? ॥ २ ॥"

इत्यादिवैराग्यभावनापरः पञ्चमुष्टिभिः केशोत्पाटनं व्यधात् । रत्नकम्बलदशानां रजोहरणं चकार । ततः स सदसि गत्वा पार्थिवमवक्—'मयेदमालोचितं, धर्मलाभस्तेऽस्तु' इत्युक्त्वा राजसदनान्निः-ससार । 'किमेष कपटं कृत्वा वेश्यागृहं पुनर्यायात् ?' इत्यप्रत्ययतः क्ष्मापो गवाक्षेण निरैक्षत । स तु कुथितकुणपदुर्गन्धास्पदे गच्छन् घ्राणमिव तद्गृहाभिमुखं वक्त्रममोटयत् । तथा व्रजन्तं तं वीक्ष्य स भूधवो दध्यौ—"भगवान् वीतरागोऽसौ, धिग्मेऽस्मिन् कुचिन्तितम्" इत्यात्मानं निनिन्द । स्थूलभ-द्रोऽपि श्रीसंभूतिविजयान्तिके सामायिकोच्चारपूर्वकं दीक्षां प्रत्यपद्यत ।

अथ श्रीयको राज्ञा पितृपदे स्थापितः । तत स श्रीयको नित्यं कोशागृहे याति । सा तदनुजं दृष्ट्वा स्थूलविरहदुःखेनारोदीत्, ततस्तां श्रीयकोऽवोचत्—"आर्ये ! किं कुर्महे वयम् ? असौ पापो वररुचिर्ममं तातमघातयत्" । साऽऽह—"तर्हि कश्चिद्वैरनिर्यातनोपायं विचारय" । सोऽवक्—"यदि चायं मद्य पिबेत्तदा वैरशुद्धिर्भवेत्, अतस्त्वममुं मद्यपं कारय" । साऽपि तद्वाक्यं स्वीचकार । ततः सा केनचि-दुपायेन तं मद्यपं चक्रे । कोशाऽपि तद्वृत्तान्तं श्रीयकाय न्यवेदयत् । सोऽपि तुष्टो भूपपर्षद्यगात्, तदा नृपः शकटालगुणान् सस्मार, तदा श्रीयकः प्राह—"स्वामिन् ! वयं किं कुर्महे ? सुरापायी वर-रुचिः सर्वमिदं पापं व्यधात्" । नृपोऽपृच्छत्—'किमेष मद्यं पिबति ?' । सोऽवक्—'स्वामिन् ! दर्शयिष्यामि' ।

ततो द्वितीयेऽह्नि सभ्यानां राज्ञश्च श्रीयक एकैकं पद्ममार्पयत् शिक्षितेनानुजीविना मदनफलभावितं पाथोरुहं वररुचेरदापयत् । नृपादयस्तानि घ्रायं घ्रायमवर्णयन् । सोऽपि भट्टः पद्मं निजं घ्राणाग्रे घ्रातुं नयन् चन्द्रहाससुरां रात्रिपीतां सद्योऽवमत् । तद्वीक्ष्य भर्त्सितः सभ्यैः सभातो निर्जगाम । स स्वनिन्दापनोदाय प्रायश्चित्तचिकीर्षुर्द्विजानित्यपृच्छत्—'किं मद्यपानाघघातकं ?' । तैरुक्तम्—'तापितत्रपुपानं मदिरापानपापहृत्' । इति श्रुत्वा सोऽपि सद्यस्तन्निपीय व्यपद्यत ।

इतश्च स्थूलभद्रोऽपि संभूतविजयप्रभून् सेवमानः श्रुताम्भोधेः पारं प्राप । यदर्थे भोगादिकं त्यक्तं तदर्थमसाधयत् प्रत्यहम् ।

किं करोमि सचिवास्पदमुच्चैः, शैशवाद्युवतियोगविलासैः ।
यौवनं मम गतं खलु मौग्ध्यात्, श्रीयकाग्रज इयेष च भावम् ॥ १ ॥
रामारमाभी रसनादिसौख्यं, भुक्तं मनोऽभीष्टमनेकधात्मन् ।
किं चास्त्यमात्ये सुखमौपजीव्ये, ध्यात्वेत्यनूचानपदं बभार ॥ २ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकविंशस्तम्भे
चतुर्दशाधिकत्रिशततमं व्याख्यानम् ॥ ३१४ ॥

## पञ्चदशाधिकत्रिशततमं ३१५ व्याख्यानम् ॥

अथ निःस्पृहतामाह—

स्वरूपप्राप्तितोऽधिकं, प्राप्तव्यं नावशिष्यते । इत्यात्मराजसंपत्त्या, निःस्पृहो जायते मुनिः ॥ १ ॥

स्वरूपं ज्ञानादिरत्नत्रयाव्याबाधामूर्त्तानन्दरूपाविच्छिन्नसिद्धत्वशुद्धपारिणामिकलक्षणं तस्य प्राप्तितो लाभादधिकमन्यद्वस्तु लब्धुं योग्यं नावशिष्यते इत्यात्मभूपसंपत्त्या मुनिर्धीपरिज्ञया त्यक्तद्रव्यभावाश्रवः साधुर्निःस्पृहः सर्वशरीरपरिग्रहादिषु मूर्छारहितो जायते ॥

अत्रार्थे कालवैशिकभूपर्षिसंबन्धः । स चायम्—

मथुराधिपो जितशत्रुः । सोऽन्यदा कालाह्वां वेश्यां दृष्ट्वा मोहितोऽन्तःपुरे चिक्षेप । तया सह भोगान् भुञ्जानस्य तस्य कालवैशिकनामा सुतोऽभवत् । सोऽन्यदा निशि सुप्तः शृगालानां शब्दं श्रुत्वा स्वभृत्यानिति पप्रच्छ—'केषां शब्दोऽसौ श्रूयते ?' । ते प्राहुः—'फेरूणाम्' इति । कुमारः प्राह—'एतान् बद्ध्वा काननादानयत' । तेऽप्येकं जम्बूकं बद्ध्वा वनादानीय तस्मै ददुः । क्रीडारतिः स तं वारंवारं जघान । स हन्यमानः खिखीति ध्वनिं यथा यथा चक्रे तथा तथा स उच्चैर्जहर्ष । तेनैवं मार्यमाणो गोमायुर्व्यपद्यत, अकामनिर्जरया व्यन्तरत्वमवाप ।

एकदा स कानने इति साधुदेशनां शुश्राव—

निष्कासनीया विदुषा, स्पृहा चित्तगृहाद्बहिः । अनात्मरतिचाण्डाली—सङ्गमङ्गीकरोति या ॥ १ ॥

विदुषा पण्डितेन आत्मसमाधिसाधनोद्यतेन स्पृहा पराशा चित्ततो दूरीकरणीया, या स्पृहा अनात्मानः परभावास्तेषु रतिरेव चाण्डाली तस्याः सङ्गमङ्गीकरोति, अतः स्पृहा त्याज्या ॥

जे परभावे रत्ता, मत्ता विसएसु पाववहुलेसु । आसापासनिबद्धा, भमंति चउगइमहारन्ने ॥ १ ॥

निरस्तपराशापाशा निर्ग्रन्थाः स्वरूपचिन्तनस्वरूपरमणानुभवलीनाः पीनास्तत्त्वानन्दे रमन्ते । यतः—

तिणसंथारनिसन्नो, मुनिवरो भट्टरागमयमोहो । जं पावइ मुत्तिसुहं, कत्तो तं चक्कवट्टी वि ॥ १ ॥

आयसहावविलासी, आयविसुद्धोऽवि यो निये धम्मे । नरसुरविसयविलासं, तुच्छं निस्सार मन्नंति ॥२॥

इत्यादिधर्मवाक्यात्प्रबुद्धः प्रव्रज्यामुपाददे । अन्यदा एकाकिविहारप्रतिमां प्रतिपन्नो विहरन् मुद्गशैलपुरेऽगात्, तदा तस्य मुनेः अर्शोरोगः प्रादुरासीत्, तेन व्याधिना पीड्यमानो न जातु मनसाऽपि भिषजं भैषजं चैषीत्, किं तु शरीरे निःस्पृहो जातः । तत्पुरेशस्तस्य साधोः स्वसृपतिर्वर्तते । मुनेः स्वसा सोदरमर्शोरोगपीड्यमानं ज्ञात्वा तस्य चिकित्साविषयमभिग्रहमवबुध्य स्नेहमोहिताऽर्शोघ्नमौषधं भिक्षया सार्धं तस्मै बान्धवसाधवेऽदात् । सोऽथ भुक्तदाहारस्तदन्तर्गतमौषधं ज्ञात्वा जातानुतापोऽन्तर्दध्यौ—"अहो ! अनुपयोगेनायुक्तं मया कृतं यदर्शोजन्तुनाशनाभिग्रहस्य भङ्गोऽधिकरणग्रहणम्, स्यादेवाहारार्थिनामेवम्, तदहमाहारं जहामि" इति ध्यात्वा पुरान्निर्गत्य भूधरमारुह्य स महामुनिरनशनं विदधे ।

तं चात्तानशनं ज्ञात्वा नृपः स्वनरैररक्षयत् अस्योपसर्गं कश्चिन्मा कार्षीत् । इतश्च यः शिवो हतस्तेन, स व्यन्तरोऽभूत्, स चावधिना स्वप्राग्भववैरं संस्मृत्य तं मुनिमुपद्रोतुं सवत्सां शिवां व्यकरोत्, नृपायुक्ता नरा यावत्साधुसन्निधौ तस्थुस्तावत्तं शृगाली न दुनोति, यदा ते नराः पश्चाद्गच्छन्ति तदा शिवा खिखीतिकुर्वाणा मुनिं मुहुर्मुहुश्चखाद । तां शिवोत्पादितपीडामर्शोबाधां च सहमानो निःस्पृहभावं नामुञ्चत्, किं तु धर्मध्यानं स्थिरं दध्यौ । दुःखे रोगोत्थिते सत्यार्तध्यानविवर्धके शिवोत्पादिते चोग्ररौद्रध्यानानुबन्धके स नार्तरौद्रे व्यधात् । एवं पञ्चदश दिनानि यावत्तां शृगालीकृतव्यथां सहमानो महासत्त्वोऽनशनं प्रपाल्य कर्मक्षयेण केवलज्ञानमासाद्य महामुनिर्महानन्दपदमवाप ॥

इति निःस्पृहभावतो रुजं, परिषेहे मुनिकालवैशिकः ।
सकलैरपि साधुभिस्तथा, सहनीयोऽयमुदारनिःस्पृहैः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तावेकविंशस्तम्भे पञ्चदशोत्तरत्रिशततमं व्याख्यानम् ॥ ३१५ ॥

## समासोऽयमेकविंशः स्तम्भः

## ॥ अथ द्वाविंशः स्तम्भः २२ ॥

### षोडशाधिकत्रिशततमं ३१६ व्याख्यानम् ॥

सम्यक्त्वमुनित्वयोरैक्यमाह—

मन्वते यो जगत्तत्त्वं, स मुनिः परिकीर्तितः । सम्यक्त्वमेव तन्मौने, मौनं सम्यक्त्वमेव च ॥ १ ॥

यः शमादिपञ्चलक्षणलक्षितः जगत्तत्त्वं जीवाजीवाद्यात्मकं जानाति स मुनिः अवगततत्त्वः कथितः श्रीपूज्यैः । मौने निर्ग्रन्थे सत्येव तत् सम्यक्त्वं यत् यथा ज्ञातं तत्तथा कृतमिति तत्सम्यक्त्वमेव, मुनित्वम् पुनः सम्यक्त्वमेव मौनं निर्ग्रन्थत्वम् ।

अत्र यः शुद्धश्रद्धाननिर्धारित आत्मस्वभावस्तत्रावस्थानं ( तत् ) चरणम्, यच्च सम्यग्दर्शनेन निर्धारितं सम्यग्ज्ञानेन विभक्तं स्वरूपोपादेयत्वं तच्च ( स्य ) तथैव अनुभवनं रमणं चरणं मुनित्वम्, अतः सम्यक्श्रद्धासहितकरणं तत्, एवंभूतनयेन सम्यग्दृष्टिभिः यत् चतुर्थगुणस्थानस्थैः साध्यत्वेन निर्धारितं तथाकरणेन यत्र सुनिष्पादितं सिद्धावस्थायां चेत्यनेन शुद्धसिद्धत्वस्य धर्मनिर्धारः सम्यक्त्वम् ।

अत्रार्थे कुरुदत्तसंबन्धोऽयम्—

गजपुरे महेभ्यपुत्रः कुरुदत्तः महासुखी । स एकदा श्रीधर्मगुरुदेशनासमये गतः इति श्रीस्याद्वादामृतवाक्यं हृदये बभार— " आत्मज्ञानमाप्यधर्ममेवं विवदन्ति अनेकदर्शनान्तरीयाः प्राणायामन्ति रेचकादि-

पवनमवलम्बयन्ति मौनं भ्रमन्ति गिरिवननिकुञ्जेषु, तथाप्यर्हत्प्रणीतागमश्रवणात्स्याद्वादं स्वपरपरीक्षापरीक्षितं स्वस्वभावावबोधमन्तरेण न कार्यसिद्धिः । यतः—

आत्माज्ञानभवं दुःख–मात्मज्ञानेन हन्यते ।
अभ्यस्यं तत्तथा तेन, येनात्मा ज्ञानमयो (नवान्) भवेत् ॥ १ ॥

अत्रोपादानस्वरूपे षट्कारकचक्रमय एवात्मा–स्वयमेव कर्ता कार्यरूपोऽपि का (क) रणरूपः संप्रदानापादानाधिकरणः स्वयमेवेति, महाभाष्येऽप्युक्तम्–आत्मा जीवः कर्तारूप आत्मानमनन्तशुद्धधर्मकार्यत्वायत्तमात्मनाऽऽत्मीयशक्तिकरणभूतेन आत्मने आत्मधर्मप्रादुष्करणाय आत्मनः परभावात् पृथक् आत्मनि आधारभूतेऽनन्तधर्मपर्यायपात्रभूते इति, अत आत्मस्वरूपमग्न एव मुनिः (वर्तते) । यतः—

यथा शोफस्य पुष्टत्वं, यथा वा वध्यमण्डनम् ।
तथा जानन् भवोन्माद–मात्मतृप्तो मुनिर्भवेत् ॥ १ ॥

यथा शोफस्य पुष्टत्वं शरीरस्थौल्यं न पुष्टत्वे इष्टम् । अथवा यथा वध्यस्य मारणार्थं स्थापितस्य मण्डनं करवीरमालाद्यारोपणात्मकम्, एवंरूपं भवोन्मादं जानन् भवस्वरूपमेवंविधं जानन् मुनिः; समस्तपरभावत्यागी आत्मतृप्तः आत्मस्वरूपेऽनन्तगुणात्मके तृप्तः तुष्टः भवेत् संसारस्वरूपमसारं निष्फलमभोग्यं तुच्छं ज्ञात्वा मुनिः स्वरूपे मग्नः स्यात् ।

इत्याद्यध्यात्मस्वरूपं श्रीगुरुमुखाच्छ्रुत्वा प्रबुद्धः कुरुदत्तः प्रव्रज्यां जग्राह । श्रुतं चाधीत्यान्यदा एकाकिविहारप्रतिमां प्रतिपेदे । सोऽथैकदा विहरन् साकेतनगरान्तिके तुर्यपौरुष्यां धैर्यमन्दरः प्रतिमया तस्थौ, तदा चौराः कुतश्चन ग्रामाद्गोधनं हृत्वा तस्य मुनेः पार्श्वस्थेनाध्वना ययुः । अथ साधुपार्श्वं गोधनान्वेषका अप्यन्वेयुः, तत्र ते द्वौ मार्गौ दृष्ट्वा इति तं मुनिं पप्रच्छुः—"हे साधो! सगोधनाश्चौराः केन पथा जग्मुः?" तच्छ्रुत्वाऽपि मुनिस्तेषां न किञ्चिदुत्तरं ददौ । यतः—

सुलभं वागनुच्चारं मौनमेकेन्द्रियेष्वपि । पुद्गलेष्वप्रवृत्तिस्तु योगिनां मौनमुत्तमम् ॥ १ ॥

वागनुच्चारं वचनाप्रलापरूपं मौनं सुलभं सुप्रापं, तत् एकेन्द्रियेष्वप्यस्ति, तन्मौनं मोक्षसाधकं नास्ति, पुद्गलेषु अप्रवृत्तिः रम्यारम्यतयाऽव्यापकत्वं मौनमुत्तमं प्रशस्यम् । स्वरूपलीनः स कुरुदत्तमुनिः कथं सावद्यं वाक्यं सत्यमपि जल्पति? यतः 'न सत्यमपि भाषेत परपीडाकरं वचः' ततस्ते चौराः कुपिता वारिक्लिन्नां मृत्तिकामादाय ते दुष्टचेतसः तस्य मुनेः मौलौ पालीं बबन्धुः, तत्र क्रोधविह्वलास्ते चिताङ्गारान् क्षिप्त्वा ययुः, तैर्ज्वलन्मौलिरपि मुनिः हृद्येवमचिन्तयत्—

सह कलेवर! खेदमचिन्तयन्, स्ववशता हि पुनस्तव दुर्लभा ।
बहुतरं च सहिष्यसि जीव हे, परवशो न च तत्र गुणोऽस्ति ते ॥ १ ॥

इति ध्यायन् यतिर्न हि मौलिं मनश्चाकम्पयत् । तमुपसर्गं सहित्वा परलोकमसाधयत् ।

मौने मुनित्वं परिज्ञाय सम्य-ग्ज्ञानादिमन्तः कुरुदत्तवद्ये ।
चरन्ति तन्मौनमपास्य दम्भान् ते स्युर्ध्रुवं स्वात्पदसौख्यसक्ताः ॥ १ ॥

॥ इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादवृत्तौ द्वाविंशे स्तम्भे षोडशाधिकत्रिशततमं ३१६ व्याख्यानम् ॥

## सप्तदशाधिकत्रिशततमं व्याख्यानम् ३१७ ॥

अथ विद्यामविद्यां चाह—

यः पश्येन्नित्यमात्मानं, सा विद्या परमा मता । अनात्मसु ममत्वं य-दविद्या सा निगद्यते ॥ १ ॥

अनात्मसु पुद्गलद्रव्येषु यन्ममत्वं 'इदं शरीरमहमेव' इति ज्ञानं साऽविद्या एव भ्रान्तिरेव । एतदर्थयथार्थावधारणे कृतार्थे समुद्रपालसंबन्धश्चायम्—

समुद्रपालकथा—

चम्पायां समुद्रदत्ताह्व इभ्यः श्रीमद्वीरपरमेश्वरतः प्रतिबुद्धः सुश्राद्धो निर्ग्रन्थप्रवचने कोविदोऽभूत् । निर्ग्रन्थप्रवचनं चेदम्—

तरङ्गतरलां लक्ष्मी—मायुर्वायुवदस्थिरम् । अदभ्रधीरनुध्याये—दभ्रवद्भङ्गुरं वपुः ॥ १ ॥

अदभ्रधीः-पुष्टबुद्धिः लक्ष्मीं तरङ्गवत् चपलाम्-अस्थिरामनुध्यायेत्, आयुः वायुवदस्थिरं प्रतिसमय-

विनश्वरमध्यवसायादिविशेषयुक्तं चिन्तयेत्; वपुः—शरीरम् अभ्रवद्भङ्गुरं भङ्गशीलं चानुध्यायेत् । शुचीन्यप्यशुचीकर्तुं, समर्थेऽशुचिसंभवे । देहे जलादिना शौचं, भ्रमो मूढस्य दारुणः ॥ २ ॥ मूढस्य अज्ञस्य यथार्थोपयोगरहितस्य देहे—इन्द्रियायतने जलादिना—नीरमृत्तिकादिसंयोगेन शौचं भ्रमः श्रोत्रियादीनां दारुणः—भयकृत् । कथंभूते देहे ? शुचीन्यपि—कर्पूरादीन्यपि अशुचीकर्तुं–मलिनीकर्तुं समर्थे देहसङ्गान्मलयजविलेपनादयोऽप्यशुचीभवन्ति । पुनः अशुचिसंभवे अशुचि–आर्तवं रक्तं पितुः शुक्रं (च) तेनोत्पत्तिर्यस्य स तस्मिन् । उक्तं च—

सुक्कं पिउणो माउए सोणियं तदुभयं पि संसट्ठं । तप्पढमाए जीवो आहारे तत्थ उप्पन्नो ॥ १ ॥

अतोऽस्थिरेऽपवित्रे औपाधिकेऽभिनवकर्मबन्धकारणे द्रव्यभावाधिकरणे कः संस्कारः ? अतस्तन्निवार्य स्वरूपे आत्मनः पावित्र्यं कार्यम्, तदुपदिशति—

यः स्नात्वा समताकुण्डे, हित्वा कश्मलजं मलम् ।
पुनर्न याति मालिन्यं, सोऽन्तरात्मा परः शुचिः ॥ १ ॥

इत्यादिश्रीवीरपूज्यप्रसादात् स धर्मज्ञ आसीत् । एकदा स प्रवहणवाणिज्यं कुर्वन् पिहुंडपुरे समागात् । तत्पुरवासी कोऽपि वणिक् तस्मै स्वपुत्रीं ददौ । तां जातगर्भां प्रतिगृह्य स्वदेशं प्रस्थितः । अथ प्रवहणमध्ये सा गर्भं प्रसूतवती । तस्यात्मजस्य समुद्रपाल इति नाम स्थापितम् । क्षेमेण इभ्यो गृहमागात् । स पुत्रो यौवनं प्राप । तस्य पितृभ्यां रूपवतीकन्यापाणिग्रहणं कारितम् । तया सह क्रीडा-

मनुभवन्नन्यदा ग्रामजनतावलोकने गवाक्षे स्थितः समुद्रपालो रक्तचन्दनकणवीराद्यलङ्कृतमेकं वधार्हं पुरुषं ददर्श, तं वीक्ष्याब्रवीत्—'अहो! अहो! अशुभानां कर्मणां विपाकः! यदयं वराको वधार्ह-मित्थं नीयते' एवं ध्यायन् संबुद्धः स दध्यौ—

अविद्यातिमिरध्वंसे, दृशा विद्याञ्जनस्पृशा। पश्यन्ति परमात्मन—मात्मन्येव हि योगिनः ॥ १ ॥

एवं हि निश्चये समाधिदशास्था योगिन आत्मन्येव परमात्मानं समस्तकर्मजालविडम्बनाविमुक्त-मुत्कृष्टनिष्पन्नसिद्धात्मानं पश्यन्ति निर्धारयन्ति। कया? विद्याञ्जनस्पृशा दृशा विद्या-तत्त्वबुद्धिस्तद्रूपं यदञ्जनं तत्स्पृशा दृशा-चक्षुषा अविद्याऽयथार्थोपयोगान्धकारविनाशे सति सम्यग्दृष्टय आत्मानमा-त्मनि पश्यन्ति। इत्यादिशुभध्यानपरः समुद्रपालः पितरावापृच्छ्य प्राव्रजत्। यत उत्तराध्ययने एकविंशेऽध्ययने—

जहित्तु संगं च महाकिलेसं, महंतमोहं कसिणं भयावहं।
परियायधम्मं चऽभिरोअइज्जा, वयाइ सीलाइ परीसहे य ॥ १ ॥

अप्रमत्ततया पञ्च महाव्रतानि आसेवेत, न तु स्वीकारमात्रेणैव तिष्ठेत्, तथा कालोचितं प्रत्युपेक्षणा-दिकृत्यं कुर्वन् देशे ग्रामे यथा यथा संयमयोगहानिर्न स्यात् तथा तथा विहरेत्, पुनः यथा-दृष्टाभिलापुको न भवेत्, पुनः विविक्तालयनानि स्त्र्यादिरहितोपाश्रयान् सेवेत, ततः स कीदृ-शोऽभूत् इत्याह सूत्रे—

सन्नाणनाणोवगए महेसी, अणुत्तरं चरिउं धम्मसंचयं ।
अणुत्तरे नाणधरे जसंसी, ओभासइ सूरिएवंतलिक्खे ॥ १ ॥

स मुनिः ज्ञातं श्रुतं तेन ज्ञानमवबोधः तेनोपगतः अनुत्तरं क्षान्त्यादिधर्मं चरित्वा अनुत्तरं केवलज्ञानं तद्धरः यशस्वी जगति सूर्य इवान्तरिक्षे प्रकाशते । ततः पुण्यपापक्षयं कृत्वाऽपुनरागतिं गतिं गतः ।

मिथ्यात्वविद्याविगमे निजात्मनः, शुद्धात्मरूपं परमात्मसन्निभम् ।
निर्धारयन्त्येव समुद्रपालवत्, लोकोत्तरज्ञानदशा हि योगिनः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ द्वाविंशे स्तम्भे
सप्तदशोत्तरत्रिशततमं व्याख्यानम् ३१७ ॥

## अथाष्टादशोत्तरत्रिशततमं ३१८ व्याख्यानम् ॥

अथ विवेकमाह—

कर्म जीवं च संश्लिष्टं, सर्वदा क्षीरनीरवत् । विभिन्नीकुरुते योऽसौ, मुनिहंसो विवेकवान् ॥ १ ॥

कर्म ज्ञानावरणादिकं जीवं च सच्चिदानन्दरूपं सर्वकालं दुग्धजलवत् एकीभूतं यो लक्षणादिभेदैः पृथक्कुरुते, असौ मुनिहंसो विवेकवान् विवेकयुक्तः । तत्र विवेचनं हेयोपादेयपरीक्षणं विवेकः द्रव्यविवेकः लौकिकः धनोपार्जनराजनीतिकुलनीतिदक्षस्य भवति, लोकोत्तरस्तु धर्मनीतिज्ञस्य भावतो

विवेकः, बाह्यस्वजनधनतनुरागविभजनरूपो बाह्यः, आभ्यन्तरश्च ज्ञानावरणादि द्रव्यकर्म अशुद्धचेतनोत्पन्नं विभावादि, भावकर्म एकत्वविभजनरूपं चेति ।

देहात्माद्यविवेकोऽयं, सर्वदा सुलभो भवेत् । भवकोट्याऽपि तद्भेद—विवेकस्त्वतिदुर्लभः ॥ २ ॥

आत्मा त्रिविधः—बाह्यात्मा १ अन्तरात्मा २ परमात्मा ३ चेति । यस्य देहमनोवचनादिषु आत्मत्वभासनं देह एवात्मा, एवं सर्वपौद्गलिकप्रवर्तनेषु आत्मत्वबुद्धिः स बाह्यात्मा मिथ्यादृष्टिः १ । तथा सकर्मावस्थायामपि आत्मनि ज्ञानाद्युपयोगलक्षणे निर्विकारामृताव्याबाधरूपे समस्तपरभावमुक्ते आत्मबुद्धिः सम्यग्दृष्टिगुणस्थानतः क्षीणमोहं यावदन्तरात्मा कथ्यते २ । तथा यः केवलज्ञानदर्शनोपयुक्तः स परमात्मा उच्यते ३ । अतो भेदविवेकेन सर्वं साध्यमिति । देहः शरीरम्, आत्मा जीवः, आदिशब्दादात्मनो वाक्कायादौ आत्माऽयमित्यविवेकः सर्वकालं सुलभः संसारे । तयोः शरीरात्मनोर्भेदविवेकः भिन्नताविवेचनरूपः भवकोट्याऽप्यतिदुर्लभः । सम्यग्दृष्टिरेव भेदज्ञानं करोति ॥

संयमास्त्रं विवेकेन, शाणेनोत्तेजितं मुनेः । धृतिधारोल्बणं कर्म—शत्रुच्छेदक्षमं भवेत् ॥ ३ ॥

संयमः परभावनिवृत्तिरूपः तदेवास्त्रं विवेकेन स्वपरविवेचनेन शाणेन उत्तेजितम् उत्कृष्टतेजस्वितां नीतं, धृतिः संतोषः तद्रूपा धारा तया उल्बणं तीक्ष्णं संयमास्त्रं कर्म ज्ञानावरणादि तदेव शत्रुः तस्य छेदः तस्मिन् क्षमं समर्थं भवतीति । अनेनानादिमिथ्यात्वासंयमाज्ञानाधिष्ठितः संसारे संसरति जीवः,

स एव च त्रिलोकीवत्सलश्रीमदर्हदुक्तपरमागमसंयोगपीततत्त्वरहस्यः स्वपरविवेकेन परजावविजावाज्यां निवृत्तः परमस्वरूपसाधकः स्यादित्युक्तम् ।

अत्रार्थे उदाहरणं चेदम्—

चम्पायां जितशत्रुनृपसुतः श्रमणजद्राहोऽजनि । स एकदा धर्मघोषगुरोः पार्श्वे धर्ममश्रृणोत् । तथाहि—

यथा योधैः कृतं युद्धं, स्वामिन्येवोपचर्यते । शुद्धात्मन्यविवेकेन, कर्मस्कन्धोर्जितं तथा ॥ १ ॥

यथा योधैः सुजटैः कृतं युद्धं नृपे उपचर्यते अयं नृपो जितः अयं पराजित इत्युक्तिर्लोके जवति तथा शुद्धे आत्मनि अविवेकेन असंयमेन कर्मस्कन्धस्य ऊर्जितं साम्राज्यमुपचर्यते उपचारः क्रियते । इत्यादिधर्मोपदेशाद्विरक्तः कामजोगेज्यः स महात्मा व्रतमग्रहीत् । गुरोः प्रसादात्स श्रुताम्जोनिधिपारीण एकाकित्वविहाराख्यां प्रतिमां प्रपन्नवान् । अन्यदा स मुनिर्निम्नजूमिप्रदेशेषु विहरन् शरत्काले महारण्ये निशि प्रतिमया तस्थौ । तत्र सूचीसमानवदनाः सहस्रशो दंशाः कोमले तस्य शरीरे विलग्य शोणितं पपुः । निरन्तरविलग्नैर्दशनतत्परैस्तैर्दंशैः स्वर्णवर्णोऽपि स मुनिर्लोहवर्ण इवाबजौ । दशत्सु तेषु तस्योच्चैर्वेदनाऽऽसीत् तथापि क्षान्तिक्षमः स तां तितिक्षामास, न तु तान्ममार्ज, दध्यौ च—"दंशोत्थाऽसौ व्यथा मम कियती ? इतोऽप्यनन्तगुणिता नरकेषु सा सोढा । यतः—

परमाधार्मिकोत्पन्ना, मिथोजाः क्षेत्रजास्तथा ।
नारकाणां व्यथा वक्तुं, पार्यन्ते ज्ञानिनाऽपि न ॥ १ ॥

किंच—

अन्यद्वपुरिदं जीवात्, जीवश्चान्यः शरीरतः ।
जानन्नपीति को दक्षः, करोति ममतां तनौ ॥ २ ॥

पुद्गलपिण्डो देहोऽनित्यः, जीवस्तु अमूर्तोऽचलो ज्ञानाद्यनन्तचेतनालक्षणः स्वरूपकर्ता स्वरूपभोक्ता स्वरूपरमणो भवविश्रान्तः पुद्गलकर्तृत्वादिभावरहित इत्यादिविवेकज्ञानं भावयन् स तां व्यथां सहमानो दंशैः शोषितशोणितो रात्रावेव स्वर्गं जगामेति ।

इति विवेकगुणं हृदि धारयन्, श्रमणभद्रमुनिस्त्रिदशोऽभवत् ।
तदपरैरपि साधुवरैरयं, जिनवचोनिपुणैरुररीकृतः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ द्वाविंशे स्तम्भेऽष्टादशाधिकत्रिशततमं व्याख्यानम् ३१८ ॥

## एकोनविंशत्यधिकत्रिशततमं ३१९ व्याख्यानम् ॥

अथ माध्यस्थ्यगुणमाह—

रागस्य कारणे प्राप्ते, न भवेद्रागयुग्मनः । द्वेषहेतौ न च द्वेषः, स माध्यस्थ्यगुणः स्मृतः ॥ १ ॥

स्पष्टः । अत्रार्थे संबन्धश्चायम्—

एकस्मिन् पुरेऽर्हद्दत्तार्हन्मित्राह्वौ द्वौ सोदरौ वसतः । अर्हन्मित्रस्यात्मा सदा धर्मप्रियः प्रत्यहं गुरूक्तवाक्यानि शृणोति । एकदा श्रीमद्गुरुणा माध्यस्थ्यगुणवर्णनं विस्तारितम् । तथाहि—

स्थीयतामनुपालम्भं, मध्यस्थेनान्तरात्मना । कुतर्ककर्करक्षेपैः, त्यज्यतां बालचापलम् ॥ १ ॥

भो भव्याः! बालस्याज्ञस्यैकान्ताज्ञानरक्तस्य चापलं वस्तुस्वरूपानपेक्षवचनरूपं चापल्यं मुच्यताम् कुतर्काः कुयुक्तयः त एव कर्करा उपलास्तेषां क्षेपास्तैः । मध्यस्थेन रागद्वेषरहितेनान्तरात्मना साधकात्मनाऽनुपालम्भं स्थीयतां, स्वभावोपघात उपालम्भः तद्रहितं यथा स्यात्तथा स्थीयतामिति ।

स्वस्वकर्मकृतावेशाः, स्वस्वकर्मभुजो नराः । न रागं नापि च द्वेषं, मध्यस्थस्तेषु गच्छति ॥ २ ॥

तेषु कर्मोदयेषु (नरेषु) मध्यस्थः समचित्तः न रागं न च द्वेषं गच्छति । कीदृशा नराः? स्वे स्वे कर्मणि कृत आवेशो यैस्ते स्वस्वकर्मकृतावेशाः, तथा स्वस्वकर्मभोक्तारः, तेषु मध्यस्थः स्यात्, स्वस्वकर्मविपाकोदये शुभे चाशुभे च प्राप्ते सति समानचेतोवृत्तिधारको मध्यस्थः न रागद्वेषौ समुद्वहति इति ।

मनः स्याद्व्यापृतं यावत्, परदोषगुणग्रहे । कार्यं व्यग्रं वरं तावत्, मध्यस्थेनात्मभावने ॥ ३ ॥

परदोषगुणग्रहणे यावन्मनः व्यापृतं प्रवृत्तं स्यात् तावन्मध्यस्थेन पुरुषेण आत्मस्वरूपचिन्तने व्यग्रं तदायत्तं वरं प्रधानं कार्यमिति । अनेनात्मस्वरूपस्यामूर्त्तस्यागुरुलघुषड्गुणहानिवृद्धिपरिणमनोत्पादव्यय-ध्रौव्यलक्षणस्वरूपादिचिन्तनव्यग्रस्य संसारिकगुणदोषचिन्तनावकाश एव न भवति, अत एव निर्ग्र-

न्यास्तदेव चिन्तयन्ति, भावनाचक्रं घोषयन्ति, द्रव्यानुयोगग्रन्थं प्रश्नयन्ति, परस्परस्वभावविभाव-परिणमनं विलोकयन्तीति ।

विभिन्ना अपि पन्थानः, समुद्रं सरितामिव । मध्यस्थानां परं ब्रह्म, प्राप्नुवन्त्येकमक्षयम् ॥ ४ ॥

अनेकभेदभिन्ना अपि पन्थानः मार्गसाधनपद्धतयः द्रव्याचरणतः शुक्लध्यानं यावत् सम्यग्दृष्ट्य-पुनर्बन्धकादयो जिनकल्प्याद्या मध्यस्थभाववर्तिनामेकमक्षयं परं ब्रह्म प्राप्नुवन्ति सर्वे साधनोपाया एकं शुद्धमात्मस्वरूपं समवतरन्ति सर्वेषां मोक्षसाधकानां साध्यैकत्वात्, कमिव? समुद्रमिव सरितां यथा नदीनां विभिन्ना अपि पन्थानः सर्वे समुद्रं गच्छन्ति ।

स्वागमं रागमात्रेण, द्वेषमात्रात् परागमम् । न श्रयामस्त्यजामो वा, किं तु मध्यस्थया दृशा ॥ ५ ॥

स्वागमं वयं न रागमात्रेण श्रयामः यथाऽस्मत्परंपरानुगतैरिदमेवाभिहितमस्माकं कल्पमिदमिति रागानु-रक्तत्वेन न जिनागमे रागः, वाऽथवा परागमं कपिलादिशास्त्रं न केवलं द्वेषमात्रेण परकीयत्वात् त्यजामः, किं तु परीक्षया यथार्थवस्तुस्वरूपनिरूपणेन सम्यग्ज्ञानहेतुत्वात् मध्यस्थया दृशा जिनागमं श्रयामः । उक्तं च—

पक्षपातो न मे वीरे, न द्वेषः कपिलादिषु । युक्तिमद्वचनं यस्य, तस्य कार्यः परिग्रहः ॥ १ ॥

न श्रद्धयैव त्वयि पक्षपातो, न द्वेषमात्रादरुचिः परेषु ।
यथावदाप्तत्वपरीक्षया तु, त्वामेव वीरं प्रभुमाश्रयामः ॥ २ ॥

इत्यादि श्रीगुरुमुखतो देशनां श्रुत्वाऽर्हन्मित्रकुमारः स्वदारनियमं जग्राह । अथाग्रजभार्या देवरं

हावभावकटाक्षनिक्षेपमञ्जुलवाण्याऽनुकूलोपसर्गं करोति प्रत्यहं, परं लघुर्नेच्छति । स्त्रीस्वरूपं तादृशं मत्वा स्वव्रतरक्षणार्थं पञ्च महाव्रतानि ललौ । तद्भक्त्या सा मृता शुनी जाता । अन्यदा विहरन् सोऽर्हन्मिन्नर्षिः सहसा तं प्रदेशमाययौ । शुन्या स मुनिर्दृष्टः । सा तं पतिमिवालिलिङ्ग । नष्टः साधुः । साऽथ मृता महाटव्यां मर्कटी अभूत् । ततो भवितव्यतायोगात्तस्यामेवाटव्यां स मुनिरागात् । तं मुनिं दृष्ट्वा पूर्ववदालिलिङ्ग रागधिया, तदाऽपरे साधवो जहसुः—'असौ साधुर्मर्कटीपतिः' । तदुक्त्या रुष्टः स लज्जया शीघ्रं तत्प्रदेशान्नष्टः । मर्कटी मृता यक्षिण्यभूत्, तं मुनिं वीक्ष्य जातिस्मृत्या दध्यौ—"असौ मुनिर्मया बहुभवेषु वाञ्छितो मां न वाञ्छति तर्ह्यधुनाऽमुमालिङ्गामि" इति ध्यात्वाऽऽलिङ्गति स्म । मुनिर्नष्टः । ततो गच्छन् नदीमुल्लङ्घितुं यावज्जले प्रविष्टः तावत्तया यक्षिण्या साधोः पादश्छिन्नः । तदा तां यक्षिणीं शासनदेवी ताडयामास, आह च—"रे पापिनि ! यत् त्वमृषेः पराभवं करोषि तन्न युक्तम्, शृणु प्राग्भवं" । ततस्तया मिथ्यादुष्कृतं दत्तम् । सद्यो दिव्यानुभावात् पादः सज्जीकृतः । ततो यतिः सविशेषं संयमं प्रपाल्य स्वर्गं गतः, ततो मुक्तिं यास्यतीति । प्रसङ्गाद्भूयः प्रबन्धोऽयं लिखितः ।

भ्रातुश्च पत्न्याऽतिविडम्बितोऽपि, हास्यं कृतं चान्यजनैस्तथापि ।
मध्यस्थभावं न जहौ स भिक्षुः, तथान्यपूज्यैरपि संप्रधार्यः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ द्वाविंशे स्तम्भे एकोनविंशत्यधिकत्रिशततमं व्याख्यानम् ३१९ ॥

## विंशत्यधिकत्रिशततमं ३२० व्याख्यानम् ॥

अथ निर्जयतागुणमाह—

एकं ब्रह्मास्त्रमादाय, निघ्नन्मोहचमूं मुनिः। विजेति नैव सङ्ग्राम—शीर्षस्थ इव नागराट् ॥ १ ॥

मुनिः स्वरूपरतो न बिभेति। किं कुर्वन्? मोहचमूं मोहसैन्यं निघ्नन् ध्वंसं कुर्वन्। किं कृत्वा? ब्रह्मास्त्रं ब्रह्मज्ञानमात्मस्वरूपाववोधस्तदेवास्त्रं शस्त्रमादाय। क इव? सङ्ग्रामस्य शीर्षमग्रेसरत्वं तत्र तिष्ठतीति सङ्ग्रामशीर्षस्थः नागराट् गजश्रेष्ठ इव, यथा गजेशः सङ्ग्रामे न बिभेति तथा मुनिः कष्टेऽपि कर्मपराजये प्रवृत्तो न भयवान् स्यात् शरीरादिसर्वपरभावविरतत्वात्।

अत्रार्थे स्कन्दकर्षिदृष्टान्तः—

श्रावस्त्यां जितशत्रुसुतः स्कन्दकोऽभूत्। तद्भूपसुता पुरन्दरयशा जितशत्रुभूपेन कुम्भकारपुरेशाय दण्डभूपाय परिणायिता। तस्य पालकाभिधोऽभव्यः पुरोहितो दुष्टोऽस्ति। अथान्यदा सुव्रतस्वामी श्रावस्त्यां समवासार्षीत्। धन्यंमन्यः स्कन्दकस्तं नन्तुमगात्। श्रीजिनदेशनां श्रुत्वा श्राद्धधर्मं प्रत्यपद्यत। एकदा स पालकः पुरोधाः किञ्चिद्राजकार्यार्थं श्रावस्त्यामाययौ स च भूपसभामध्ये निर्ग्रन्थगर्हणां कुर्वन् द्रुतं स्कन्दकेन निरुत्तरीचक्रे। तदनु तदुपरि द्वेषं वहन् स स्वास्पदं ययौ। ततो भुक्तभोगः स्कन्दको विरक्तचेता मर्त्यानां पञ्चभिः शतैः साकं श्रीजिनान्तिकं प्राव्राजीत्। क्रमात्स्क-

न्दके बहुश्रुते जाते सुव्रतप्रभुः तानि पञ्च साधुशतानि तस्मै शिष्यतयाऽदात् । अन्येद्युरर्हन्तं स्कन्दकः पृष्टवान्—'यदि प्रभोरादेशः स्यात्तदाऽहं स्वसुर्देशं व्रजामि' । प्रभुर्जगौ—'तत्र मारणान्तिक उपसर्गः सर्वेषामुत्पत्स्यते' । तच्छ्रुत्वा स स्माह—'स्वामिन् ! तस्मिन्नुपसर्गे समुपस्थिते वयमाराधका भविष्यामो विराधका वा ?' । स्वामी स्माह—"त्वां विना सर्वेऽप्याराधकाः' । तन्निशम्य निर्ग्रन्थः स दध्यौ—

आराधका इयन्तः स्युः, विहारे यत्र साधवः । नूनं स शुभ एवेति, विचिन्त्य स्कन्दकोऽचलत् ॥ १ ॥

क्रमात् कुम्भकारपुरोपवनं प्राप । तत् पापिना पालकेन श्रुतम् । ततः प्राग्वैरशुद्ध्यर्थं तत्रोद्याने पुरोधाः प्रच्छन्नं विविधशस्त्राणि गोपयामास । तदनु नृपं स्माह—"स्वामिन् ! स्कन्दकोऽत्रागतोऽस्ति, अयं स्वयं महावीर्यैः प्रचण्डदोर्दण्डविक्रमैः साधुवेषधरैर्भटानां पञ्चशतैर्युतो वनभूगोपितशस्त्रप्रकरो वन्दितुं गतं त्वां हत्वा राज्यमेतत् ग्रहीष्यति । स्वामिन् ! मद्वचने प्रत्ययो न चेत्तव तदा तद्गोपिताशस्त्राणि स्वयं वने गत्वा विलोकय" इत्युक्त्वा व्युद्ग्राह्य तानि दर्शितानि । ततो नृपः क्रुधो मुनीन् सर्वानबन्धयत् । तान्निबध्य पालकस्यैव नृपः समार्पयत्, 'यत्तुभ्यं रोचते तत्त्वमेषां कुर्याः' इति चाब्रवीत् । मुदितः स तान् मर्त्यपीडायन्त्रान्तिकेऽनयत् । इति प्रोचे च—'यूयमिष्टं स्मरतेदानीमनेन यन्त्रेणाखिलान् पीडयिष्यामि । ततस्ते जीवितमरणाशाविप्रमुक्ता निर्ग्रन्थाः सर्वे पर्यन्ताराधनां विदधुः । अथ पालक एकैकं श्रमणं यन्त्रे क्षेपंक्षेपमपीडयत् स्कन्दकं च यन्त्रपार्श्वे बद्धमधारयत् । सूरिस्तु समयोचितैर्वाक्यैस्तान् सर्वान्निर्यामयामास । यतः—

भिन्नः शरीरतो जीवः, जीवाद्भिन्नश्च विग्रहः । विदन्निति वपुर्नाशेऽप्यन्तः खिद्येत कः कृती ॥ १ ॥

इत्यादिसद्युक्त्या स्कन्दकेन निर्याम्यमाना विपक्षे मित्रे च समदृष्टयः क्षमाधनाः क्रमात्केवलं प्राप्य शिवं लेभिरे । तेनैवं द्रुतं न्यूनपञ्चशतर्षिषु हतेषु एकं क्षुल्लकमुद्दिश्य पालकं स्कन्दकोऽवदत्—

अनुकम्प्यमिमं बालं, पीड्यमानं निरीक्षितुम् । नाहं शक्नोमि नियतं, पूर्वं पीलय मां ततः ॥ १ ॥

तच्छ्रुत्वा पालको गुरोर्भूरिदुःखविधित्सया तस्य पश्यत एव झाक् प्राक् तं बालमपीलयत् । सोऽपि महासत्त्वो गुरुणा निर्यामितः मुक्तिं प्राप । तद्वीक्ष्य सूरिः क्रुद्धो दध्यौ—"अनेन पापिना सपरिकरोऽहं विनाशितः, क्षुल्लकोऽपि मद्वाचा क्षणमेकं न रक्षितः, तद्दुष्करस्य मत्तपसः फलं भवेच्चेत्तदा पुरोधो-भूपजनपदानाममीषां दाहको भाविजन्मनि भूयासम्" । इत्थं कृतनिदानः स तेन दुर्धिया पीलितो मृत्वा वह्निकुमारेषु सुरोऽभूत् । अथ पुरन्दरयशास्तत्र दिने चैवं दध्यौ—'कुतो हेतोरद्य पुरीमध्ये साधवो न दृश्यन्ते?' । इतश्च स्कन्दकमुने रक्ताभ्यक्तं रजोहरणं गृध्रपक्षिणा जगृहे । तद्रजोहरणं भाग्भवितव्यतया तस्या राज्ञ्याः पुरो गृध्रो न्यपातयत् ।

तच्चादायोद्वेष्टयन्ती, सा स्वयं परिकर्मितम् । कम्बलखण्डमद्राक्षीत्, भ्रातुः प्रव्रजतोऽर्पितम् ॥ १ ॥

तेन चिह्नेन मुनीन् हतान् ज्ञात्वा सखेदा सा भूपमवादीत्—"रे दुष्ट ! किमकृत्यं महत् कारितं? अनेन पापेन त्वं महाव्यथां प्राप्स्यसि" इत्युदीर्य सा दीक्षोत्सुका देवैर्जिनसन्निधौ नीता, दीक्षां लात्वा

परलोकमसाधयत् । अथ स्कन्दकामरोऽवधिना प्राच्यं स्ववृत्तं ज्ञात्वा क्रोधाध्मातो देशयुक्तं तत्पुरमधाक्षीत् । यतः—

ततोऽरण्यमभूद्देश—भूमौ दण्डकभूपतेः । अद्यापि दण्डकारण्य—मिति तत्प्रोच्यते बुधैः ॥ १ ॥

एकोनपञ्चशतसाधुवरैर्गुणौघै—र्निर्भीकता न हि यथा हृदयाद्विमुक्ता ।
ज्ह्या तथेयमपरैरपि साधुमुख्यैः, श्रीस्कन्दकश्रमणवन्न पुनर्विधेयम् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ द्वाविंशे
स्तम्भे विंशत्यधिकत्रिशततमं व्याख्यानम् ३२० ॥

## एकविंशत्यधिकत्रिशततमं ३२१ व्याख्यानम् ॥

अथात्मप्रशंसामाह—

गुणैर्यदि न पूर्णोऽसि, कृतमात्मप्रशंसया । गुणैरेवासि पूर्णश्चेत्, कृतमात्मप्रशंसया ॥ १ ॥

यदि गुणैः केवलज्ञानादिभिः पूर्णो नासि तर्हि आत्मस्तुत्या कृतम् अलं सृतमिति यावत् निर्गुणात्मनः का प्रशंसा ? चेत् यदि गुणैः सम्यग्रत्नत्रयादिरूपैः पूर्णस्तर्हि वाचिकात्मप्रशंसया कृतं सृतं शुद्धा गुणाः स्वत एव प्रकटीभवन्तीति ।

आलम्बिता हिताय स्युः, परैः स्वगुणरश्मयः । अहो स्वयं गृहीतास्तु, पातयन्ति भवोदधौ ॥ २ ॥

स्वगुणरश्मय आत्मीयगुणरज्जवः परैरन्यैः आलम्बिताः स्मरणचिन्तनेन गृहीता हिताय कल्याणाय स्युः । तु पुनः अहो इत्याश्चर्ये स्वगुणाः स्वयं गृहीता भवोदधौ पातयन्ति स्वमुखेन स्वगुणोत्कर्षो न कार्यः ।

अत्रार्थे मरीचिकुमारप्रबन्धः—

श्रीभरतचक्रिपुत्रो मरीचिकुमारः एकदा चक्रिणा सार्धं श्रीयुगादिजिनं समवसृतं वन्दितुमगात् । तत्र श्रीस्याद्वादधर्मं श्रीमारुदेवमुखात् श्रुत्वा प्रतिबुध्य व्रतमाददे । स्थविराणां पुरोऽङ्गानि एकादशापि अपठत् । स्वामिना सार्धं चिरं व्यहरत् । अन्यदा ग्रीष्मतापपीडितश्चारित्रावरणकर्मोदयादिति दध्यौ, यतः श्रीवीरचरित्रे हैमे—

न श्रामण्यगुणान्मेरु—समभारान् धुरुद्वहान् । निर्गुणोऽहं भवाकाङ्क्षी, वोढुं प्रभुरतः परम् ॥ १ ॥

किं त्यजामि व्रतं लोके, तत्त्यागे लज्ज्यते खलु । लब्धो वाऽयं मयोपायो, व्रतं येन क्लमो न च ॥२॥

श्रमणा भगवन्तोऽमी, त्रिदण्डविरताः सदा । अस्तु दण्डैर्निर्जितस्य, त्रिदण्डी मम लाञ्छनम् ॥३॥

केशलोचादमी मुण्डाः, क्षुरमुण्डः शिखी त्वहम् । महाव्रतधराश्चामी, स्यामणुव्रतभृत्त्वहम् ॥ ४ ॥

निष्किञ्चना मुनयोऽमी, भूयान्मे मुद्रिकादि तु । अमी विमोहा मोहेन, छन्नस्य छत्रमस्तु मे ॥ ५ ॥

उपानद्रहिताश्चामी, संचरन्ति महर्षयः । पादत्राणनिमित्तं मे, भवतामप्युपानहौ ॥ ६ ॥

सुगन्धयोऽमी शीलेन, दुर्गन्धः शीलतस्त्वहम् । सौगन्ध्यहेतोर्भवतु, श्रीखण्डतिलकादि मे ॥ ७ ॥

अमी शुक्लजरद्वस्त्रा, निष्कषाया महर्षयः । भवन्तु मे तु वासांसि, काषायाणि कषायिणः ॥ ८ ॥
त्यजन्त्यमी जलारम्भं, बहुजीवोपमर्दकम् । स्नानं पानं च पयसा, मितेन भवताच्च मे ॥ ९ ॥
एवं विकल्प्य स्वधिया, लिङ्गनिर्वाहहेतवे । पारिव्राज्यं प्रत्यपादि, मरीचिः क्लेशकातरः ॥ १० ॥
तादृग्वेषं च तं दृष्ट्वा—ऽपृच्छद्धर्मं जनोऽखिलः । साधुधर्मं समाचख्यौ, सोऽपि तेषां जिनोदितम् ॥११॥

सर्वेषां जनानां पुरः स धर्मदेशनां तनोति । तदा जनास्तं पप्रच्छुः—'त्वं किं स्वयमेतं मार्गं नाचरसि?' श्रुत्वा स प्राह—'तं मेरुभारं वोढुं नाहमीशोऽस्मि' इति स तान् शशंस । पुनः स धर्माख्यानप्रतिबुद्धान् भव्यानुपस्थितान् शिष्यान् स्वामिनः समर्पयामास । इत्याचारो मरीचिः स्वामिना सह विजहार । स्वामी पुनर्विनीतायां पुरि समवासार्षीत् । तत्र प्रभुं प्रणम्य भरतेन पृष्टो भाव्यर्हच्चक्रवर्त्यादिस्वरूपं प्रभुर्जगौ । पुनः पप्रच्छ–'किं कश्चिदिह पर्षदि अत्र भरतक्षेत्रे त्वमिव जिनो भावी?' । स्वाम्याख्यत्—"अयं तव सूनुर्मरीचिश्चरमतीर्थकृद्वीरनामा इह भरते भावी, आद्यो वासुदेवो भावी, विदेहे चक्री भावी च" । तच्छ्रुत्वा भरतो मरीचिं प्रदक्षिणीकृत्य वन्दित्वैवमवोचत्—'तव पारिव्राज्यं न वन्द्यं किं तु त्वं भाव्यर्हन्नसि, तेन वन्द्यसे' इत्यादि सर्वं जिनोदितं कथितवान् । ततः—

तदाकर्ण्य मरीचिस्त्रि—रास्फोट्य त्रिपुटीं मुदा । इत्युवाचोच्चकैर्विष्णु—र्भविष्यामि यदादिमः ॥ १ ॥
मूकानगर्यां मे चक्र—वर्तित्वं च भविष्यति । भाव्यहं चरमश्चार्हन्, पर्याप्तमपरेण मे ॥ २ ॥

आद्योऽहं वासुदेवानां, पिता मे चक्रवर्तिनाम् । पितामहस्तीर्थकृता—महो मे कुलमुत्तमम् ॥ ३ ॥

इत्यात्मप्रशंसां चकार, तेन नीचगोत्रकर्मोपार्जितम् । अन्यदा तस्य शरीरे व्याधिरुत्पन्नः । साधुभिरपाल्यमानो ग्लान एवं दध्यौ—"अहो अमी साधवो निर्दाक्षिण्याः, मम पालनं दूरेऽस्तु, परं दृष्ट्वा ईक्षन्तेऽपि न । यद्वा दुश्चिन्तितमिदं मया स्वतनोरपि परिचर्यां न कुर्वन्ति तर्हि भ्रष्टस्य मम कथं कुर्युः! अतो व्याधिषु गतेषु शिष्यमेकं करिष्यामि" एवं ध्यायन्मरीचिः पटुरभवत् । अन्यदाऽस्य कपिलः कुलपुत्रको मिलितः, तत्पुर आर्हन्तं धर्मं धर्मार्थी स ज्ञापितस्तेन । ततः कपिलोऽब्रवीत्—'किं त्वन्मार्गे धर्मो न विद्यते ?' । ततः—

जिनधर्मालसं ज्ञात्वा, शिष्यमिच्छन् स तं जगौ । मार्गे जैनेऽपि धर्मोऽस्ति, मम मार्गेऽपि विद्यते ॥ १ ॥
तच्छिष्यः कपिलोऽथाभूत्, मिथ्याधर्मोपदेशनात् । मरीचिरप्यब्धिकोटी—कोटीसंसारमार्जयत् ॥ २ ॥
मरीचिस्तदनालोच्य, विहितानशनो मृतः । ब्रह्मलोके दशोदन्वत्प्रमितायुः सुरोऽभवत् ॥ ३ ॥
शिष्यान् विधायासूर्यादीन्, स्वाचारानुपदिश्य च । विपद्य च ब्रह्मलोके, कपिलोऽप्यमरोऽभवत् ॥४॥
स प्राग्जन्मावधेर्ज्ञात्वा, मोहादभ्येत्य भूतले । स्वयं कृतं साङ्ख्यमत—मासूर्यादीनबोधयत् ॥ ५ ॥
तदाम्नायादत्र साङ्ख्यं, प्रावर्तत च दर्शनम् । सुखसाध्ये ह्यनुष्ठाने, प्रायो लोकः प्रवर्तते ॥ ६ ॥
पञ्चविंशतितत्त्वज्ञो, मोक्षं प्राप्नोति निश्चितम् । क्रियां करोतु वा मा वा, ज्ञानवादिमतं ह्यदः ॥ ७ ॥

अत्र बहु वक्तव्यमस्ति, तत्तु तच्चरित्रतो ज्ञेयम्, अत्रात्मप्रशंसा न कार्येत्युपदेशः ।

आत्मप्रशंसाकरणान्मरीचि—र्नीचाख्यगोत्रं समुपार्ज्य कर्म ।
उत्सूत्रवाक्याब्धि भवानसङ्ख्यान्, बभ्राम भव्यैर्न तथा विधेयम् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ द्वाविंशे
स्तम्भे एकविंशत्यधिकत्रिशततमं व्याख्यानम् ३२१ ॥

## ॥ अथ द्वाविंशत्यधिकत्रिशततमं व्याख्यानम् ३२२ ॥

अथ तत्त्वदृष्टिमाह—

रूपे रूपवती दृष्टि—र्दृष्ट्वा रूपं विमुह्यति । मज्जत्यात्मनि नीरूपे, तत्त्वदृष्टिस्त्वरूपिणी ॥ १ ॥

रूपवती पुद्गलस्वरूपग्राहिणी दृष्टिः चक्षुः रूपं श्वेतादिभेदं दृष्ट्वा रूपे वर्णादौ विमुह्यति । तु पुनः अरूपिणी रूपरहिता दृग्ज्ञानरूपा आत्मचैतन्यशक्तिलक्षणा तत्त्वदृष्टिः नीरूपे निर्गतमूर्त्तधर्मणि आत्मनि आत्मस्वरूपे मज्जति मग्नतां प्राप्नोति, अतोऽनादिकालीनं बाह्यदृष्टित्वं विहाय स्वरूपोपयोगे दृष्टिः कार्या।

ग्रामारामादि मोहाय, यद्दृष्टं बाह्यया दृशा । तत्त्वदृष्ट्या तदेवान्त—र्नीतं वैराग्यसम्पदे ॥ २ ॥

बाह्यदृष्ट्या यद्ग्रामारामादि दृष्टं मोहाय स्यात् असंयमवृद्धये स्यात् तदेव ग्रामादिकं तत्त्वदृष्ट्या स्वप-

रत्नेदकृत्रिमाकृत्रिमदशाऽन्तरात्मोपयोगमध्ये नीतं प्रापितं वैराग्यसम्पदे वैराग्यसम्पत्त्यर्थे स्यात् अत्रार्थे ज्ञातं चेदम्—

एगे आयरिया नाणचरणप्पहाणा सुअरहस्सपारगा तारगा भवजीवाणं अणेगसमणगणपरिवुडा गामाणुगामं विहरंता वायणाईहिं समणसंघं बोहंता पंचसमिइतिगुत्तिजुत्ता अणिच्चाइभावियसव्वसंजोगा पत्ता एगं वणं अणेगलयाइण्णं नीलं नीलाभासं सउणिगणनिवासं। तओ वणस्स पुप्फपत्तफललच्छिं पासिऊणं निग्गंथाणं वयंति—"भो भो निग्गंथा! पासह एए पत्ता पुप्फा गुच्छा गुम्मा फला जे चेयणलक्खणाणंतसत्ति आवरिऊण नाणावरणचरित्तमोहमिच्छत्तमोहांतराउदएणं दाणहीणं एगिंदियभावमापन्ना कंपंता भलहया दुहिया अत्ताणा असरणा जम्मणमरणावगाढा "अहो अणुकंपाजुग्गा एए। को एसिं अणुकंपं कुणइ मणवयणनयणविगत्ताणं?"। इय भणिऊण जणियसंवेगा चलंति पुरओ तत्थ पत्तं महानयरं अणेगगीयवाइयरवेणं विवाहाइऊसवेणं देवलोगरूवं रमणिज्जं पिक्खिऊण आयरिओ समणसंघं भणइ—"भो भो निग्गंथा! अज्ज एयम्मि णयरे मोहधाम्मी निवम्मिया, तेण एए कहंति लोगा उच्छलंति भओविगत्ता अप्पाणं न जुज्जइ इत्थ पवेसो, लोहपासबद्धा लोगा अणुकंपणिज्जा, मोहसुरामत्ता नो उवएसजुत्ता, अग्गे निग्गच्छह"। ता साहवो भणंति—"चारु कहियं" इच्चाइसुहजोगपरा विहरइ। ते एवं आयसुहदिट्ठियाणं गामनगराइ वेरग्गकारणं हवइ। इत्यन्वयदृष्टान्तमुक्त्वा व्यतिरेकसंबन्धमाह—

कस्मिंश्चिद्गच्छे गुरुभिः स्वायुःपर्यन्तमवगम्य कश्चित् शिष्यः स्थूलसामाचारीज्ञः सूरिपदे स्थापितः। ततः प्राप्तप्रतिष्ठः स आगमादिशास्त्राध्ययने प्रमाद्यभूत्। ततोऽनधिगतश्रुतार्थोऽपि गुरुमहिम्ना सर्वत्र ख्यातिं प्राप्तवान्। अन्यदा विहरन् पृथ्वीतिलकपुरे प्राप। श्राद्धैः प्रौढप्रवेशेन महोत्सवो व्यधीयत तथा यथा तस्य भृशं महिमाप्रसिद्धिरभूत् शासनोन्नतिश्च। तत्र पुरे प्राग्जैनाचार्यैः परवादिनो नृपसभेऽनेकशः पराभूताः, ते च तदानीं पुनस्तस्याचार्यस्य तथाविधामुन्नतिं वीक्ष्य ईर्ष्यालवः प्राग् जितत्वेन पुनः स्वमहत्त्वक्षतिभीरवस्तस्य शास्त्रपरिज्ञानपरीक्षां चिकीर्षवः स्ववर्गीयमेवैकं श्राद्धं तस्य पार्श्वे प्रैषुः। स च विधिवद्गुरुं सेवमानोऽन्यदाऽप्राक्षीत्—"भगवन्! पुद्गलस्य कतीन्द्रियाणि?" इति। ततः स सूरिस्तत्त्वदृष्टिविकलश्चिरं विमृश्य प्राक् क्वचित् श्रुतं पुद्गलः समयेन लोकान्तं यावद्यातीत्यस्मार्षीत्, ततश्च पञ्चेन्द्रियं विना कथमेतावती शक्तिः? इति स्वहृदि निर्धार्य तं स्माह—"भद्र! पुद्गलः पञ्चेन्द्रियः" इति। ततः स्वसमयेऽप्येतस्य परिज्ञानं नास्ति परसमयादिपरिज्ञानं पुनः क्वेत्येवं विचार्य लब्धतज्ज्ञानपारैस्तैर्वादिभिर्नृपसभे परा      बहूनां धर्महानिश्च जाता। सङ्घेन स दूरतरं विहारितः। एवंविधास्तत्त्वविकला ग्रामारामोपाश्रयश्राद्धसङ्घादिषु मग्ना उपदेशपरा अपि तादृग्ज्ञानविकलत्वादुत्सूत्रमपि प्ररूपयन्ति इति स्वाश्रितान् भवाब्धौ प्रत्युत मज्जयन्ति। यतः—

जं जयइ अगीयत्थो, जं च अगीयत्थनिस्सिओ होइ। वट्टावेइ य गच्छं, अणंतसंसारिओ होइ ॥ १ ॥

तत्त्वदृष्टिविकलस्याबहुश्रुतस्य धर्मदेशनां कर्तुं न कल्पते इति ॥

निष्पादिता तत्त्वविचारदृक् शुभा, यैस्ते न रज्यन्ति विभाववस्तुषु ।
मुह्यन्ति नैवोपवनेऽप्युपाश्रये, ते साधवः स्युर्भुवि तत्त्वदृष्टयः ॥ १ ॥

सोपयोगित्वात् पुनः प्रबन्धोऽयं लिखितः ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ द्वाविंशे स्तम्भे द्वाविंशत्युत्तरत्रिशततमं व्याख्यानम् ३२२ ॥

## त्रयोविंशत्युत्तरत्रिशततमं व्याख्यानम् ३२३ ॥

अथ संपद्विनश्वरतामाह—

सम्पत्स्वस्थिरतां ज्ञात्वा, पुत्रदारहयादिषु । भूमिपालः प्रबुद्धो द्राक्, शास्त्रज्ञोक्तसुभाषितैः ॥ १ ॥

स्पष्टः । अत्रार्थसमर्थनाय ज्ञातं चेदम्—

पृथ्वीपुरे भूमिपालाह्वो भूपोऽजनि । तत्पुर एकः शास्त्रज्ञविप्र एकस्यां वेश्यायां रक्तोऽभूत् । एकदा कौमुद्युत्सवे राजपत्नी सालङ्कारा रथारूढा व्रजति स्म । सा वेश्या राजपत्नीकण्ठगतहारमवेक्ष्य मोहिता तं शास्त्रज्ञमाह—"हे प्राणेश! यदि मत्तनुसौख्यानुभवेच्छा तव स्यात्तदा राज्ञीसत्कहारं चौर्यवृत्त्या

समानय । यदीच्छेद्विपुलां प्रीतिमिति श्रुत्वा सोऽपि स्त्रीपराधीनो विषयजिष्णुः तस्करक्रियया राजसौधे गतवान् । नृपं जाग्रतं वीक्ष्य प्रच्छन्नं नृपपल्यङ्काधोभागे गत्वा स्थितः । तदा नृपेण गर्वभरेणैकस्य काव्यस्य त्रीणि पदानि नूतनानि रचितानि, चतुर्थपदं कथमपि तत्र न समेतं, तेन पुनः पुनस्तान्येव स्मरति, तथाहि—

"चेतोहरा युवतयः स्वजनानुकूलाः[1], सद्बान्धवाः प्रणयनम्रगिरश्च भृत्याः ।
गर्जन्ति दन्ति निवहास्तरलास्तुरङ्गाः,"

इति त्रीणि पदानि पुनः पुनः समुच्चारयन्तं ज्ञात्वा स शास्त्रज्ञश्चतुर्थपदमपूरयत्, तथाहि—

"संमीलने नयनयोर्न हि किञ्चिदस्ति ॥ १ ॥"

इति श्रुत्वा सहसा चकितो दध्यौ—"अहो ! यामिकान् विप्रतार्य मत्सद्मनि क आगतो विद्यते? देवो मानवो दानवो वा प्रकटीभवतु" । ततः स वेपमानदेहः प्रकटीभूय जगौ—"स्वामिन् ! तव गर्वहरणार्थं चतुर्थपादपूरणायानेन नूतनमार्गेण समायातोऽस्मि" । नृपः प्राह—"सत्यं ब्रूहि, किमसत्यं ब्रूषे ?" । ततः स यथा जातं ज्ञातं प्राह । नृपस्तु हारं तस्मै दत्त्वा गुरुत्वादवध्योऽयमिति विचार्य तं मुक्तवान् । अथ भूपस्तद्वचसा प्रबुद्धः प्रभाते श्रीमत्सुधर्मगुरुसमागमनं कञ्चुकिपुरुषाद्विज्ञाय हर्षेण तत्र गत्वा श्रीगुरुं नत्वा धर्मदेशनामिति शुश्राव—

1 समासश्चिन्त्यः, स्वजना अनुकूलाः.

बाह्यदृष्टिप्रचारेषु, मुद्रितेषु महात्मनः । अन्तरेवावभासन्ते, स्फुटाः सर्वाः समृद्धयः ॥ १ ॥

महात्मनः स्वरूपपररूपभेदज्ञानपूर्वकशुद्धात्मानुभवलीनाः सर्वसमृद्धयः स्फुटाः प्रकटा अन्तरेव स्वरूपमध्ये एवावभासन्ते, यतः स्वरूपानन्दमयोऽहं, निर्मलाखण्डसर्वप्रकाशकज्ञानवानहम्, इन्द्रचन्द्र-चक्र्यादि समृद्धय औपचारिका अक्षयानन्तपर्यायसम्पत्त्या सम्पन्नोऽहम्, इति स्वसत्ताज्ञानोपयुक्तस्य स्वात्मनि अवभासन्ते, केषु कीदृशेषु सत्सु ? बाह्यदृष्टिप्रचारेषु मुद्रितेषु सत्सु बाह्या दृष्टिः विषयसंचा-रात्मिका तस्या विस्तारास्तेषु रोधितेषु सत्सु, न हीन्द्रियप्रचारैश्चपलोपयोगैरात्मनोऽभ्यन्तराऽमूर्त्ता कर्मा-वृता स्वसत्ता सम्पद् ज्ञायते, रोधिते त्विन्द्रियचापल्ये स्थिरप्रगुणचेतनोपयोगैः कर्ममलपटलावगुण्ठि-ताऽप्यात्मसम्पद् ज्ञायत इति ॥

समाधिनन्दनं धैर्य—दम्भोलिः समताशची । ज्ञानं महाविमानं च, वासवश्रीरियं मुनेः ॥ २ ॥

मुनेः स्वरूपज्ञानानुभवलीनस्य इयं वासवस्य श्रीः शोभा ( लक्ष्मीः ) वर्तते—ध्यानध्यातृध्येयैकत्वेन निर्विकल्पानन्दरूपः समाधिः तदेव नन्दनं वनं, हरेर्नन्दनवनक्रीडा सुखायोक्ता साधोश्च समाधिक्रीडा सुखाय । मुनेः धैर्यं वीर्यमकम्पता औदयिकभावेनाक्षुब्धतालक्षणं तदेव दम्भोलिः वज्रम्, समतैव शची स्वधर्मपत्नी, ज्ञानं सर्वावबोधकरं तदेव महाविमानमित्यादिसम्पत्परिवृतो मुनिर्वज्रीव भासते ।

विस्तारितक्रियाज्ञान—चर्मच्छत्रो निवारयन् । मोहम्लेच्छमहावृष्टिं, चक्रवर्ती न किं मुनिः ॥ ३ ॥

स्पष्टः । सुरेषु इन्द्र श्रेष्ठः मनुष्येषु चक्रवर्ती, तयोर्ऋद्धिसौख्यं मुनिस्वभावेऽन्तर्भूतं तर्हि अन्येषां का कथा ? । तथाऽर्हतः सौख्यमप्यन्तर्भवतीत्याह—

रत्नैस्त्रिभिः पवित्रा या, स्रोतोभिरिव जाह्नवी । सिद्धयोगस्य साऽप्यर्ह—त्पदवी न दवीयसी ॥ १ ॥

सिद्धयोगस्य अष्टाङ्गयोगसाधनसिद्धस्य साधोः साऽपि अर्हत्पदवी ज्ञानाद्यनन्तचतुष्टयात्मिकाऽष्टप्रातिहार्यान्विता जगद्धर्मोपकारिणी न दवीयसी न दूरेत्यर्थः । किंभूता पदवी ? त्रिभिः रत्नैः पवित्रा । केव ? स्रोतोभिः प्रवाहैः जाह्नवी गङ्गा इवेति त्रैलोक्याद्भुतपरमार्थदायकत्वाद्यतिशयोपेताऽर्हत्पदवी साधकपुरुषस्य यथार्थमार्गोपेतस्य आसन्ना इव इत्येवं सर्वमप्यौपाधिकमपहाय स्वीयरत्नत्रये साधना विधेया, येन सर्वा ऋद्धयो निष्पद्यन्ते ।

इत्यादिधर्मवाक्यात्प्रबुद्धः सर्वबाह्यसम्पदां क्षणभङ्गुरतां विज्ञाय स राजा साधुधर्मं जग्राह ।

बाह्यासु सम्पत्सु क्षणैकभङ्गुरं, धार्यं स्वरूपं खलु भूमिपालवत् ।
स्वात्मस्थितं वासवसार्वभौमजं, सर्वर्द्धियुग् ज्ञेयमिदं सुखं शुभैः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ द्वाविंशे स्तम्भे त्रयोविंशत्यधिकत्रिशततमं व्याख्यानम् ३२३ ॥

## चतुर्विंशत्यधिकत्रिशततमं व्याख्यानम् ३२४ ॥

अथ कर्मवैचित्र्यमाह—

दुःखं प्राप्य न दीनः स्यात्, सुखं प्राप्य न विस्मितः । जगत् कर्मविपाकस्य, जानन् परवशं मुनिः ॥१॥

मुनिः तत्त्वरसिकः दुःखम् असातादिकं प्राप्य न दीनः स्यात्, करणकालेऽविचारितं स्वरसेन बद्धं तद्विपाकोदये का दीनता ? । तथा सुखं प्राप्य विस्मितो न स्यात् । कीदृशो मुनिः ? जगत् चराचरं कर्मविपाकस्य शुभाशुभोदयस्य परवशं जानन् कर्माधीनं विचिन्वन् इति ॥

येषां भ्रूभङ्गमात्रेण, भज्यन्ते पर्वता अपि । प्राप्तायां दुर्दशायां ते, प्राप्यन्ते क्वापि नाशनम् ॥ २ ॥

काकन्द्यां पुर्यां सोमशर्मा विप्रः, तस्य पुत्रः कदम्बोऽतिशौचवादी अन्यच्छायामात्रस्पर्शेऽपि सचैलस्नानं करोति, लोके पानीयपिशाच इति प्रसिद्धोऽभूत्, वस्त्राञ्चलस्थगितवदननासिकः सर्वत्र छुंछुं कुर्वन् भ्रमति, यदा कस्यापि वस्त्राञ्चलो लगति तदा तस्मिन् द्वेषं चकार, ततो गलत्कुष्ठप्रभृतिरोगैर्ग्रस्तः, ततस्तस्य कोऽपि स्पर्शं न करोति, वैद्योऽपि नाडीं न विलोकयति व्याधिसङ्क्रमभयात्, यत उक्तम्—

ज्वरो भगन्दरः कुष्ठः, क्षयश्चैव चतुर्थकः । एते संस्पर्शतो रोगाः, संक्रमन्ति नरान्नरम् ॥ १ ॥

ततो नष्टशौचवादोऽजनि, शरीरवेदना जाता । अन्यदा यतिपार्श्वे गतः । यतिना धर्मोपदेशो ददे, ततः पृष्टं तेन—"युष्माभिः स्नानं न क्रियते, कुतः शुद्धिर्भवति ?" । यतिना प्रोक्तम्—"शरीरमिदमशुचि विद्यते, तस्य स्नानेन किं भवति ? मनःशुद्धिरेव वीक्ष्यते । यतः—

रसासृग्मांसमेदोऽस्थि—मज्जाशुक्रान्त्रवर्चसाम् । अशुचीनां पदं कायः, शुचित्वं तस्य तत् कुतः ॥१॥
नवस्रोतःस्रवद्विस्र—रसनिस्यन्दपिच्छिले । देहेऽपि शौचसङ्कल्पो, महामोहविजृम्भितम् ॥ २ ॥"

श्रुत्वैतदध्यौ द्विजः—"अहं मुधा शुचिवादं करोमि, अहो! एत एव शुचयः, ब्रह्मचारी सदा शुचिः"। इति ध्यात्वा पुनर्विप्रो गुरुं स्माह—"स्वामिन्! देहे दुस्सहा व्यथा, क्षणमात्रमपि रतिं न प्राप्नोमि"। तदा सूरिरवोचत्—"कर्मणां रचनासृष्टिः करभपृष्ठवत् विषमा ज्ञेया । यतः—

जातिकुलदेहविज्ञानायुर्बलभोगभूतिवैषम्यम् । दृष्ट्वा कथमिह विदुषामिह संसारे रतिर्भवति ॥ १ ॥

अपि च कश्चिन्मुनिः रत्नत्रयीपरिणतस्तीव्रक्षयोपशमोऽपूर्वकरणबलेनोपशमश्रेणिमुपास्य चारित्रपरिणतिमारूढः सर्वथा मोहोदयरहितः च पुनः श्रुतकेवल्यपि दुष्टेन कर्मणा सत्तागतेन मोहेन उदयावस्थायोग्यभूतेन अथवाऽऽयुःकर्मप्रान्तकरणेन प्रतिपातमापन्नो गतिचतुष्टये भ्रमति, अतोऽहो! दुष्टेन मोहेनानन्तसंसारो भ्रम्यते । अतः कर्मायत्ता चेतना न कार्या । पुनः कर्मणां वैषम्यं शृणु—कश्चिद्रङ्कोऽपि क्षणादभ्युदयावहे शुभोदर्के कर्मणि नृपः स्यात्, नृपश्चाशुभकर्मविपाकोदये रङ्कः स्यात् । यतः पुराणे—

याद‍ृशं क्रियते चित्तं, देहिभिर्वर्णनादिषु । ताद‍ृशं कविवन्नूनं, जायते सततं जने ॥ १ ॥

एकदा बहुषु ब्रह्मादिदेवेषु मिलितेषु स्वस्वोत्कर्षं जल्पत्सु शनिना प्रोक्तम्—"अहं सर्वेषु देवादिषु सुखदुःखे कर्तुं क्षमः"। तदेश्वरेणोक्तम्—"ज्ञास्यते तव कृतं सुखं दुःखं च"। एवं प्रोच्य शम्भुः स्वगृहे एत्य पार्वतीं प्रति स्वचेष्टितं जगौ । ततः शम्भुः स्वयं महिषरूपं विधाय पार्वत्या महिषीरूपं कारयित्वा

नगरखालेऽशुचिमये स्थितः । द्वावपि तृतीयदिने तस्मिन् व्यतीते पार्वतीपरमेश्वरौ खालान्निर्गत्यागतौ स्वगृहे । तत ईश्वरः शनिपार्श्वे गत्वाऽवक्-"त्वदीया दशा गता कष्ये, त्वया किमपि दुःखं न दत्तम्" । शनिर्जगौ—"त्वं कुत्रास्थाः ?" । ईश्वरः स्वस्थितिं जगौ । ततः शनिः प्राह—"अहं किं स्कन्धे हन्मि ? नैव, किं तु तादृशीं धियं ददामि यथा स्वयं दुःखे पतति, त्वं त्वशुचिमये खाले स्थितः अतः परं किं दुःखं ? । अहं जनेभ्यो दुःखादिकं ददामि तदपि कर्मणा प्रेरितः" । ततः शम्भुर्जगौ—"सत्यमेव कर्मकृतं सुखं दुःखं च जीवा लभन्ते" । इति मन्दादिसर्वदेवैः कृतकर्मक्षयो नास्ति इति प्रमाणीकृतम् । इत्यादि कर्मविपाकस्वरूपं श्रीगुरुमुखाच्छ्रुत्वा स विप्रो दध्यौ—"यदि ममापि रोगोपशान्तिर्भवति तदाऽहमपि श्रीगुरुसदृशो भवामि" । साधुभिरुक्तम्—"सर्वमौषधं मुक्त्वा त्वमेकं नमस्कारं सदा गणय, षण्मासीं यावदपरं ध्यानं न कार्यम्" । ततस्तस्य नमस्कारं गणयतः कुष्ठो गतः । स सुश्रावको जातः । सर्वं धनं व्ययित्वा चारित्रं गृहीत्वा स्वर्गं गतः कदम्बः ॥

मिथ्यात्वहेत्वादिभिरात्मना कृतं, कृतं ददात्यत्र विपाकदारुणम् ।
श्रुत्वेति वाचं हि कदम्बको द्विजः, प्राप स्वरूपं प्रविधेयमन्यकैः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ द्वाविंशे स्तम्भे चतुर्विंशत्यधिकत्रिशततमं व्याख्यानम् ३२४ ॥



## पञ्चविंशत्यधिकत्रिशततमं ३२५ व्याख्यानम् ॥

अथ कर्मफलमाह—

स्वात्मनोच्छृङ्खलेनात्तं, तद्भुक्त्या कर्म हीयते । अक्षयत्वमहो एकं, ढण्ढणर्षिकुमारवत् ॥ १ ॥

स्पष्टः । श्लोकोक्तज्ञातमिदम्—

धनदकृतायां द्वारिकानगर्यां वासुदेवो बलभद्रेण सह राज्यं करोति । तस्य कृष्णस्य राज्ञो ढण्ढणेति नाम्ना देव्यस्ति । तस्याः कुक्षिसंभवो ढण्ढणकुमारः क्रमाद्यौवनं प्राप्तः पित्रा महामहेन सौन्दर्याधरीकृतामरसुन्दरी-र्भूयसीर्भूपपुत्रिकाः परिणायितः । ताभिः साकं पञ्चेन्द्रियसौख्येन विचरति स्म । एकदाऽरिष्टनेमिस्तत्र समवसृतः । तद्वनपालमुखाच्छ्रुत्वा श्रीकृष्णः सपरिकरः स्वामिवन्दनाय ढण्ढणकुमारेण सह निर्ययौ । पञ्च राजचिह्नानि विहाय त्रिप्रदक्षिणापूर्वं स्वामिनं नत्वा विनयावनम्रदेहो भगवतः पुरो निषसाद । ततः स्वामी सर्वभाषानुगामिनीं देशनां विदधे । तां श्रुत्वा जातसंवेगो ढण्ढणो महाप्रयत्नेन पित्रोराज्ञां लात्वा भगवदुपान्ते प्रवव्राज । श्रीनेमिपार्श्वे ग्रहणासेवनाशिक्षाद्वयं शिक्षयन्निति शुश्राव—मुनीनां षड्भिः कारणैराहारो ग्राह्यः, तथाहि—

वुहवेयण १ वेयावच्चे २, संजम ३ झाण ४ पाणरक्खणट्ठाए ५ ।
इरियं च विसोहेउं ६, भुंजइ नो रूवरसहेउं ॥ १ ॥

व्याख्या—क्षुद्वेदनाछेदनार्थमुपलक्षणात् पिपासावेदनाछेदनार्थं च १ । वैयावृत्त्यं दशधा प्रतीतं,

क्षुदादिपीडितो वैयावृत्त्यं कर्तुं क्षमो न स्यादिति वैयावृत्त्याय २। संयमः प्रत्युपेक्षणाप्रमार्जनादिलक्षण-संयमपालनं यथा स्यादिति, आहारादिकमन्तरा हि कच्छमहाकच्छादीनामिव संयमो दुरनुपालः स्यात् ३। ध्यानं सूत्रार्थानुचिन्तनादौ प्रणिधानं, तदर्थं भक्तपानं गवेषयेत्, क्षुत्तृषा क्षामस्य हि दुर्ध्यानोपगतस्य क्व सूत्रार्थधर्मचिन्ता? इति ४। प्राणा जीवितं तेषां रक्षणार्थम्, अविधिना हि आत्मनोऽपि प्राणो-पक्रमे हिंसा स्यात् ५। ईर्यां च गमनमार्गं विशोधयितुं, क्षुधातृषाकुलस्य हि नेत्राभ्यामपश्यतो मार्गे जीवादिनिरीक्षणं दुष्करम् ६। साधुर्भुञ्जीत अश्नीयात्, नो रूपरसहेतोः देहसौन्दर्यकरणाय जिह्वेन्द्रि-यतर्पणाय चेत्यर्थः ॥

अथ यैः कारणैर्भक्तादिग्रहणं न कुर्यात्तान्याह—

अहव न जिमिज्ज रोगे १, मोहुदए २ सयणमाइउवसग्गे ३।
पाणिदया ४ तवहेउं ५, अंते तणुमोयणट्ठं च ६॥ २॥

व्याख्या—अथवा न जिमेत्, क्व? रोगो ज्वराक्षिरोगाजीर्णाद्यातङ्के १। तथा मोहस्य पुरुषादि-वेदलक्षणस्योदये विपाकप्राबल्ये २। स्वजनादीनां मातृपितृकलत्रप्रभृतीनामुपसर्गे व्रतमोचनाय कृत-दिव्याद्युपद्रवे ३। तथा प्राणिदयाहेतोः वर्षादौ महिकाप्कायजीवरक्षायै सूक्ष्ममण्डूकादिसत्त्वाकुलायां वा भूमौ जीवरक्षार्थम् ४। तपश्चतुर्थादि तद्धेतोस्तन्निमित्तम् ५। तथाऽन्ते मरणकाले तनुमोचनार्थं संयमाक्षमदेहत्यागायेत्यर्थः ६॥

इत्यादिं श्रीमद्वैवेयनिगदितां शिक्षां धारयन् स ढण्ढणर्षिरासक्त्या निर्मुक्तः जहा लद्धं तहा खद्धं फासुयं इछं व्यचरत्। अन्येद्युः ढण्ढणस्यान्तरायिकं पूर्वकृतकर्म प्रकटीभूतम्, तेन भिक्षार्थं मुनिर्यत्र याति तत्र भिक्षां न प्राप्नोति। ततस्तेनायमभिग्रहो गृहीतः—"अतः परं यदाऽहमात्मलब्ध्याऽन्नं लप्स्ये तदाऽहं पारणकं करिष्ये, नान्यथा, अन्येषां मुनीनां लाभं न भोक्ष्येऽहम्"।

एकदा जगदीश्वरेण सह मह्यां विहरन् द्वारवत्यां समागतः, तत्रापि तथैव स विष्णुपुत्रोऽपि जगद्गुरुशिष्योऽपि स्वर्गलक्ष्मीजित्वरसंपदि द्वारिकायां पुरि महेभ्यानां सदनेषु पर्यटन् किमपि स्वोचितं भैक्ष्यं न प्राप। एकदाऽन्योऽपि मुनिस्तेन सह गतः किञ्चन नावाप। ततोऽन्यसाधवः स्वामिनं पप्रच्छुः—"हे भगवन्! अयं ढण्ढणर्षिः केन कर्मणा श्राद्धगृहे भिक्षामपि न प्राप्नोति?"। स्वामिनाऽभाणि—"श्रूयतामस्य पूर्वजन्मोदन्तः—

पुरा धान्यपुराभिधे ग्रामे पराशरनामा द्विजो जज्ञे राजनियोगी, राज्ञा तस्य तत्र ग्रामे पञ्चशतहलोपरि अधिकारो दत्तः। एकदा कृषीवलानां भोजने समागतेऽपि वृषभाणां तृणादिभक्ष्येऽप्यागते क्षुधातृषापीडितान् श्रान्तान् तान् पञ्चशतमानुषान् नामुचत्, उवाच च—"मम क्षेत्रे चाषमेकैकं दत्त्वा सर्वे भोजनादिकं कुर्वन्तु"। परतन्त्रैस्तैस्तत् कृतम्। एतद्विघ्नकर्मणा स विप्रो बद्धः, ततो मृत्वा भूरिभवान् भ्रान्त्वा किञ्चित्पुण्यं विधाय कृष्णपत्न्या ढण्ढणाया अत्र पुत्रो जातः। वैराग्येण दीक्षामभिग्रहं च गृहीत्वा भिक्षार्थं यथा याति तथैव पूर्वकर्मतः प्रत्यायाति, परं कैलासगिरितोऽपि अनन्तगुणाधिकं तस्य

स्थैर्यमस्ति यतो भिक्षामलभमानः सन्नोद्विवेज, न चान्यजनान्निनिन्द, किं तु अदीनमानसो नित्यमलाभपरिषहं सहमानः सर्वथा परपुद्गलजनितानेकजीवघातादिभिः निष्पन्नाऽऽहारदोषान् चिन्तयन्ननाहारिणां गुणान् ध्यायन् महतीं सकामनिर्जरां चिनोति। एवं तस्य मुनेः षण्मासी व्यतीता। तस्मिन् समयेऽर्धचक्री जिनवन्दनाय समागतो देशनान्ते एवमपृच्छत्—"हे भगवन्! अमीषामष्टादशसहस्रशीलाङ्गरथारूढानामष्टादशसहस्रतपोधनानां मध्ये को दुष्करकारकः साधुः?"। त्रिभुवनपतिनोदितम्—"सर्वेऽपि मुनयो दुष्करां क्रियां गुणरत्नसंवत्सरतपो जिनकल्पतुलनां द्वाविंशतिपरीषहादिभ्योऽस्खलनां च कुर्वन्ति, परं सर्वेभ्यस्तव पुत्रो ढण्ढणर्षिर्मायारसादारणकृषीवलः साम्प्रतमत्युत्कृष्टः, योऽदीनमनसा इयन्तं कालमलाभपरीषहं सहते"। हरिर्दध्यौ—"अहो! धन्यमस्य जन्म जीवितं च यस्य मुधावृत्तिः शासननायकेन त्रिकालसमस्तपदार्थज्ञायकेन द्वादशपर्षत्समक्षं प्रशंसिता"। ततो हरिर्जिनं प्रत्याह—"स महामुनिरधुना कुत्रास्ति? तं नमस्करोमि"। श्रीसर्वदर्शिनोक्तम्—"हे मुकुन्द! स भिक्षार्थमत्र पुर्यां प्रस्थितोऽस्ति, स पुरे प्रविशतस्तव भिक्षायै भ्रमन्मिलिष्यति"। ततो मुरारिः शीघ्रं कृपानिधिं सिद्धिनिकटीकृतानेकजन्तुं प्रणम्य पुरीं प्रविशन् दूरात् कृशगात्रं कक्षीकृतपात्रं तीर्थेशवर्णितत्वात्त्रिभुवनेऽप्यनीदृशं सुपात्रं परंपरयाऽनादिकालसञ्चितकर्मदूर्वामूलेषु दत्तदात्रं तं वीक्ष्याचिन्तयत्केशवः—"असौ ढण्ढणर्षिर्भोवी? किं वाऽन्यः साधुः? परं जिनेन प्रोक्तं पुरे प्रविशतस्तव स एव मिलिष्यति, अतः स एवायम्, अहो पूर्वं देवकुमारसमं रूपमभवत्, इदानीं कीदृङ्निस्तेजा जातः?"। इति

ध्यात्वौत्सुक्येन माधवः सिन्धुरादवतीर्य प्रदक्षिणां दत्त्वाऽनमत् क्ष्मातलमिलन्मौलिः, ततोऽच्युतो रचिताञ्जलिर्निराबाधविहारं पप्रच्छ, ततः स्तुतिं चकार—

साधुनाथ! सफलः स वासरः, स क्षणः क्षणकरः सुलक्षणः।
याम एव स तु सर्वसौख्यदो, यत्र वन्दनमहस्तवाभवत् ॥ १ ॥

इत्यादिस्तुतिं कुर्वन्तं तं निःस्पृहत्वाद्विहाय साधुर्गच्छति स्म। इतश्चैक इभ्यो वातायनस्थो दध्यौ— "अहो! एष महासाधुः, यो हरिणाऽवन्दि" ततः स इभ्यस्तं मुनिं स्वगृहे नीत्वा तस्मै सिंहकेसरान्मोदकान् ददौ, तान्समादाय जिनचरणौ नत्वा व्यजिज्ञपत्—"हे प्रभो! ममाभिग्रहः परिपूर्णो जातः"। प्रभुराह—"भो ढण्ढण! एषा तव लब्धिर्नास्ति, हरिणा प्रणतस्त्वं वणिजा प्रतिलाभितः, अतो विष्णोर्लब्धिः"। इति परमात्मवचनं निशम्य हृष्टस्तुष्टः परमप्रीतिभावं गतो बहुमासैर्लब्धाहारोऽपि लोलुपौत्सुक्यादिदोषविरक्तः परमेश्वरभक्तः निरीहभक्तः अभिग्रहासक्तः स दध्यौ—"परभाग्यलब्धा इयं भिक्षा त्यजनार्हा"। तत इष्टिकापाकस्थाने गतः शुद्धस्थण्डिले तान् भङ्क्त्वा भङ्क्त्वा रक्षायां परिक्षिपन्नात्मानं निन्दति—"धिग्मामभिग्रहानपेक्षाहाराभिलाषुकम्, अहो! धन्यं जिनज्ञानं येन ममाभिग्रहो रक्षितः, सूक्ष्मेक्षिकां विनाऽन्तर्गतं सूक्ष्मभावं को वेत्ति?"। इत्यादिशुक्लध्यानारूढो मोदकचूर्णमिषेण कर्माणि सर्वाण्यचूरयत्, अनन्तज्ञानमाप। तदा देवकृतस्वर्णाब्जोपरि निविष्टः केवली इति देशनां विदधे, स्वस्यान्तरायकर्म प्रकाशितवान्, "भो भव्या! एवमन्तरायजं फलं ज्ञात्वा केनापि कस्याप्य-

न्तरायो न विधेयः" । ततः श्रीजिनान्तिकमेत्य जिनं प्रदक्षिणीकृत्य नमस्तीर्थायेत्युक्त्वा केवलिसभायामुपविष्टः । क्रमान्मुक्तिमाप । इति ॥

दत्तं फलं कर्मभिरत्र तद्वरं, यत्तज्जयार्थं प्रतिकारदोऽमिलत् ।
ध्यात्वा जिनेन्द्रस्य गुणान् स ढण्ढणः, कर्माणि जित्वा समवाप केवलम् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ द्वाविंशे स्तम्भे
पञ्चविंशत्यधिकत्रिशततमं व्याख्यानम् ३२५ ॥

---

## षड्विंशत्यधिकत्रिशततमं व्याख्यानम् ३२६ ॥

अथ चित्तैकाग्र्यमाह—

तैलपात्रधरो यद्वत्, राधावेधोद्यतो यथा । क्रियास्वनन्यचित्तः स्यात्, भवभीतस्तथा मुनिः ॥ १ ॥

यथा तैलपात्रधरो मरणभयभीतोऽप्रमत्तस्तिष्ठति तथा मुनिः स्वगुणघातभीतः संसारेऽप्रमत्तस्तिष्ठति । यथा कश्चिद्राजा कञ्चन पुरुषं लक्षणोपेतं वधायानुज्ञापितवान् तदा सभाजनैर्विज्ञप्तः—"स्वामिन्! क्षमस्वास्यापराधं, मा मारयैनम्" । राज्ञोक्तम्—"यदा महत्स्थालं तैलपूर्णं सर्वनगरचतुष्पथेऽनेकनाटकवाद्यतूर्याकुले तैलबिन्दुमपातयन् सर्वतो भ्रामयित्वाऽत्रानयति तदा न मारयामि, यदि च तैलबिन्दुपातस्तदाऽस्य तत्कालं प्राणापहारः कार्यः" । इत्युक्तेऽपि स पुरुषस्तत् स्वीचकार, तथैवानेकजनसंकुले

मार्गे तैलस्थालं शिरसि धृत्वा सोपयोगोऽपतिततैलबिन्दुः समागतः । तद्वन्मुनिरनेकसुखदुःखव्याकुले भवेऽपि स्वसिद्ध्यर्थमप्रमादी स्यात् । पुनर्दृष्टान्तयति—यथा स्वयंवरे कन्यापरिणयार्थं राधावेधोद्यतः स्थिरचित्तो भवति तथा मुनिर्भवभीतः संसारसंसरणगुणावरणादिमहादुःखाद्भीतः क्रियासु समितिगुप्तिरूपास्वनन्यचित्तो भवति । यतः—

आमिसलुद्धेण वणे, सीहेण य दाढचक्कसंगहिया । तह वि हु समाहिपत्ता, संवरजुत्ता मुणिवरिंदा ॥१॥

अत्र गाथार्थसमर्थनाय सुकोशलमुनिसंबन्धश्चासौ—

अयोध्यायां कीर्तिधरो राजा सहदेवीपत्नीयुक्तो राज्यं चक्रे । अन्यदा सुकोशले पुत्रे जाते दीक्षां ललौ, सुकोशलो देशाधिपत्यं चक्रे । अन्यदा कीर्तिधरमुनिर्मध्याह्ने भिक्षार्थं नगरमध्ये प्रविशन् सहदेव्या दृष्टः, दध्यौ च सा—"यदि कदाचित् कीर्तिधरं पितरं सुकोशलो द्रक्ष्यति तदा दीक्षां गृहीष्यत्येव" । एवं ध्यात्वा सा तं सेवकपार्श्वात् पुराद्बहिर्निष्कासयामास । सुकोशलधात्री रोदिति । सुकोशलोऽवादीत्—"मातः ! किं रुद्यते त्वया ?" साऽवक्—"तव पिता मुनिस्तव मात्रा पुराद्बहिः कर्षितः" । तदाकर्ण्य सर्वर्द्ध्या वन्दितुं भूपो ययौ । धर्मं श्रुत्वा पप्रच्छ—"स्वामिन् ! महोपसर्गे प्राप्तेऽपि निर्ग्रन्था निर्भयत्वं कथं रक्षन्ति ?" । तदा मुनिः प्राह—

विषं विषस्य वह्नेश्च, वह्निरेव यदौषधम् । तत्सत्यं भवभीताना-मुपसर्गेऽपि यत्त्वभीः ॥ १ ॥

यथा कश्चिद्विषपीडितो विषस्यौषधं विषमेव करोति, यथा सर्पदष्टः निम्बादिचर्वणे न बिभेति ।

अथवा कश्चिदग्निदग्धः पुनरपि अग्निदाहपीडानिवारणाय पुनरग्नितापमङ्गीकरोति, तत्सत्यं, यत् यस्मात् भवभीतानां मुनीनामुपसर्गेऽपि भवसंचितकर्मक्षपणायोद्यतानां न भीतिः, उपसर्गैर्बहुकर्मक्षपणं मन्वानाः साधवो न भयवन्तो भवन्ति साध्यकार्यनिष्पत्तौ साहाय्यकारिकारणत्वात् इति ॥

स्थैर्यं भवभयादेव, व्यवहारे मुनिर्व्रजेत् । स्वात्मारामसमाधौ तु, तदप्यन्तर्निमज्जति ॥ २ ॥

मुनिः तत्त्वज्ञानी भवभयात् नरकनिगोददुःखोद्वेगात् व्यवहारे एषणादिक्रियाप्रवृत्तौ स्थैर्यं व्रजेत् गच्छेत् लभेतेत्यर्थः । स्वात्मारामसमाधौ ज्ञानानन्दादिरूपे तदपि भवभयमपि अन्तर्मध्ये निमज्जति लयीभवति स्वत एव विनश्यति आत्मध्यानलीलालीनानां सुखदुःखसमावस्थानां भयाभाव एव भवति ।

अत्र भवमग्नानां जीवानां धर्मेच्छा न भवति, इन्द्रियसुखास्वादलीना मत्ता इव निर्विवेका भ्रमन्ति, दुःखाग्निना इतस्ततो दुःखापनोदार्थमनेकोपायचिन्तनव्याकुला भ्रमन्ति सूकरा इव महामोहभवाम्भोधौ, किमन्यत्, सर्वसिद्धिकरं श्रीमद्वीतरागवन्दनादिकमपि न कुर्वन्ति, इन्द्रियसुखार्थं च तपउपवासादि-कष्टानुष्ठानमाजन्मकृतं हारयन्ति, निदानदोषान्न गणयन्ति, मोक्षहेतुरूपं जैनशासनं देवादिसुखहेतुरूपं मत्वा मुह्यन्ति, भवाब्धौ मत्स्या इव जीवा ऐश्वर्यादिषु मिथ्यावासिता भ्रमन्ति, ततो भवोद्वेग एव कार्यः, स एवोपसर्गेषु साहाय्यदायको ज्ञेयः" । इत्यादि श्रीगुरूपदेशाच्छ्रुत्वा प्रबुद्धः सुकोशलो व्रतं ललौ । सहदेवी तु पुत्रवियोगपतिद्वेषाभ्यां मृता वने व्याघ्री जाता । दैवात् कीर्तिधरसुकोशलमुनी तत्राययतुः चतुर्मासीतपश्चक्रतुः । पारणकदिने गच्छन्तौ तौ व्याघ्र्या दृष्टौ, मुनी तु प्राणान्तोपसर्गं ज्ञात्वा कायोत्सर्गं

चक्रतुः । सुकोशलमुनिर्व्याघ्र्या भक्ष्यमाणः क्षपकश्रेण्यारूढः केवलज्ञानमवाप्य सद्यो मुक्तिं ययौ । ततः कीर्तिधरमृषिं भक्षयन्ती व्याघ्री तन्मुखे स्वर्णखचितदन्तान् दृष्ट्वा जातिस्मृतिं प्राप्ता स्वपतिं विज्ञाय प्राप्तपश्चात्तापा समादायानशनं सहस्रारं स्वर्गं गता । कीर्तिधरोऽपि शुक्लध्यानेनाजरामरं पदं प्राप्तेति ।

लब्धोपसर्गोऽपि जहौ न तत्त्वगं, दार्ढ्यं भवोद्वेगरतः सुकोशलः ।
तद्वद्व्रताहैर्मुनिभावसङ्गतै-र्धार्या तथा कीर्तिधरर्षिवन्मतिः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादवृत्तौ द्वाविंशे स्तम्भे षड्विंशत्यधिकत्रिशततमं व्याख्यानम् ३२६ ॥

## सप्तविंशत्यधिकत्रिशततमं व्याख्यानम् ३२७ ॥

अथ निर्वेदी जीवो मोक्षसाधनोद्यमवर्ती लोकसंज्ञायां न मुह्यति, लोकसंज्ञा हि धर्मसाधनव्याघातकरी ज्ञेयाऽतस्त्याज्यैवेत्याह—

लोकमालम्ब्य कर्तव्यं, कृतं बहुभिरेव चेत् । तदा मिथ्यादृशां धर्मो, न त्याज्यः स्यात्कदाचन ॥ १ ॥

चेत् यदि यद् बहुभिः कृतं तत्कर्तव्यं लोकमालम्ब्य एवं क्रियते तदा मिथ्यादृशां धर्मः कदापि न त्याज्यः स्यात्, तच्च बहुभिः क्रियमाणत्वात् । म्लेच्छाचारी लोको बहुतरः, यतः अनार्येभ्य आर्याः

स्तोकाः, आर्येभ्यो जैनाः स्तोकाः, जैनेष्वपि जैनपरिणतिवन्तोऽल्पाः, अतो बहुलोकानुयायिना न भवितव्यमिति ॥

श्रेयोऽर्थिनो हि भूयांसो, लोके लोकोत्तरे च न ।
स्तोका हि रत्नवणिजः, स्तोकाश्च स्वात्मसाधकाः ॥ २ ॥

लोके बाह्यप्रवाहे श्रेयोऽर्थिनो धनस्वजनतनुकल्याणार्थिनो भूयांसः प्रचुराः सन्ति, च पुनर्लोकोत्तरेऽमूर्त्तात्मस्वभावाविर्भावलक्षणे प्रवर्तमाना न सन्ति, हीति निश्चितं, रत्नवणिजः स्तोकाः तथा च स्वात्मसाधका निरावरणत्वनिष्पादकाः स्तोका इति ॥

अत्रार्थे संबन्धश्चासौ—

सर्वत्राप्यधिगम्यन्ते, पापिनो नेतरे जनाः । भूयांसो वायसाः सन्ति, स्तोका यच्चापपक्षिणः ॥ १ ॥

श्रेष्ठिसेनापतिसार्थवाहदूतदौवारिकराजयुवराजामात्यमहामात्यकिङ्करप्रभृतिसकललोकसनाथायां श्रीश्रेणिकराजपर्षदि धर्मिणः पापिनो वा नगरे बहव इत्येकदा धर्माधर्मविवादे जायमाने सर्वैरपि सभासद्भिः पापिनो बहवो धर्मिणश्च स्वल्पा इत्यभिहिते सनिर्बन्धं राज्ञा पृष्टोऽभयो मन्त्री भणति स्म—“हे देव ! बहवो धर्मिणः पापिनश्चाल्पीयांसः” । कथमेतदिति गाढमाग्रहेण भणितो मन्त्री श्वेतं श्यामं चेति चैत्यद्वयं पुराद्बहिरचीकरत् । ततो धर्मवद्भिर्धवले प्रासादे पापवद्भिश्च श्यामले प्रासादे समागन्तव्यमिति पटहोद्घोषणां सकलेऽपि पुरे त्रिकचत्वरराजमार्गमहापथादिषु अभयो मन्त्री कारयति स्म । अथ स्वस्वसम्प-

दनुसारेण विहितवेषा अपि पौरा धवलप्रासादमुपेयिवांसः, द्वौ मातुलभागिनेयौ तु श्यामलं प्रासादं समेतौ । अथ स्वपरिवारपरिवृतोऽभयेन मन्त्रिणाऽनुगम्यमानो राजा तत्र प्रासादपार्श्वे प्राप्तः सकलमपि पौरवर्गं धवलप्रासादे वीक्ष्याभाषिष्ट—"भोः पौराः ! कथं सर्वेऽपि यूयं श्वेतचैत्ये प्रविष्टाः ?" । अथ तेऽभ्यधुः—"हे राजेन्द्र ! स्वस्वकुलक्रमागताचारकरणेन वयं सम्यग्धर्मिणः, तेनात्र प्रासादे समेताः स्मः" । "अहो ! प्राणातिपातमृषावादादत्तादानपरदारगमनद्यूतादिसप्तव्यसनाद्यशेषदोषभयः सर्वेऽप्यमी धर्मवन्तः एवं समीचीनमजनि वचनमभयस्य मन्त्रिण" इति मत्वा राजा श्यामप्रासादे प्राप्तः, तत्र मातुलभागिनेयौ दृष्टौ पृष्टौ च—"कथं युवामत्र चैत्ये प्राप्तौ ?" । "हे स्वामिन् ! आवाभ्यां पुरा श्रीसुधर्मस्वामिनोऽभ्यर्णे सुराया मांसस्य चेति पृथक् नियमावङ्गीकृतौ, तत आवयोर्नियमभङ्गोऽभूत्, तेनावां महापापिनौ, यतो व्रतलोपी महापापी, अतः कारणादावामिह प्रासादे प्रविष्टौ" ।

अथवा कथान्तरे इदमपि श्रुतं—येन श्रीसुदर्शनश्रेष्ठिना राजगृहजनेषु अर्जुनमालिकृतोपसर्गनिवारणं कृतं स श्रेष्ठी भार्यया सह मनसि विचार्य श्यामचैत्य एव प्रविष्टः, तद्वीक्ष्य श्रेणिकोऽभयं प्राह—"आबालगोपालप्रसिद्धधर्मकारकः यः, त्रिभुवनेऽपि यस्य धर्मकीर्तिः, स कथं पापप्रासादे प्रविशति ?" । स्वामिन् ! युष्माभिस्तत्र गत्वा पृच्छ्यते तदा संशयनिवृत्तिर्भवेत्" । तदा नृपः सपरिकरस्तत्र गत्वा सुखासनादुत्तीर्य श्रेष्ठिनं पप्रच्छ—"यूयं महाधर्मिणोऽत्र श्यामप्रासादे कथं प्रविष्टाः" ? । स प्राह—"स्वामिन् ! श्रीवीरस्वामिप्रदर्शितश्रावकधर्ममप्यहं यथास्थितं न पालयामि प्रत्यहं षड्कायजीवहिंसकत्वेन, अतोऽहं

कथं धर्मी ? इति लोकसंज्ञागड्डरिकप्रवाहत्यागेन ये धर्मरसिकाः श्राद्धाः श्रीत्रैशलेयवाक्यतन्मयास्त एव धर्मिणः, परं च संपूर्णधर्मरसिकास्तु मुनय एव । यतः—

प्राप्तः षष्ठं गुणस्थानं, भवदुर्गाद्रिलङ्घनम् । लोकसंज्ञारतो न स्यात्, मुनिर्लोकोत्तरस्थितिः ॥ १ ॥

मुनिः षष्ठं गुणस्थानं सर्वविरतिलक्षणं प्रमत्ताख्यं प्राप्तः पुनः लोकैः कृतं तत्कर्तव्यं गतानुगतिकनीतिः तत्र रतो रागी गृहीतग्रहो न स्यात् । किंभूतं गुणस्थानं ? भवः संसारः स एव दुर्गाद्रिर्विषमपर्वतस्तस्य लङ्घनम् । किंविशिष्टो मुनिः ? लोकोत्तरमर्यादया स्थितः, लोको हि विषयोत्सुकः मुनिस्तु निष्कामः, लोकः पुद्गलसम्पन्नेऽष्ठत्वमानी मुनिः पुनर्ज्ञानादिसंपदा श्रेष्ठः, अतः किं लोकसंज्ञया तेषाम् ? ।

आत्मसाक्षिकसद्धर्म—सिद्धौ किं लोकयात्रया ।
तत्र प्रसन्नचन्द्रस्य, भरतस्य च निदर्शनम् ॥ २ ॥

लोकसंज्ञात्यागेन स्वरूपोपयोगभोगसुखमग्ना निर्ग्रन्था औदयिकमिन्द्रियसुखं दह्यमानस्वगृहप्रकाशवन्मन्यन्ते न सुखमस्ती"त्यादिकं सद्धर्मकृतस्वरूपं सुदर्शनमुखादवगम्य गतसंशयः श्रेष्ठिनं प्रणम्य पौरसमक्षं महामहत्त्वं दत्त्वाऽवोचत्—"अहो ! मदीयपुरं श्रेष्ठं यत्र युष्मादृशाः पुण्यपवित्रा धर्मिणः सन्ति" । इति स्तुत्वा स्वराजमन्दिरेऽगात् । पौरा अपि सुदर्शनधर्मं प्रशंसन्तः स्वस्थानं प्रापुः इति ॥

लोकप्रवाहं प्रविहाय तत्त्ववित्, मौनीन्द्रमार्गानुभवाज्जिनन्दकृत् ।
लब्ध्वा प्रतिष्ठां जनतास्वगोचरां, शुद्धात्मधर्मं वितनोति सन्मतिः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ द्वाविंशे स्तम्भे सप्तविंशत्यधिकत्रिशततमं व्याख्यानम् ३२७ ॥

## अष्टाविंशत्यधिकत्रिशततमं व्याख्यानम् ३२८ ॥

अथ चक्षुःस्वरूपमाह—

धर्मचक्षुर्भृतः सर्वे, देवाश्चावधिचक्षुषः । सर्वचक्षुर्धराः सिद्धाः, साधवः शास्त्रचक्षुषः ॥ १ ॥

स्पष्टः । नवरं स्याद्वादपद्धत्या यत्र शास्यते तच्छास्त्रं, न हि भारतरामायणादय इहलोकशिक्षारूपाः शास्त्रव्यपदेशं लभन्ते, तथा जैनागमोऽपि सम्यग्दृष्टिपरिणतस्य शुद्धवक्तुरेव मोक्षकारणं, मिथ्यादृष्टिनोपदिष्टं तु भवहेतुरेव, यतो नन्दीसूत्रे—"इच्चेइयं दुवालसंगं गणिपिडगं सम्मत्तपरिग्गहियं सम्मसुअं मिच्छत्तपरिग्गहियं मिच्छसुअं"। अत्र शास्त्रमनेकान्तमतव्यवस्थापकवाक्यसमूहं तदेव चक्षुर्नेत्रं येषां ते इति शास्त्रचक्षुषः साधवो निर्ग्रन्थाः स्युः । अत्र आर्यरक्षितसूरिसंबन्धश्चायम्—

दशपुरे सोमदेवो द्विजः, तस्य भार्या सोमा परमार्हती, तयोरार्यरक्षितो ज्येष्ठः पुत्रः द्वितीयः फल्गुर-

१ अविषयाम्.

क्षितश्चासीत्। ज्येष्ठः साङ्गोपाङ्गवेदादिशास्त्राण्यधीत्य पाटलीपुर्यां ततः स्वपुरे प्रविशन् राज्ञा गजस्कन्धेऽध्यारोप्य गृहे स्थापितः सन्मानितश्च। अथ गृहाभ्यन्तरे जननीं नन्तुं नृपदत्तसन्मानावृतो जगाम। 'हे पुत्र! तव स्वागतं वर्तते' इत्युक्त्वा मौनमाश्रिता। उदासीनां मातरं वीक्ष्यावोचत्—"मातः! मां किं न ज्ञापसे? सर्वजनपूज्यं सर्वशास्त्रतत्त्वज्ञं मां दृष्ट्वा किं न मोदसे?"।

अथेदं रुद्रसोमाऽऽख्यत्, किमेभिः स्वान्यनाशकैः। हिंसोपदेशकैः शास्त्रै—रधीतैर्नरकप्रदैः ॥ १ ॥

एतेषां च प्रभावेण, त्वां घोरे दुःखसागरे। पतिष्यन्तं प्रपश्यन्त्याः, स्यादानन्दः कथं मम ॥ २ ॥

यदा दृष्टिवादं पठसि त्वं तदा मदात्मा हृष्टः स्यात्। विनीतः पुत्रः स्वाम्बां स्माह—"तच्छास्त्रं क्व पठ्यते?"। साऽऽह—"तोसलिपुत्रगुर्वन्तिके"। प्रभातेऽम्बामापृच्छ्य तमभ्येतुं चचाल। इतश्च तत्पितुः मित्रं द्विज आर्यरक्षितमिलनाय सार्धा नवेक्षुयष्टीरादायागात्। स द्विजः प्रेम्णा समालिङ्ग्य तं प्राह—"त्वन्निमित्तं मयाऽऽनीता इक्षुलता इमा गृहाण"। सोऽवादीत्—"इक्षुसन्दोहो मन्मातुर्दीयताम्, अहं तु कार्ये गच्छामि"। तेन द्विजेन ता इक्षुयष्टीस्तदम्बायै दत्त्वा तद्वृत्तं कथितम्। तदा जनन्या ध्यातं—"नूनमनेन शकुनेन सूचितं यदसौ साधिकनवपूर्वाणि पठिष्यति"। अथार्यरक्षितः स्वयं गुरुवन्दनक्रियामजानन् ढङ्करश्राद्धेन सह ययौ, श्राद्धानुरूपविधिना गुरुं प्रणम्य स्थितः। तदा श्राद्धो गुरुं प्रति द्विजजातिकुलादिकं प्राह।

चतुर्दशानां सद्विद्या—स्थानानामेष पारगः। प्रावेशि पत्तने राज्ञा, गजारूढो गतेऽहनि ॥ १ ॥

आर्यरक्षितो गुरुं स्माह—

अध्येतुं दृष्टिवादं हि, पूज्यानहमशिश्रियम् । तत्तदध्यापनेनोच्चैः, प्रसादः क्रियतां मयि ॥ १ ॥

तच्छ्रुत्वा सूरयोऽप्यूचुः, यद्येवं तत् परिव्रज । क्रमेण दृष्टिवादं ते, पाठयामो यथा वयम् ॥ २ ॥

ततो दीक्षामङ्गीकृत्य स्माह—

इह स्थितं हि मां राजा, स्वजनाः पूर्जनास्तथा । दीक्षातः पातयिष्यन्ति, प्रसह्याप्यनुरागतः ॥ १ ॥

तच्छ्रुत्वा ते सगच्छास्तं लात्वाऽन्यत्र ययुः । इदं शिष्यचौर्यमाद्यं श्रीवीरशासनेऽभूत् । ततस्तोसलिपुत्र-पार्श्वे यावन्मितं दृष्टिवादमभूत् तावन्मितं सर्वं जग्राह । ततः श्रीवज्रस्वाम्यन्तिके पठनायाचलत् । मार्गग्रामे श्रीभद्रगुप्तसूरीशं स ननाम । तं सर्वगुणाढ्यं वीक्ष्योपलक्ष्य सूरीशा आलिलिङ्गुः, प्रमो-दाच्चैवमूचिरे—

किं चाद्यानशनं कर्तु—मिच्छामि स्वल्पजीवितः । ततस्त्वां प्रार्थये वत्स, भव निर्यामको मम ॥ १ ॥

तेन तदङ्गीकृतं । ततस्तेऽनशनं विधायेति तं स्माहुः—

एकत्रोपाश्रये वज्र—स्वामिना सह नो वसेः । किं तु स्थित्वा परत्र त्वं, पठेस्तस्यान्तिके श्रुतम् ॥ १ ॥

वसेद्वज्रेण सार्धं हि यः सोपक्रमजीवितः । एकामपि निशां नूनं, तेन साकं म्रियेत सः ॥ २ ॥

तद्वचः प्रतिपद्याथ तान्निर्याम्य सोमभूर्वज्रयुतां पुरीमागात्, तां च निशां बहिस्तस्थौ । तद्रात्रि-प्रान्ते वज्रसूरिरमुं स्वप्नमैक्षत—मत्पात्रस्थं सावशेषं पयः कोऽप्यतिथिः पपौ । अथार्यरक्षितो वज्रसूरिं

प्रज्ञाते नत्वा स्थितः। तदा स्वागतमापृच्छ्य पृष्टः—"क्व प्रतिश्रये स्थितोऽसि?" । सोऽवग्—"बहिः स्थितोऽस्मि" । ततो वज्रस्तमन्यधात्—"हे सोमसूः! तोसलिपुत्रशिष्य! बहिः स्थितस्त्वं कथं पठिष्यसि?" ।

सोऽवादीन्नद्रगुप्ताह्व—सूरीन्द्रस्यानुशासनात्। स्वामिन्नहमितो भिन्न—मुपाश्रयमुपाश्रयम् ॥ १ ॥
दत्त्वोपयोगं वज्रोऽपि, तन्निमित्तं विज्ञाय च। प्रोचे युक्तमिदं प्रोक्तं, तैः पूज्यैर्ज्ञानसागरैः ॥ २ ॥

ततः श्रीवज्रसूरिस्तं पूर्ववाचनां ददाति।

ततोऽल्पेनापि कालेन, नव पूर्वाण्यधीत्य तम्। दशमं पूर्वमध्येतुं, प्रवृत्तं गुरुरित्यवक् ॥ १ ॥
पूर्वस्य दशमस्याथ, यमकानि पठ द्रुतम्। ततः पठितुमारेभे, विषमाण्यपि तानि सः ॥ २ ॥

इतश्चार्यरक्षितवियोगार्दितौ पितरौ तमाह्वातुं फल्गुरक्षितं प्रेषयामासतुः । अनुजोऽपि तत्रागत्याग्रजं स्माह—"त्वं स्वकुटुम्बं प्रतिबोधय, मया सह तत्रागच्छ, ममापि त्वद्दीक्षां प्रयच्छ" । ततोऽनुजं दीक्षयित्वा श्रीवज्रं व्यजिज्ञपत्—"स्वामिन्! अहं पित्रोः प्रतिबोधार्थं स्वपुरे गच्छामि" । ततोऽवादीत्स्वामी—"हे वत्स! त्वं पठ, मा व्रज" । यमकैर्निर्विण्णः स पुनर्गुरुमपृच्छत्—"कियन्मात्रं मया दशमपूर्वमधीतं?" । ततः स्मित्वा सूरिरवदत्—"हे वत्स! बिन्दुमात्रं दशमपूर्वस्य त्वयाऽऽदायि शेषं तु जलधेः समं, किं विषीदसि त्वं? सोद्यमोऽसि, सुधीरसि, तदस्य त्वरितं पारं त्वं लप्स्यसे" । इत्थमध्येतुमुत्साहि-

तोऽपि पुनः पुनः स्वानुजेन सह गुर्वन्तिकं गत्वा इत्युवाच—"असौ मद्भ्राता मामाह्वातुमिहाययौ, तदादिशत मां पूज्याः !" । ततः श्रुतोपयोगः स्वामिना दत्तः । यतः—

नागन्ताऽसौ गतः सद्यः, स्वल्पमायुर्ममापि च । तदेतद्दशमं पूर्वं, मयि स्थास्यति निश्चितम् ॥ १ ॥
ज्ञात्वेत्यनुमतो गन्तुं, श्रीवज्रेणार्यरक्षितः । पुरं दशपुरं फल्गु-रक्षितेन समं ययौ ॥ २ ॥

तत्र धर्मदेशनां दत्त्वा स्वकुटुम्बं प्रबोधयामास । नृपः सम्यक्त्वं प्राप । अन्यदा सौधर्मेन्द्रः श्रीमहाविदेहे श्रीसीमन्धरजिनं प्रणम्य सूक्ष्मनिगोदस्वरूपं श्रुत्वा पप्रच्छ—"स्वामिन् ! भरतक्षेत्रे कोऽपि तादृशः सूक्ष्मनिगोदस्वरूपकथकोऽस्ति ?" । प्रभुणोक्तं—"श्रीआर्यरक्षितोऽस्ति" । तत इन्द्रस्तत्रागत्य सूरिं नत्वा यथार्थं वस्तुस्वरूपं निगोदादीनां श्रुत्वा हृष्टः स्वर्गं जगाम । ततः श्रीआर्यरक्षितस्वामी पृथक् पृथक् चतुरोऽनुयोगानस्थापयत् । ततोऽनशनेन दिवं प्रापेति ॥

मुक्त्वा नवोढां रतिसौख्यमाश्रयां, नौतन्यशास्त्रार्थग्रहोद्यमे रतः ।
देवेन्द्रवन्द्यो गुरुरार्यरक्षितो, जातस्तथाऽन्यैरपि नाम्यमङ्गिभिः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ द्वाविंशे स्तम्भेऽष्टाविंशत्यधिकत्रिशततमं व्याख्यानम् ३२८ ॥

## एकोनत्रिंशदधिकत्रिशततमं ३२९ व्याख्यानम् ॥

अथ मूर्छास्वरूपमाह—

मूर्छाछन्नधियां सर्वं, जगदेव परिग्रहः । मूर्छया रहितानां तु, जगदेवापरिग्रहः ॥ १ ॥

मूर्छया छन्ना आच्छादिता धीर्येषां तेषां मूर्छामग्नानां स्वकीयतयाऽप्राप्तमपि सर्वं जगत् परिग्रह एव, तस्य स्वामित्वभोगित्वसुखबुद्धेः समन्वितत्वात् । तु पुनर्मूर्छया रहितानां निग्रत्वाभाग्यत्वेन त्यागवतां जगदेव न परिग्रहः । न हि जीवपुद्गलयोरेकक्षेत्रावगाहिता परिग्रहः, किं तु चेतना तद्रागद्वेषपरिणतिवती यदा भवति तदैव सा परिग्रहत्वं प्राप्नोति, तत्त्यागे च श्रमणगुण आविर्भवति । अत्रार्थे संयतमुनिसम्बन्धः, स चायम्—

काम्पिल्यपुरेशः संजयाख्यनृपः एकदा मृगयायां निर्गतः मांसास्वादलुब्धोऽश्वारूढस्त्रस्तान्मृगान् वधार्थमनुधावितः । तत्र वनैकप्रदेशेऽनगार एको धर्मध्यानं ध्यायति, तन्मुनेः पार्श्वमागतान्मृगान् हन्ति । अथ राजा तत्र मुनिदर्शने जाते सति भीतः साधुं प्रणम्य वक्ति—"भगवन्! अत्र मृगवधे ममापराधं क्षमस्व" । अथ मौनेन स ध्यानमाश्रितो राजानं न प्रतिवक्ति, ततो नृपो भयत्रस्तोऽभूत् यथा न ज्ञायते किमयं क्रुद्धः करिष्यति? इति त्रस्तः पुनः प्रोचे—"संजयनामाहं राजास्मि, तस्मान्मां संभाषय, त्वं तु क्रुद्धस्तेजसा नरकोटिसमूहं दहेः" । इत्थं तेनोक्ते मुनिराह—"हे पार्थिव! अभयं तव, न तु

कोऽपि त्वां दहति" । एवं समाश्वास्योपदिशति—"अनित्ये जीवलोके किं हिंसायां प्रसज्जसि ? नरक-
हेतुरियं कर्तुं नोचिता, यथा तव मृत्युभयं तथाऽन्येषामपीति परलोकहितं कार्यं कुरु । तथा च दाराः
सुता देहश्च जीवन्तमनुजीवन्ति तदर्जितवित्ताद्युपभोगेन, मृतं तु नानुव्रजन्ति, ते पुनः कथं सहायाः
स्युः ? इत्यतः कृतघ्नेषु नास्था कार्या, सर्वमपि परिग्रहं विमुच्य तपोऽङ्गीकुरु" । इत्यादिधर्मं श्रुत्वा राज्यं
त्यक्त्वा गर्दभालेर्मुनेः समीपे प्रव्रज्यां प्राप्य सामाचारीतः अप्रतिबद्धतया विहरन् कश्चित्सन्निवेशम-
गात् । तत्रैकः कश्चिन्मुनिः वैमानिकाच्च्युत्वाऽत्र क्षत्रियनृपो जातः कुतोऽपि निमित्ताज्जातिस्मृत्या विरक्तः
प्रव्रज्य विहरन् तं संयतमुनिं वीक्ष्य तत्परीक्षार्थमिदमाचख्यौ—"किं नाम ? किं गोत्रं ? कस्मा अर्थाय
प्रव्रजितः ?" । इति श्रुत्वा संयत उवाच—"संजय इत्याह्वा मम, गौतमगोत्रोऽहं, गर्दभालिनामाचार्यै-
र्जीवघातान्निवर्तितोऽहं, तन्निवृत्तौ च तैर्मुक्तिरूपं फलं दर्शितं, ततस्तदर्थं प्रव्रजितोऽस्मि" । पुनः क्षत्रि-
यमुनिस्तद्गुणाकृष्टचेता अपृष्टोऽपीदमाह—"क्रियादिवादिनः सर्वे एकांशग्रहणेन न यथार्थं वस्तुस्वरूपक-
थनं कुर्वन्ति, ततोऽसत्प्ररूपणां हित्वा सद्धर्मशीलनं भवता कार्यम् । अपि च—

परिग्रहग्रहावेशा—द्दुर्भाषितरजःकिराः । श्रूयन्ते विकृताः किं न, प्रलापा लिङ्गिनामपि ॥ १ ॥

लिङ्गिनामपि जैनवेषविडम्बकानामपि प्रलापा असंबद्धवचनव्यूहाः किं न श्रूयन्ते ? अपि तु श्रूयन्त
एव । परिग्रह एव ग्रहस्तस्यावेशात् । प्रलापाः कथंभूताः ? विकृता विकारमयाः, तथा उत्सूत्रवचनर-

जोऽवगुम्फिताः । एवं हि परिग्रहाभिलाषमग्ना ज्ञानपूजनाद्युपदेशेन परिग्रहमेलनासक्ता उत्सूत्रं वदन्ति ।

पुनः क्षत्रियमुनिरेव संजयमुनिं महापुरुषदृष्टान्तैः स्थिरीकर्तुमाह श्रीसूत्रे उत्तराध्ययने १८

एअं पुण्णपयं सोच्चा, अत्थधम्मोवसोहिअं । भरहोऽवि भारहं वासं, चिच्चा कामाइ पव्वए ॥ १ ॥

इत्यादि ज्ञेयम् । एवं भरतादिमहाबलमुनीन् यावत् महापुरुषोदन्तैर्ज्ञानपूर्विका क्रिया फलवती निःपरिग्रहिणामित्युपदिश्य पुनः प्राह—"यथा श्रीभरतादिभिः श्रीस्याद्वादतत्त्वं समाश्रितं तथा त्वयाप्यत्रैव निश्चलं चेतो विधेयम्"। इति श्रुत्वा संजयर्षिर्हृष्टश्चिरं विहृत्य प्राप्तकेवलः सिद्धः इति ।

त्यक्त्वा ममत्वं मृगयां च संजयः, सकृद्वचः क्षत्रियसाधुनोदितम् ।
श्रुत्वा विशेषं चरणादरोऽभवत्, विद्भिरन्यैरपि तद्विधेयम् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ द्वाविंशे स्तम्भे
एकोनत्रिंशदधिकत्रिशततमं व्याख्यानम् ३२९ ॥

---

## त्रिंशदधिकत्रिशततमं व्याख्यानम् ३३० ॥

अथानुभवप्रभावमाह—

व्यापारः सर्वशास्त्राणां, दिक्प्रदर्शन एव हि । पारं तु प्रापयत्येको—ऽनुभवो भववारिधेः ॥ १ ॥

सर्वशास्त्राणामनुयोगकथानां च व्यापार उद्यमोऽभ्यास इति यावत् दिक्प्रदर्शन एव, यथा हि पथिकस्य मार्गदर्शको मार्गं दर्शयति परं पुरप्राप्तिस्तु स्वचङ्क्रमणेनैव, एवं शास्त्राभ्यासः तत्त्वसाधनविधिदर्शकः, पुनर्भवसमुद्रस्य पारं तु एकोऽनुभव एव प्रापयति नान्यः, श्रीसुयगडांगादिषु अध्यात्मभावेन सिद्धिरित्युक्तत्वात्, तेन सद्गुरुचरणचंचरीकैरात्मस्वरूपभासनतन्मयत्वं निष्पाद्यम् । अत्रार्थे आभीरीवञ्चकवणिजः संबन्धोऽयम्—

क्वापि नगर एको वणिक्, स च हट्टस्थितः प्रतिवासरं व्यापारं चक्रे । अन्यदाऽत्यर्थं सरलाऽऽभीर्येका तस्यापणे रूपकद्वयमादाय कर्पासार्थमुपागमत् । कर्पासोऽधुना महर्घ्योऽस्तीत्युक्त्वा स नैगम एकरूपकस्य कर्पासं तोलयित्वा तस्यै ददौ । सा तु सरला द्विरर्पणात् द्वयो रूपकयोर्मम कर्पासो दत्त इति ज्ञात्वा तमादाय शीघ्रं ययौ । अथ स वणिग् दध्यौ—"रूपकोऽयमेको मया मुधा लेभे, तदद्यैनमुपभुञ्जे" । इति ध्यात्वा रूपकस्य घृतखण्डशर्करागोधुमादिकं लात्वा गृहे प्रैषीत्, भार्यया घृतपूरानचीकरत् । तया च घृतपूरेषु कृतेषु तज्जामाता मित्रयुतः केनचित्कार्येण पुरान्तरादागतः । ततः सा हृष्टा तैर्घृतपूरैः समित्रं तमभोजयत् । यतः स्त्रीणां जामाताऽतीव वल्लभः । तस्मिन् गते च स वणिग् भोजनाय गृहं गतः । स्वाभाविकं भक्तं वीक्ष्य कामिनीं पप्रच्छ—"हे नितम्बिनि ! कुतो नाद्य घृतपूरास्त्वया कृताः ?" । रमणी जगाद—"स्वामिन् ! ते तु कृताः, परं सत्पात्रे निहिताः, यतः—

किं तु हेतोः कुतोऽप्यत्रा-यातोऽस्मद्दुहितुः पतिः । समित्रो घृतपूरैस्तै-र्भोजितो गमनोत्सुकः ॥ १ ॥"

तन्निशम्योत्पन्नविषादो दध्यौ—"मया परार्थमार्जारी वराकी वृथा वञ्चिता, तद्विप्रतारणात् पापं मयैव बद्धं, घृतपूरास्तु अन्यैर्जग्धाः । यतः—

पापं हि क्रियते मूढैः, स्त्रीपुत्रादिकृते भृशम् । विपाकोऽस्य तु कालेन, स्वयमेवोपभुज्यते ॥ १ ॥"

इति ध्यात्वा बाह्यभूमौ गत्वा देहचिन्तां विधाय सूर्यतापतप्तस्तरोस्तले विशश्राम, तदैकं साधुं भिक्षायै यान्तं वीक्ष्यैवं स्माह—"भगवन्! एहि, विश्रम्य क्षणं मद्वार्तां शृणु" । मुनिर्ज्ञानी जगौ—"स्वकार्ये मया द्रुतं गम्यं, ततो नाहं स्थास्याम्यत्र" ।

वणिक् प्रोचेऽन्यकार्येणा—प्यार्य किं कोऽपि गच्छति । यद्भवद्भिः स्वकार्येण, मया गम्यमितीरितम् ॥ १ ॥
उवाच मुनिरन्यार्थे, क्लिश्यन्ते बहवो जनाः । भार्याद्यर्थं क्लिश्यमानः, त्वमेवात्र निदर्शनम् ॥ २ ॥

इत्येकेन वाक्येन स बुद्धः साधुं प्राह—"स्वामिन्! यूयं तपःपारणादिकृत्यं कुरुत, पश्चादहं समेष्यामि" । ततो मुनिर्निर्दोषाहारेण देहभाटकं दत्त्वा स्वाध्यायं व्यधात् । तदा स तदन्तिके गत्वा धर्ममश्रौषीत्—

अतीन्द्रियं परं ब्रह्म, विशुद्धानुभवं विना । शास्त्रयुक्तिशतेनापि, न गम्यं यद्बुधा जगुः ॥ १ ॥

विज्ञा इति प्राहुः शास्त्राणां युक्तयस्तेषां शतेनापि अनेकागमरहस्यावबोधेनापि निर्मलानुजवम-न्तरेण इन्द्रियज्ञानेनागम्यं परमुत्कृष्टं ब्रह्म चैतन्यं न ज्ञातुं शक्यम् ।

न सुषुप्तिरमोहत्वा—न्नापि च स्वापजागरौ । कल्पनाशिल्पविश्रान्तेः, तुर्यैवानुजवे दशा ॥ २ ॥

दशाश्चतस्रः, तत्र बहुशयनरूपा मिथ्यात्वस्थानां, शयनावस्था सम्यग्दृशां, जागराऽप्रमत्तमुनीनां, तुर्या चोत्तरोत्तरा सयोगिकेवलिनां । पुनर्ग्रन्थान्तरे सुषुप्तिस्तीव्रनिद्राघूर्णितचेतसां, साऽनुजवघतो न जवेत्, कस्मात्? अनुजवे मोहरहितत्वात्, तथा स्वापदशा जागराऽपि च न, एतद्दशाद्वयं कल्पनो-पेतम्, अनुजवे कल्पना विकल्पवती चेतना तस्याः शिल्पं विज्ञानं तस्य विश्रान्तिरजावः तस्याः, अतः संपूर्णनयपक्षेऽनुजवे तुर्या एव दशा वाच्या ।

इत्यादिश्रीगुरूपदेशात्प्रबुद्धो वणिग् गुरुं स्माह—"हे विजो! बन्धूनापृछ्य दीक्षायै यावदहमायामि तावत्पूज्यैरिह स्थेयम्" इत्युक्त्वा गृहे गत्वा स्वजनान् जायां चेति जगाद—"हट्टव्यापाराल्लाजः स्वल्प एव लज्यते, अतो विदेशवाणिज्यं प्राज्यलाजार्थेऽहं करिष्ये । सार्थवाहौ द्वावत्र विद्येते, तत्रैकः स्वधनं दत्त्वा ईप्सितं पुरं नयति उपार्जितवित्तमध्याच्च स्वयं जागं न गृह्णाति, द्वितीयस्तु निजं वित्तं नैव प्रदत्ते, सेवितः सन् पूर्वार्जितं सकलं लुम्पति । तस्माद्यूयमादिशत केन सार्थनाथेन साकमहं व्रजामि?" । स्वजनाः प्रोचुः—"जवान् प्रथमेन सार्कं यातु" । ततः स बन्धुजिर्द्धुतं तत्रोद्याने ययौ ।

सार्थवाहः क्वास्ति? इति तैः पृष्टः स एवमवोचत्—“वृक्षाधः स्थितः सिद्धिपुर्याः सार्थवाहः, एष साधुर्निजं धर्मधनं दत्त्वा प्रत्यहं व्यापारं कारयति, स्वोपार्जितमध्येंऽशमात्रं न कदापि गृह्णाति, तदनेन सह मुक्तिपुरीं कामितां यास्यामि । अन्यः सार्थपस्तु जायादिस्वजनात्मको विज्ञेयः, स हि प्राच्यं धर्मधनं सर्वं हन्ति, नवं च न दत्ते । किं च युष्माभिरेव सानन्दं प्रोक्तं यदाद्येन सह व्रज तस्माद्बन्धुमंत्रन्धं मुक्त्वा एनं साधुमहं श्रयामि” ।

इत्युदीर्य स वणिग्मुनिपार्श्वे, बन्धुमोहमपहाय महात्मा ।
प्राप सानुत्तरधर्ममुदारं, सौख्यमत्र च परत्र च लेभे ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ द्वाविंशे स्तम्भे त्रिंशदधिकत्रिशततमं व्याख्यानम् ३३० ॥

## समाप्तोऽयं द्वाविंशः स्तम्भः २२

## ॥ अथ त्रयोविंशः स्तम्भः २३ ॥

### एकत्रिंशदधिकत्रिशततमं व्याख्यानम् ३३१ ॥

अथ योगत्रयमाह—

मनोवाक्काययोगानां, चापल्यं दुःखदं मतम् । तत्त्यागान्मोक्षयोगानां, प्राप्तिः स्यादुज्झितादिवत् ॥ १ ॥

स्पष्टः । अत्रार्थे सम्बन्धश्चायम्—

नन्दिपुरे रत्नशेखरो नृपः । रत्नमत्याद्याः पत्न्योऽभवन् । तयोरपत्यानि मृतवत्सादोषेण न जीवन्ति । अनेकैरुपायैरन्यदा पुत्रो जातः, सोऽपि मृतः इति कृत्वा उत्कराटंकायामुज्झितः, दैववशान्न मृतः, पुनः पश्चाद्गृहीतः, तस्योज्झितकुमार इति नाम स्थापितं । यौवनं प्राप्तः, परं मनसाऽत्यन्तमहंकारवान्, कायेन कस्यापि ग्रीवामपि न नमयति, वचसा दुर्भाषी, जगत्तृणं मन्यमानः स्तम्भ इव मातापित्रोरपि न नमति स्म । अन्यदा लेखशालायां पठन् गुरुमवक्—“रे त्वमस्मज्जनपदजनताप्रदत्तकणाहार उच्चासन उपविशसि अहं नीचासन उपविशामि” इति ह्रक्कयन् चपेटयाऽऽहत्याध्यापकं भूमौ पातयामास । ततः कुपुत्र इति कृत्वा राज्ञा निष्कासितो देशात्तापसाश्रमे गतः । पर्यस्तिकां बद्ध्वा मुनीनामग्र आसीनस्तापसैः शिक्षितः—“हे महाभाग! विनयं कुरु” । सोऽवक्—“जटाजूटमस्तकभस्मक्षिप्ता-

ङ्गेषु नग्नेषु को विनयः ?"। सद्यस्तैर्दूरे निष्कासितो रुष्टः प्राह—"अहं पितृराज्यं प्राप्य युष्मान् निग्रहीष्यामि" इति संकल्प्याग्रे गच्छन् मार्गे सिंहं वीक्ष्य करकृतनिशितकरवालो दर्पात्संमुख एव गतवान्। सिंहेन भक्षितः खरो जातः। ततः करभः, ततः पुनरपि नन्दिपुरे पुरोहितस्यैव सुतो जातः। शैशवेऽपि चतुर्दशविद्यापारगो महाहङ्कारवशान्मृत्वा तत्रैव पुरे गायनो डुम्बो जातः। पुरोहितस्तं दृष्ट्वा महास्नेहवान् जायते। इतश्च केवलज्ञानी तत्रागात्। केवली पृष्टः पुरोधसा—"ममायं डुम्बोऽतीव वल्लभः कथं ?"। केवलिना पूर्वभवसंबन्धः सर्वः प्रोक्तः। तच्छ्रुत्वा गायनोऽपि जातिस्मृतिं प्राप्य श्रीमत्केवलज्ञानिपरमात्मवचनश्रवणरसिकः पुनः स्वोद्धरणस्वरूपं पप्रच्छ। तदा श्रीसर्वज्ञेनानेकस्याद्वादपक्षसमन्वितत्रिकरणयोगशुद्धिकरणस्वरूपं प्रकाशितम्। मोक्षयोगविचारो निरूपितः। तथाहि—

मोक्षेण योजनाद्योगः, सर्वोऽप्याचार इष्यते। विशिष्य स्थानवर्णार्थालम्बनैकाग्रगोचरः ॥ १ ॥

अत्र मिथ्यात्वादिहेतुगतमनोवाक्कायरूपं योगत्रयं, तच्च कर्मवृद्धिहेतुत्वान्न ग्राह्यं, किं तु मोक्षसाधनहेतुभूतं ग्राह्यम्। सकलकर्मक्षयो मोक्षः, तेन योजनाद्योग उच्यते, स च सर्वोऽप्याचारो जिनशासनोक्तचरणसप्ततिकरणसप्ततिरूपो मोक्षोपायत्वाद्योग इष्यते। तत्र विशेषेण स्थान १ वर्ण २ अर्थ ३ आलम्बन ४ एकाग्रता ५ इति पञ्चप्रकारो योगो मोक्षोपायहेतुर्मतः इति, अनेनैतदुक्तम्—अनादिपरभावासक्तानां भवभ्रमणग्रहात् पुद्गलभोगमग्नानां न भवत्ययमभिप्रायः, यतोऽस्माकं मोक्षः साध्योऽस्ति, स च गुरुस्मरणतत्त्वजिज्ञासादियोगेन स्वरूपनिर्मलं निःसङ्गं परमानन्दमयं परमात्मानं संस्मृत्य तत्कथा-

श्रवणप्रीत्यादिकं करोति, स च परम्परया सिद्धयोगी स्यात्। न हि मरुदेवावत्सर्वेषामल्पप्रयासेन सिद्धिः,
तस्या हि अल्पाशातनादिदोपकारकत्वेन निःप्रयासा सिद्धिः, अन्यजीवानां चिराशातनाबद्धगाढकर्मणां
तु स्थानादिक्रमेणैव भवति। तत्र स्थानं वन्दनककायोत्सर्गशरीरावस्थानमासनमुद्रादिकं च १। वर्णः
अक्षरः शुद्धोच्चाररूपः २। अर्थो वाक्यस्य भावार्थः ३। आलम्बनं वाच्ये पदार्थेऽर्हत्स्वरूपे उपयो-
गस्यैकत्वम् ४। एकाग्रता शुद्धस्वरूपे निश्चलत्वम् ५। यावद्ध्यानैकत्वं न भवति, तावद्व्यासशुद्धावर्ण-
शुद्धिपूर्वकमावश्यकचैत्यवन्दनप्रत्युपेक्षणादिकमुपयोगचापल्यवारणार्थमवश्यं करणीयं महाहितकरं सर्व-
जीवानां, तेन स्थानवर्णादिक्रमेण तत्त्वप्राप्तिरिति।

अथ योगपञ्चके बाह्यान्तरङ्गसाधकत्वमुपदिशति—

कर्मयोगद्वयं तत्र, ज्ञानयोगत्रयं विदुः। विरतेष्वेष नियमात्, बीजमात्रं परेष्वपि ॥ २ ॥

तत्र मोक्षसाधनयोगे स्थानवर्णस्वरूपं कर्मयोगद्वयं बाह्यं, अन्यत् योगत्रयं ज्ञानरूपमान्तरीयकम्।
एष पञ्चप्रकारो योगो विरतेषु देशविरतसर्वविरतेषु नियमाद्भवति। अत्र योगपञ्चकं चापल्यत्यागहेतुक-
मपरेषु मार्गानुसारिप्रमुखेषु बीजमात्रं भवति।

इत्यादिधर्मोपदेशं श्रुत्वा संसारासारतां मत्वा पुरोहितकुम्भौ द्वावपि धर्मं कृत्वा स्वर्गं गतौ, क्रमा-
न्मुक्तिं यास्यतः।

स्थानादयः पञ्चविधाः सुयोगा, मोक्षस्य प्राप्त्यर्थमिहोदितास्ते ।
धृतास्त्रिशुद्ध्योज्झितसाधुनाऽन्यैः, पूर्णादरस्तेषु तथा विधेयः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोविंशे स्तम्भे
एकत्रिंशदधिकत्रिशततमं व्याख्यानम् ३३१ ॥

## द्वात्रिंशदधिकत्रिशततमं व्याख्यानम् ३३२ ॥

अथ यज्ञस्वरूपमाह—

ब्रह्माध्ययननिष्ठावान्, परब्रह्मसमाहितः । ब्राह्मणो लिप्यते नाघै—र्नियागप्रतिपत्तिमान् ॥ १ ॥

ब्राह्मणो मुनिः द्रव्यभावब्रह्मचर्यवान् अघैः पापैर्न लिप्यते न लेपवान् भवति कथंभूतो ब्राह्मणः? ब्रह्माध्ययननिष्ठावान् ब्रह्माध्ययनमाचाराङ्गप्रथमश्रुतस्कन्धनवमाध्ययनं, तस्मिन्नुक्ता निष्ठा मर्यादा, तद्वान् । पुनः परब्रह्मसमाहितः परब्रह्म शुद्धात्मस्वरूपं, तेन समाहितः समाधिमयः । पुनः नियागप्रतिपत्तिमान् नितरां निश्चयेन वा यागः कर्मदहनं तस्य प्रतिपत्तिमान् निष्पत्तिमान् ।

अत्र यागशब्दस्य वर्णनं विधीयते—तत्र यागो यज्ञः, स च द्विविधः द्रव्ययज्ञो भावयज्ञश्च, द्रव्ययज्ञे

गोमेधनरमेधगजमेधछागमेधादिके ध्रुवं प्राणिवधः स्यात् । यज्ञाचार्यास्तु इत्थं निर्घृणं वाक्यं जल्पन्ति—

यज्ञार्थं पशवः सृष्टाः, स्वयमेव स्वयम्भुवा । यज्ञस्य भूत्यै सर्वस्य, तस्माद्यज्ञे वधोऽवधः ॥ १ ॥
औषध्यः पशवो वृक्षाः, तिर्यञ्चः पक्षिणस्तथा । यज्ञार्थं निधनं प्राप्ताः, प्राप्नुवन्त्युच्छ्रितिं पुनः ॥ २ ॥
तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा । दत्तेन मासं प्रीयन्ते, विधिवत् पितरो नृणाम् ॥ ३ ॥
द्वौ मासौ मत्स्यमांसेन, त्रीन्मासान् हारिणेन तु । औरभ्रेणात्र चतुरः, शाकुनेनेह पञ्च तु ॥ ४ ॥
षण्मासांश्छागमांसेन, पार्षतेनेह सप्त वै । अष्टावेणस्य मांसेन, रौरवेण नवैव तु ॥ ५ ॥
दश मासांस्तु तृप्यन्ति, वराहमहिषामिषैः । शशकूर्मयोर्मांसेन, मासानेकादशैव तु ॥ ६ ॥
संवत्सरं तु गव्येन, पयसा पायसेन तु । वार्ध्रीणसस्य मांसेन, तृप्तिर्द्वादशवार्षिकी ॥ ७ ॥
इति स्मृत्युनुसारेण, पितॄणां तर्पणाय या । मूढैर्विधीयते हिंसा, साऽपि दुर्गतिहेतवे ॥ ८ ॥

इति योगशास्त्रे द्वितीयप्रकाशेऽप्युक्तम् । स्मार्तानां शिक्षावाक्यं प्रबोधचिन्तामणौ चोक्तम्—

यदि वैदिकमन्त्राणां, शक्तिरुद्घुष्यते द्विजैः । तद्व्यापारं विना हन्तु—र्विमुञ्चन्तामसूनजाः ॥ १ ॥
यदि वैदिकमन्त्राणां, शक्तिः प्रामाण्यमश्नुते । तत्तया मार्यमाणाना—मजानां माऽस्तु वेदना ॥ २ ॥
यदि वैदिकमन्त्राणां, शक्तिरस्त्यतिशायिनी । तत् किं देवा न तृप्यन्ते, व्द्याग्नैः शान्तिकृते हुतैः ॥३॥
तन्मन्त्रैः परिणीतानां, वैधव्यं वीक्ष्य योषिताम् । कथं नाम कृती वेद, वेदस्याव्यभिचारिताम् ॥ ४ ॥
येषां पञ्चेन्द्रियप्राणि—नाशे नाशङ्कते मनः । कुन्थुपूतरकादीनां, वधे तेषां कुतः कृपा ॥ ५ ॥

॥१५५॥

वधो धर्मं जलं तीर्थं, गौर्नमस्या गुरुर्गृही । अग्निर्देवो द्विजः पात्रं, येषां तैः कोऽस्तु संस्तवः ॥ ६ ॥

श्रीधनपालपण्डितेन द्रव्ययागवर्णनमपि न विहितं, तथाहि-श्रीभोजनृपेणैकश्छागो हन्तुमानीतोऽस्ति, स च बूबू करोति स्म । तदा सर्वैरन्यपण्डितैः स वर्णितः । ततो राजाऽवग्धनपालं-"त्वमपि स्वबुद्ध्या यज्ञस्तुतिं कुरु" । तदा श्रावको धनपालः स्माह—"नृप ! असौ छागस्त्वां कथयति—

नाहं स्वर्गफलोपभोगरसिको नाभ्यर्थितस्त्वं मया,
संतुष्टस्तृणभक्षणेन सततं साधो न युक्तं तव ।
स्वर्गे यान्ति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो, ।
यज्ञं किं न करोषि मातृपितृभिः पुत्रैस्तथा बान्धवैः ॥ १ ॥"

इति श्रुत्वा राजा रुष्टः पुनः समयं लब्ध्वा प्रसन्नीकृतः, परं स्वनियमव्रतहानिर्न कृतेति । अन्योऽपि संबन्धश्चायम्—

अवन्त्यां विप्रो रविगुप्तः, स च प्रत्यहं स्वशास्त्रयुक्तिभिर्लोकानां पुरो यज्ञधर्मवर्णनं करोति—वेदविहिता हिंसा न दोषाय, प्रत्युत यज्ञसूरिकारकछागादीनां महाफलं प्रजायते । इत्यादि प्ररूपयन् आयुःपूर्णे मृत्वा तृतीयनरके उत्पन्नः । ततोऽनन्तकालं यावत् परिभ्रम्य काम्पिल्यपुरे वामदेवनामा विप्रोऽभूत्, तत्राप्यश्वमेधादिस्तवनां तनोति स्म, निशाभोजनाद्यभक्ष्याणि प्रत्यहं भक्षयति, तस्य सुमित्रनामा श्राद्धः सुहृत् संजातः, स च तस्मै शिक्षां ददाति—

"भगानारटतः क्लीव-दृशो व्यापाद्य निर्दयम् । धर्मं वदन्तो यज्वानः, शौनिकानतिशेरते ॥ १ ॥
हिंसाऽप्यहिंसा वेदोक्ते-त्याहुरागमरागतः । ये निर्विचारचित्तास्ते, चार्वाकाय शपन्ति किम् ॥ २ ॥"

इत्यादि श्रुत्वा तं प्रत्याह-"हे मित्र! जैनैस्त्वं विप्रतारितोऽसि मुग्धत्वेन" । श्राद्धः प्राह—"निःस्पृहस्य विप्रतारणं किमर्थम्? तेन तस्य को लाभः? न कोऽपि" इति । अथान्यदा श्राद्धेन स वामदेवविप्रोऽपरग्रामे विवाहोत्सवे प्रारब्धे सार्धं नीतः, अन्तरैकत्र ग्रामे स्थितः, तदा सन्ध्यासमयोऽभूत्, श्राद्धेन चतुर्विधाहारप्रत्याख्यानं विहितम् । विप्रस्तु रात्रावेवाशनादि निष्पाद्य भोजनार्थमुपविशन् श्राद्धं मित्रं निमन्त्रयामास—"हे मित्र! समागच्छ भोजनाय, अद्यापि रात्रिर्न जाता, सन्ध्यासमयोऽस्ति, दीपज्योतिर्विधाय भुञ्ज्वहे" । श्राद्धः स्माह-"यतः—

रयणिभोयण जे दोसा, ते दोसा अंधयारम्मि । जे दोसा अंधयारम्मि, ते दोसा संकडे मुहे ॥ १ ॥

दीपप्रभया तु रात्रौ अनेकपतङ्गादिजीवा आगत्य पात्रे पतन्ति, मम तु रात्रिभोजनविषये द्विविधं त्रिविधेन प्रत्याख्यानमस्ति" । ततः स जैनगुरुं निन्दन् भोजनार्थं स्थितवान् । इतश्च रन्धनपात्रमध्ये दैवादहिः पाचितोऽज्ञानतया, भोजनानन्तरं विषं व्याप्तं, श्रावको धर्ममन्त्रेण सज्जीकृतः, श्राद्धेन केवलिसमीपे नीतः, तत्र पूर्वभववार्तां श्रुत्वा प्रबुद्धः भावयज्ञस्वरूपं पप्रच्छ । केवली स्माह—

इन्द्रियाणि पशून् कृत्वा, वेदीं कृत्वा तपोमयीम् ।
अहिंसामाहुतिं दद्या—देष यज्ञः सनातनः ॥ १ ॥

इति श्रुत्वा जावयज्ञकरणे रसिको विप्रो गृहं गत्वा निजं पितरं आह—"अहं दीक्षां लास्ये"। पित्रोक्तम्—"गतिरपुत्रस्य नास्ति"। तेनोत्तरं दत्तम्—

जायमानो हरेज्जार्यां, वर्धमानो हरेद्धनम्। म्रियमाणो हरेत् प्राणान्, नास्ति पुत्रसमो रिपुः॥ १॥

इत्यादियुक्त्या पितरौ प्रतिबोध्य दीक्षां जग्राह।

द्रव्ययागमपहाय केवलि—वाक्यतो विदितजावयज्ञकृत्[1]।
वामदेव निजवक्रतां त्यजन्, सोऽचिरेण शिवसौख्यमाप्तवान्॥ १॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोविंशे स्तम्भे द्वात्रिंशदधिकत्रिशततमं व्याख्यानम् ३३२॥

## त्रयस्त्रिंशदधिकत्रिशततमं व्याख्यानम् ३३३॥

अथ द्रव्यजावपूजामाह—

स्याद्भेदोपासनारूपा, द्रव्यार्चा गृहमेधिनाम्। अभेदोपासनारूपा, साधूनां जावपूजना॥ १॥

गृहस्थानां जेदोपासनारूपा आत्मनः सकाशादर्हन् परमेश्वरो जिन्नो निष्पन्नानन्दचिद्विलासी तस्यो-

---

१ लुप्तप्रथमान्तमेतत्.

पासना सेवना तद्रूपा निमित्तालम्बनरूपा द्रव्यपूजा योग्या स्यात् । साधूनां तु अभेदोपासनारूपा परमात्मनः सकाशात् स्वात्मनोऽभेदरूपा भावपूजनोचिता । यद्यपि सविकल्पभावपूजा गुणस्मरणबहुमानोपयोगरूपा भावार्चा गृहिणां भवति तथापि निर्विकल्पोपयोगस्वरूपैकत्वरूपा भावपूजा निर्ग्रन्थानामेव । अत्रार्थे संबन्धश्चायम्—

श्रीपुरे जितारिनृपोऽभूत् । तत्र धनसारवणिग् वसति स्म । स गृहस्थो दरिद्री कुत्राप्यादरं नाप्नोति, परं प्रकृत्या सरलः प्रत्यहं सद्गुरूपदेशं शृणोति स्म । अन्यदा स धनसारो वणिग् विनययुक्तो दीनवाण्या एवं पप्रच्छ—"हे स्वामिन्! अहं दरिद्री दुःखी निर्धनः कथमभवम्?" । तदा गुरुणोक्तम्—"त्वया पूर्वभवे श्रीजिनार्चा न विहिता, तेन त्वं दुःखी जातः । अधुना द्रव्यभावपूजां विधेहि, येन तव दुःखक्षयः स्यात् । तत्र भावपूजास्वरूपं च पूज्यपादैरुक्तम्—

दयाम्भसा कृतस्नानः, संतोषशुभवस्त्रभृत् । विवेकतिलकभ्राजो, भावनापावनाशयः ॥ १ ॥
भक्तिश्रद्धानघुसृणो—न्मिश्रपाटीरजद्रवैः । नवब्रह्माङ्गयुग्देवं, शुद्धमात्मानमर्चय ॥ २ ॥

हे उत्तम! नवप्रकारब्रह्मचर्यरूपनवाङ्गधारिदेवं शुद्धमात्मानमनन्तज्ञानादिपर्यायमर्चय पूजां कुरु । कीदृशो भूत्वा? दया द्रव्यभावस्वपरप्राणरक्षणरूपा सैवाम्भो जलं तेन कृतं स्नानं पावित्र्यं येन सः, संतोषः पुद्गलपिपासाऽभावः तदेव शुभवस्त्रं तद्धारकः, विवेकः स्वपरविभजनरूपज्ञानं तदेव तिलकं तेन शोभमानः, पुनर्भावना अर्हद्गुणैकत्वरूपा तया पावनः पवित्र आशयोऽभिप्रायो यस्य सः,

पुनर्भक्तिः आराधना श्रद्धा च प्रीतिः 'एस अट्ठे परमट्ठे' एवंरूपा ते एव घुसृणं चन्दनं तेनोन्मिश्रं पाटीरजं कुङ्कुमं तस्य द्रवैः रसैः स्वात्मदेवमर्चयेति ।

क्षमापुष्पस्रजं धर्म—युग्मं क्षौमद्वयं तथा । ध्यानाभरणसारं च, तदङ्गे विनिवेशय ॥ ३ ॥

मदस्थाननिदात्यागैः, लिखाग्रे चाष्टमङ्गलम् । ज्ञानाग्नौ शुद्धसङ्कल्प—काकतुण्डं च धूपय ॥ ४ ॥

प्राग्धर्मलवणोत्तारं, धर्मसंन्यासवह्निना । कुर्वन् पूरय सामर्थ्यं, राजन्नीराजनाविधिं ॥ ५ ॥

इत्यादि भावपूजास्वरूपं ज्ञेयं विशेषेण ग्रन्थान्तरात् । जिनपूजास्तात्रगुणग्रामस्तुतिस्तवनादिकरणादप्राप्तदर्शनानां सम्यक्त्वप्राप्तिः, ये तु प्राप्तदर्शनगुणास्तेषामपि क्षायिकभावोत्पत्तिः रत्नत्रयकारणं च जिनार्चा भवेत् । यतः—"थयथुइमंगलेणं भंते ! जीवे किं जणइ ? गोयमा ! थयथुइमंगलेणं जीवा नाणदंसणचरित्तलाभं जणइ" इति वचनात् । श्रीजिनार्चातः पौद्गलिकसंपत्तिः सार्वभौमशक्रपदवीराज्यधनधान्यादिरूपा, तथा चिदानन्दसंपत्तिः, एतदुभयलक्ष्मीप्रापक(ण)हेतुका श्रीजिनसेवा स्यात् । इति धर्मदेशनां श्रुत्वा धनसारो गुरूनापृछ्याद्यप्रभृति श्रीमदर्हत्पूजां विना मुखे पानीयं न क्षेप्यमित्यभिग्रहं गृह्णाति स्म । तद्दिनमारभ्य श्रेष्ठी नित्यमेव श्रीजिनेश्वरप्रतिमानां केशरचन्दनकर्पूरादिना सुरभिजातिपद्मचम्पककेतकीमालतीमुचुकुन्दादिपुष्पैश्च पूजां करोति स्म त्रिकरणशुद्ध्या । अनया रीत्या निरन्तरं बहुमानतः श्रीसर्वज्ञप्रभुतां ज्ञानदृक्पथमवतार्य पूजां कुर्वता धनसारेण बहु

१ दर्शनं सम्यक्त्वम्.

पुण्यमुपार्जितम् । ततः पुण्योदयादनेकप्रकारेण लक्ष्मीर्गृहे प्रकटीबभूव । ततो विशेषेण जिनभक्तिं विदधानः श्रेष्ठी सप्तक्षेत्र्यां धनं वपति स्म । यदुक्तम्—"जिणभवण १ बिंब २ पुत्थय ३ संघ सरूवा य सत्त खित्ताइं" । एवमहर्निशं द्रव्यपूजां भावपूजां च कुर्वाणो धनसारश्रेष्ठी सम्यग्दर्शनं लब्ध्वा स्वर्गायुष्कं बद्ध्वा नरभवायुः संपूर्णीकृत्य प्रथमस्वर्गे सुरोऽभूत् । ततश्च्युत्वा महाविदेहे उत्तमार्यकुलेऽवतीर्य सद्गुरुसमीपे चरणं गृहीत्वा मुक्तिं प्राप्येति ।

श्रीश्राद्धधर्मा धनसारनामा, पूजाफलं शीघ्रमिहैव लेभे ।
साधुत्वरूपे धृतभावपूजा—योगेन मुक्तिं स लभौ विशुद्ध्या ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोविंशे स्तम्भे त्रयस्त्रिंशदधिकत्रिशततमं व्याख्यानम् ३३३ ॥

## चतुस्त्रिंशदधिकत्रिशततमं व्याख्यानम् ३३४ ॥

अथ ध्यानस्वरूपमाह

ध्याता ध्यानं तथा ध्येय—मेकतावगतं त्रयम् । तस्य ह्यनन्यचित्तस्य, सर्वदुःखक्षयो भवेत् ॥ १ ॥

ध्याता आत्मा, ध्येयं ध्यातुर्योग्यं तत्स्वरूपं, ध्यानं ध्येयैकाग्रता, एतत् त्रयं यस्य पुरुषस्य एकता-

वगतम् एकत्वप्राप्तं तस्यानन्यचित्तस्य तद्रूपचेतनामयस्य अर्हत्स्वरूपात्मस्वरूपतुल्योपयोगस्य सर्वदुःखं समस्तस्वगुणावरणरूपं तस्य क्षयः स्यात्। अत्रार्थे क्षपकर्षिसंबन्धश्चायम्—

क्वाप्यनगारः कश्चित्तपोऽतिदुस्तपं मासक्षपणादिकमाचरन् नित्यमुद्यानादिषु स्थितः स्वात्मानं ध्यायति। तद्गुणरञ्जिता काचिद्देवता तं मुनिं प्रत्यहं ननाम स्तुतिं विधाय चावोचत्—"हे निर्ग्रन्थ! मदुचितं कार्यं प्रसद्य कथनीयम्"। अथैकदा स मुनिः कस्यापि विप्रस्य दुर्वाक्यं श्रुत्वा जातकोपस्तेन समं योद्धुं प्रववृतेतराम्। तेन द्विजेन स क्षुत्क्षामदेहः क्षपको मुष्ट्यादिभिर्हत्वा पृथ्व्यामपात्यत। मुहुर्मुहुर्द्विजेन ताडयित्वा स मुमुचे। ततः क्षपकोऽपि कथञ्चन स्वस्थानमगमत्। अथ विज्ञावर्यां विज्ञा-जितासुरा सुरी मुनिपार्श्वे समाजगाम पूर्ववत् तत्पादौ प्रणनाम। क्षपकस्तु तां देवीं न किञ्चिज्जल्प। अजल्पन्तं तं साधुं देवता पप्रच्छ—"स्वामिन्! कुतोऽपराधादद्य मां न जल्पसि?"। ततो वाचंयमोऽप्युच्चैरित्युवाच—"द्विजेन हन्यमानोऽपि यन्नाहं त्वया रक्षितः ममापकारिणश्च तस्य न किञ्चिदपकृतं ततो वाणीमात्रेण प्रीतिकारिणीं त्वां न वादयामि"। तदाकर्ण्य स्मितविस्फुरिताधरा देव्यन्यधात्—"यदाऽन्योऽन्यविलग्नयोर्युवयोर्युद्धमजनवत्तदा कौतुकदर्शिन्यहमपि तत्रैवाभूवं, किंतु तदा कोपाविष्टौ तुल्यौ युवां दृष्टौ मया, तेन कः साधकः कश्च द्विज इति नाहमज्ञासिषं, तस्माद्युष्मद्रक्षां विप्रशिक्षां च न व्यधाम्"। इति श्रुत्वा क्षपकः शान्तकोपाटोप इत्यब्रवीत्—

"सूनृता प्रेरणा देवि!, त्वयाऽसौ विहिता मम। तदमुष्यातिचारस्य, मिथ्यादुष्कृतमस्तु मे ॥ १ ॥

स्येवेति न ध्येयम् १। अनाचारो दुष्टाचारः तद्ध्यानं वेक्षरदावं ध्यायतः कौकणसाधोरिव शिष्यदेवानामनागमनाद्धुतप्रव्रजितुकामस्याषाढसूरेरिव वा २। कुदर्शनं बौद्धादिरूपं तस्य ध्यानं सुराष्ट्रश्राद्धस्येव ३। क्रोधध्यानं कूलवालकगोशालकपालकनमुचिशिवभूतिप्रभृतीनामिव ४। मानध्यानं बाहुबलिसुभूमपरशुरामाभिनिवेशागतसङ्गमादीनामिव ५। परविप्रतारणरूपा माया तस्या ध्यानं मायाध्यानम् आषाढभूतिसाधोरिव ६। लोभध्यानं सिंहकेसरिसाधोरिव ७। रागोऽभिष्वङ्गमात्रं, स च कामरागस्नेहरागदृष्टिरागभेदात्त्रिधा, तत्र कामरागो विष्णुश्रियां विक्रमयशोराजस्येव, स्नेहरागो दामन्नकश्वशुरश्रेष्ठिन इव स्वपुत्रमरणश्रवणतो हृदयस्फोटात्, दृष्टिरागो ब्रह्मलोकादागत्य स्वदर्शनानुरागतः स्वशिष्यं प्रति 'आसुरे रमसे' इत्यादि भणतः कपिलस्येव, तस्य ध्यानं न कार्यम् ८। अप्रीतिमात्रं परद्रोहाध्यवसायो वा द्वेषस्तस्य ध्यानं मधुपिङ्गपैप्पलादयोरिव, हरिवंशोत्पत्तौ वीरकदेवस्येव वा ९। मोहनं मोहः तस्य ध्यानं, मोहाद्विष्णुतनुं वहतो बलभद्रस्येव १०। इच्छा संभाव्यमानलाभस्यार्थस्याभिलाषातिरेकः तस्या ध्यानमिच्छाध्यानं, माषद्वयार्थिनः कोटिसुवर्णलाभेऽपि प्रवर्धमानलोभस्य कपिलस्येव ११। मिथ्या विपर्यस्तदृष्टित्वं तद्ध्यानं मिथ्याध्यानं जमालिगोविंदप्रभृतीनामिव १२। मूर्छाऽत्यर्थं पूर्वप्राप्तस्य राज्यादेरभिष्वङ्गः स्वपुत्राणां जातमात्राणां हिंसकस्य कनकध्वजस्येव १३। शङ्कनं शङ्का संशयकरणं तस्य ध्यानं शङ्काध्यानम्, अव्यक्तवादिनामाषाढाचार्यशिष्याणामिव १४। अन्यान्यदर्शनाग्रहः काङ्क्षा तद्ध्यानं

१ क्षेत्रदावम्.

कांक्षाध्यानम् 'कविला इत्थं पि इहयं पि' इतिवदतो मरिचेरिव १५ । गृद्धिः आहारादिष्वत्यन्तमाकाङ्क्षा तस्या ध्यानं गृद्धिध्यानं मङ्गुराचार्यसूरेरिव कण्डरिकराजस्य मुक्तव्रतस्येव वा १६ । आशा परसत्कवस्तुप्राप्त्यभिलाषरूपा तस्या ध्यानमाशाध्यानं निर्घृणब्राह्मणपाथेयं प्रति निःपाथेयस्य मूलदेवस्येव १७ । तृषा परीषहोदयजन्यः पीडाविशेषः तया यद् ध्यानं तृषाध्यानं तृषार्तस्य मार्गे गच्छतो जनकसाधुमहितस्य क्षुल्लकस्येव १८ । क्षुधया यद्ध्यानं क्षुधाध्यानं राजगृहोद्यानागतलोकान् प्रति हननायोत्थितस्य द्रमकस्येव १९ । अल्पकालगम्योऽध्वा पन्थाः तस्य ध्यानं पथिध्यानं पोतनपुरमार्गं गवेषयतो वल्कलचीरिण इव २० । विषममार्गः महान् पन्थाः तस्य ध्यानं विषममार्गध्यानं सनत्कुमारं गवेषयतो महेन्द्रसिंहस्येव, ब्रह्मदत्तगवेषकस्य वा वरधनस्येव २१ । निद्रापरतन्त्रस्य ध्यानं निद्राध्यानं स्त्यानर्द्धिनिद्रया महिषमांसभक्षक १ हस्तिदन्तोत्पाटक २ मोदकाभिलाषुक ३ साधूनामिव २२ । निदानं स्वर्गमर्त्यादिऋद्धिप्रार्थनं भवान्तरविषयं नवप्रकारं तस्य ध्यानं निदानध्यानं नन्दिषेणसंभूतिद्रौपद्यादीनामिव २३ । स्नेहो मोहोदयजः प्रीतिविशेषः पुत्रादिष्वत्यन्तानुरागः मरुदेवीसुनन्दाऽर्हन्नकमात्रादीनामिव २४ । कामो विषयाभिलाषस्तस्य ध्यानं कामध्यानं हासाप्रहासाप्रलोभितस्य कुमारनन्दिस्वर्णकारस्येव रावणस्येव वा २५ । अपमानतः परगुणप्रशंसायामी(ई)र्ष्यातो वा चित्तस्य कलुषभावः कालुष्यं मलीनता तस्य ध्यानं कालुष्यध्यानं बाहुसुबाहुप्रशंसामसहमानयोः पीठमहापीठयोरिव सिंहगुहावासिसाधोरिव वा २६ । कलहो वाचिका राटिः तस्य ध्यानं रुक्मिणीसत्यभामयोः व्यतिकरे कम-

लाभेलाशाते नारदस्येव २७। युद्धं वैरिप्राणव्यपरोपणोऽध्यवसायस्तस्य ध्यानं बन्धुद्वयविहल्लविनाशे चेटकेन सह कोणिकस्येव २८। निर्गतं युद्धं प्राणप्रहाणरूपमधमं यस्मात्तत् नियुद्धं यष्टिमुष्ट्यादिभिरेव जयकारकं तस्य ध्यानं नियुद्धध्यानं बाहुबलिभरतयोरिव २९। सङ्गः परित्यक्तेष्वपि पुनः संयोगाभिलाषः तस्य ध्यानं सङ्गध्यानं राजीमत्यां रथनेमेरिव नागिलायां भवदेवस्येव वा ३०। सङ्ग्रहोऽत्यन्ततृष्णया धनोपार्जनं तस्य ध्यानं सङ्ग्रहध्यानं मम्मणस्येव ३१। व्यवहारः स्वकार्यनिर्णयार्थं राजकुलादौ न्याय-कारणं तस्य ध्यानं व्यवहारध्यानं स्वपुत्रनिर्णयार्थं द्वयोः सपत्न्योरिव ३२। क्रयणं क्रयो लाभार्थमल्प-मूल्येन बहुमूल्यवस्तुग्रहणं, विक्रयणं विक्रयो बहुना मूल्येनाल्पमूल्यवस्तुदानं, क्रयश्च विक्रयश्च क्रय-विक्रयौ तयोर्ध्यानं क्रयविक्रयध्यानं कर्पासविक्रायकवणिज इव ३३। अनर्थदण्डो निःप्रयोजनं हिंसा-दिकरणं तस्य ध्यानमनर्थदण्डध्यानं दुर्दान्तमत्ततया द्वैपायनं स्खलीकुर्वतां शाम्बादीनामिव ३४। आभोगो ज्ञानपूर्वको व्यापारस्तस्य ध्यानमाभोगध्यानं विप्रनेत्राभिप्रायेण फलान्यपि मर्दयतो ब्रह्म-दत्तस्येव ३५। अनाभोगोऽत्यन्तविस्मृतिस्तस्य ध्यानमनाभोगध्यानं विस्मृतचारित्रस्य प्रसन्नचन्द्रस्येव ३६। अणं ऋणं तेनाविलस्तस्य ध्यानं ऋणध्यानं तैलकर्षलब्धायतिभगिन्या इव ३७। वैरं मातापित्रा-दिवधोत्थं राज्यापहारादिभवं वा तस्य ध्यानं वैरध्यानं परशुरामसुभूमादीनामिव सुदर्शनं प्रति अभयादेव्या व्यन्तरीभूताया इव ३८। वितर्क ऊहः कथं राज्यादि ग्रहीष्ये इति चिन्ता तस्य ध्यानं वितर्कध्यानं नन्दराज्यं जिघृक्षोश्चाणाक्यस्येव ३९। हिंसा महिषादिजीववमारणं तस्य ध्यानं

हिंसाध्यानं कूपक्षिप्तकालशौकरिकस्येव ४० । हासो हास्यं तस्य ध्यानं हासध्यानं चण्डरुद्राचार्यशिष्य-
स्येव मित्रसहितस्य ४१ । प्रहास उपहासो निन्दास्तुतिरूपस्तस्य ध्यानं प्रहासध्यानं 'वंदामि ते नेमि-
त्तियखवगा' इति वार्तिकमुनिं प्रति वदतश्चण्डप्रद्योतस्येव ४२ । प्रकृष्टो द्वेषः प्रद्वेषस्तस्य ध्यानं प्रद्वेष-
ध्यानं मरुभूतिं प्रति कमठस्येव श्रीवीरं प्रति कर्णयोः काष्ठशलाकाद्वयं क्षिपतो गोपालस्येव वा ४३ ।
परुषमतिनिष्ठुरं कर्म तस्य ध्यानं परुषध्यानं ब्रह्मदत्तं प्रति चुलन्या इव युगबाहुं प्रति मणिरथस्येव
वा ४४ । भयं मोहान्तर्गता नोकषायरूपा प्रकृतिः कृतगजसुकुमालोपसर्गस्य सोमिलश्वशुरस्येव ४५ ।
रूप्यते निरीक्ष्यत आदर्शादाविति रूपं तस्य ध्यानं रूपध्यानं, तच्च द्विधा स्वरूपध्यानं पररूपध्यानं
च तत्र मदीयं रूपं शोभनमिति स्वरूपध्यानं सनत्कुमारस्येव, पररूपध्यानं तु श्रेणिकचित्रलिखित-
फलकं वीक्षमाणयोः सुज्येष्ठाचेल्लणयोरिव ४६ । आत्मप्रशंसाध्यानं शकटालमन्त्रितो निजकृतकाव्य-
प्रशंसामभिलपतो वररुचेरिव स्वविज्ञानं कोशाया दर्शयतो रथकारस्येव वा ४७ । परनिन्दाध्यानं कूर-
करुकं प्रति चतुर्णां क्षपकाणामिव ४८ । परस्य गर्हा परसमक्षं दोषोद्घट्टनं तस्या ध्यानं परगर्हाध्यानं
सङ्घसमक्षं दुर्बलिकापुष्पमित्रं गर्हमाणस्य गोष्ठामाहिलस्येव ४९ । परिग्रहो धनधान्यादिरूपस्तस्य ध्यानं
गतविभवस्य विभवार्थे वा चारुदत्तस्येव मुनिपतिमुनिरोधककुंचिकस्येव वा ५० । परस्यासद्भूतदोषा-
विष्करणं परपरिवादस्तस्य ध्यानं परपरिवादध्यानं सुभद्रां प्रति श्वश्रूननान्दृणामिव ५१ । परस्यान-
पराधिनोऽपि आत्मकृतदोषचटापनं परदूषणं तस्य ध्यानं परदूषणध्यानं भद्रकवृषभं प्रति मत्पति-

रनेन हत इतिस्वदोषमपलपन्त्या जिनदासभार्याया इव ५२। आरम्भः परोपद्रवः तस्य ध्यानमारम्भध्यानं कुरुमोत्कुरुरूयोरिव द्वैपायनस्येव वा ५३। संरम्भो विषयादिषु तीव्राभिलाषस्तस्य- ध्यानं संरम्भध्यानं जनन्युपरोधतो व्रतं पालयतोऽपि विषयाभिलाषिणः क्षुल्लककुमारस्येव ५४। पापं परस्त्रीसेवादि तस्यानुमोदनं भव्यमनेन कृतमिति वदनं तस्य ध्यानं पापध्यानं धन्योऽयं भोगी भ्रमरभूप इत्याद्यनुमोदकजनानामिव ५५। अधिकरणं पापोत्पत्तिहेतुस्थानं तस्य ध्यानमधिकरणध्यानं वापीध्यानतत्परस्य नन्दमणिकारस्येव ५६। असमाधिना एष म्रियतामिति चिन्तनमसमाधिमरणध्यानं स्कन्दकाचार्यं प्रति क्षुल्लकं प्रथमं यन्त्रे पीलयतोऽभव्यपालकस्येव ५७। कर्मोदयप्रत्ययेन कर्मोदयहेतुना ध्यानं कर्मोदयप्रत्ययध्यानं प्रथमं शुभपरिणामवतोऽपि पश्चात् कुतश्चित्कर्मोदयतोऽशुभपरिणामत्वं पर्यन्तकाले विष्णोरिव ५८। राज्यैश्वर्यादिरूपा ऋद्धिस्तया गौरवमात्मोत्कर्षरूपं तस्य ध्यानमृद्धिगौरवध्यानं दशार्णभद्रस्येव ५९। रसगौरवध्यानं रसनेन्द्रियग्राह्यरसस्तेन गौरवं यथा मम रसवतीरसास्तथा किमन्यस्यापि सन्ति? इत्यभिमानरूपं तस्य ध्यानमुदकज्ञातोक्तजितशत्रुराजस्येव सुबुद्धिमन्त्रिणोऽग्रे रसवतीरसान् प्रशंसतः ६०। सायागारवझाणे सातं सुखं तेन गौरवं गर्वो यथाऽहमेव सुखीत्यभिमानस्य ध्यानम् ६१। अवेरमणझाणे न विरमणमविरणं[1] तस्य ध्यानं मा भूत् पुत्रयोर्विरमण इति बुद्धिमङ्गीकृत्य पितरौ सुतौ आहतुः—एते साधवो मांसाशिनो राक्षसा इत्यतस्तत्पार्श्वे न गन्तव्यमिति

१ विरहः.

तनयविहितविप्रतारणयोर्भृगुपुरोहितयशयोरिव यत्रा देवेन प्रतिबोध्यमानस्यापि मुहुर्मुहुर्विरतिं त्यजतो मेतार्यस्येव ६२ । अमुक्तिमरणकाणं मुक्तिर्मोक्षगतिः न मुक्तिरमुक्तिः संसारसुखाभिलाष इत्यर्थः तेन मरणं तस्य ध्यानं मुक्तिविघ्नकरमेतन्निदानं मा कुरु इति पुनः पुनश्चित्रेण भ्रातृसाधुना निवार्यमाणस्यापि एतां चक्रिविभूतिमनुभूय मुक्तिमपि न स्पृहयेऽहमित्याद्यशुभभावने निदानं कुर्वतः संभूतमुनेरिव ६३ ।

ध्यानस्वरूपाणि निशम्य मिथ्या—दुष्कृतयोग्यानि विवेकवद्भिः ।
अनेककर्मप्रचयात्मकानि, हेयानि सर्वाणि विचारमार्गे ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोविंशे स्तम्भे पञ्चत्रिंशदधिकत्रिशततमं व्याख्यानम् ३३५ ॥

## षट्त्रिंशदधिकत्रिशततमं व्याख्यानम् ३३६ ॥

अथ तपःस्वरूपमाह—

मूलोत्तरगुणश्रेणि—प्राज्यसाम्राज्यसिद्धये । बाह्यमाभ्यन्तरं चेद्धं, तपः कुर्यान्महामुनिः ॥ १ ॥

महामुनिः परमनिर्ग्रन्थः इद्धं तपः कुर्यात् । किमर्थं ? मूलोत्तरा मूलभूता ज्ञानचारित्रादयो गुणा उत्तराः समितिगुप्त्यादयो गुणास्तेषां श्रेणिर्विशेषतो गुणप्राग्भाररूपा तया प्राज्यं प्रचुरं यत्साम्राज्यं

प्रभुत्वं तस्य सिद्धिर्निष्पत्तिस्तस्यै, अनेन स्वकार्यगुणप्रभुत्वनिष्पत्त्यर्थं बाह्यं लोकोल्लासकारणत्वात् प्रभावकतामूलं तथाऽऽभ्यन्तरमन्यलोकैर्ज्ञातुमशक्यं स्वगुणैकतारूपं तपः कार्यम् । अत्रार्थे नन्दनर्षिसंबन्धश्चायम्—

इह भरते छत्रिकापुर्यां जितशत्रुतो भद्रादेव्या नन्दनो नाम नन्दनोऽजनिष्ट । यौवने क्रमेण पितुः साम्राज्यं लब्ध्वा जन्मतश्चतुर्विंशतिमब्दलक्षीं व्यतीत्य नन्दनः पोट्टिलाचार्यसमीपे धर्ममित्यश्रृणोत्—

ज्ञानमेव बुधाः प्राहुः, कर्मणां तापनात्तपः । तदाभ्यन्तरमेवेष्टं, बाह्यं तदुपबृंहकम् ॥ १ ॥

बुधाः कर्मणामात्मप्रदेशसंश्लिष्टानां तापनात्तीक्ष्णं ज्ञानमेव तपः प्राहुः, तत्तपोऽन्तरङ्गं प्रायश्चित्तादिकमिष्टं, बाह्यमनशनादिकं तदुपबृंहकं तत्प्रशंसकमाभ्यन्तरतपोवृद्धिहेतुः द्रव्यतपो भावतपसः कारणमेव, तेन तदिष्टम् ।

तदेव हि तपः कार्यं, दुर्ध्यानं यत्र नो भवेत् । येन योगा न हीयन्ते, क्षीयन्ते नेन्द्रियाणि च ॥ २ ॥

इत्यादिधर्मदेशनया प्रबुद्धो विरक्तः सूरिसमीपे व्रतमाददे । मासोपवासैः सततैः स श्रामण्यं प्रकर्षयन् गुरुणा सार्धं ग्रामादिषु व्यहार्षीत् । उभाभ्यामपध्यानाभ्यां वर्जितः, त्रिभिर्दण्डैर्गौरवैः शल्यैश्च रहितः सदा, क्षीणचतुष्कषायः, चतुःसंज्ञात्यक्तः, चतुर्विकथामुक्तः, चतुर्धर्मासक्तः, चतुर्विधोपसर्गैरस्खलितोद्यमः, पञ्चमहाव्रतधाम, पञ्चप्रकारस्वाध्यायग्रामः, प्रतिवासरं समितिपञ्चकं बिभ्राणः, दुःसहा-

मपि परीषहपरंपरां सहमानो निरीहो नन्दनमुनिर्वर्षलक्षं तपोऽकरोत्, एकादश लक्षाणि अशीतिसहस्राणि मासक्षपणानि चकार, तत्रैव भवे जिननामकर्म च, यतः—

अर्हद्भक्त्यादिभिः स्थानै—र्विंशत्या हि महातपाः । दुरर्जमर्जयामास, तीर्थकृन्नामकर्म सः ॥ १ ॥

मूलतोऽपि हि निष्कलङ्कं श्रामण्यं चरित्वाऽऽयुःपर्यन्तसमये आराधनामिति व्यधात्, यतः—

राशावव्यवहाराख्ये–ऽनन्तजन्तुप्रघट्टनात् । यया मे कर्म कृत्तं तां, पीडामप्यनुमोदये ॥ १ ॥
जिनानां प्रतिमाचैत्य—भृङ्गारमुकुटादिषु । यो मे पृथ्वीमयः कायो, जज्ञे तमनुमोदये ॥ २ ॥
जिनस्नात्रेषु पात्रेषु, दैवादुपकृतो भवेत् । यो मे जलमयः कायः, प्रायस्तमनुमोदये ॥ ३ ॥
धूपाङ्गारे च दीपे च, जिनानां पुर एव हि । मम तेजोमयः कायो, जातस्तमनुमोदये ॥ ४ ॥
धूपोत्क्षेपेऽर्हतां सद्मे, श्रान्ते वातार्थवर्त्मसु । यो मे वायुमयः कायो, बभौ तमनुमोदये ॥ ५ ॥
मुनीनां पात्रदण्डेषु, जिनार्चाकुसुमेषु च । यो मे द्रुममयः कायो—ऽभवत्तमनुमोदये ॥ ६ ॥
क्वापि सत्कर्मयोगेन, जिनधर्मोपकारकः । आसीत्त्रसमयः कायो, यो मे तमनुमोदये ॥ ७ ॥

( तथा ) श्रीवीरचरित्रे—( प्रथमसर्गे श्लोक २३१. )

ज्ञानाचारोऽष्टधा प्रोक्तो, यः कालविनयादिकः । तत्र मे कोऽप्यतिचारो, योऽभून्निन्दामि तं त्रिधा ॥ १ ॥
यः प्रोक्तो दर्शनाचारो, ऽष्टधा निःशङ्कितादिकः । तत्र मे योऽतिचारोऽभूत्, त्रिधाऽपि व्युत्सृजामि तम् २
या कृता प्राणिनां हिंसा, सूक्ष्मा वा बादराऽपि वा । मोहाद्वा लोभतो वाऽपि, व्युत्सृजामि त्रिधापि ताम् ॥३॥

हास्यलोभभयक्रोधलोभाद्यै—र्यन्मया भाषितं मृषा । तत्सर्वमपि निन्दामि, प्रायश्चित्तं चरामि च ॥ ४ ॥
अल्पं भूरि च यत्क्वापि, परद्रव्यमदत्तकम् । आत्तं रागादथ द्वेषात्, तत्सर्वं व्युत्सृजाम्यहम् ॥ ५ ॥
तैरश्चं मानुषं दिव्यं, मैथुनं मयका पुरा । यत्कृतं त्रिविधेनापि, त्रिविधं व्युत्सृजामि तत् ॥ ६ ॥
बहुधा यो धनधान्य—पश्वादीनां परिग्रहः । लोभदोषान्मयाऽकारि, व्युत्सृजामि त्रिधाऽपि तम् ॥ ७ ॥
पुत्रे कलत्रे मित्रे च, बन्धौ धान्ये धने गृहे । अन्येष्वपि ममत्वं यत्, तत्सर्वं व्युत्सृजाम्यहम् ॥ ८ ॥
इन्द्रियैरभिभूतेन, यदाहारश्चतुर्विधः । मया रात्रावुपाभोजि, निन्दामि तमपि त्रिधा ॥ ९ ॥
क्रोधो मानो माया लोभो, रागो द्वेषः कलिस्तथा । पैशून्यं परनिर्वादोऽ—भ्याख्यानमपरं च यत् ॥ १० ॥
चारित्राचारविषयं, दुष्टमाचरितं मया । तदहं त्रिविधेनापि, व्युत्सृजामि समन्ततः ॥ ११ ॥
यस्तपःस्वतिचारोऽभूत्, बाह्येष्वभ्यन्तरेषु च । त्रिविधं त्रिविधेनापि, निन्दामि तमहं खलु ॥ १२ ॥
धर्मानुष्ठानविषये, यद्वीर्यं गोपितं मया । वीर्याचारातिचारं च, निन्दामि तमपि त्रिधा ॥ १३ ॥
हतो दुरुक्तश्च मया, यो यस्याहारि किञ्चन । यस्यापाकारि किञ्चिद्वा, मम क्षाम्यतु सोऽखिलः ॥ १४ ॥
यश्च मित्रममित्रो वा, स्वजनोऽरिजनोऽपि वा । सर्वः क्षाम्यतु मे सर्वं, सर्वेष्वपि समोऽस्म्यहम् ॥ १५ ॥
तिर्यक्त्वे सति तिर्यञ्चो, नारकत्वे च नारकाः । अमरा अमरत्वे च, मानुषत्वे च मानुषाः ॥ १६ ॥
ये मया स्थापिता दुःखे, सर्वे क्षाम्यन्तु ते मम । क्षाम्याम्यहमपि तेषां, मैत्री सर्वेषु मे खलु ॥ १७ ॥
जीवितं यौवनं लक्ष्मी, रूपं प्रियसमागमः । चलं सर्वमिदं वात्या—नर्तिताब्धितरङ्गवत् ॥ १८ ॥

व्याधिजन्मजरामृत्यु–ग्रस्तानां प्राणिनामिह । विना जिनोदितं धर्मं, शरणं कोऽपि नापरः ॥ १९ ॥
सर्वेऽपि जीवाः स्वजना, जाताः परजनाश्च ते । विदधीत प्रतिबन्धं, तेषु को हि मनागपि ॥ २० ॥
अर्हन्तो मम शरणं, शरणं सिद्धसाधवः । उदीरितः केवलिभि–र्धर्मः शरणमुच्चकैः ॥ २१ ॥
चतुर्विधाहारमपि, यावज्जीवं त्यजाम्यहम् । उच्छ्वासे चरमे देह–मपि हि व्युत्सृजाम्यहम् ॥ २२ ॥
दुष्कर्मगर्हणां जन्तु–क्षामणां भावनामपि । चतुःशरणं च नम–स्कारं चानशनं तथा ॥ २३ ॥
एवमाराधनां षोढा, स कृत्वा नन्दनो मुनिः । धर्माचार्यानक्षमयत्, साधून् साध्वीश्च सर्वतः ॥ २४ ॥
षष्टिं दिनान्यनशनं, पालयित्वा समाहितः । पञ्चविंशत्यब्दलक्ष—पूर्णायुः सोऽममो मृतः ॥ ' ।

प्राणतस्वर्गे समुत्पन्नः ।

आयुर्विंशतिसागरोपममितं सोऽपूरि देवाग्रणीः, पर्यन्तेऽपि विशेषतः प्रतिकलं देदीप्यमानः श्रिया ।
मुह्यन्ति ह्यपरे त्रिविष्टपसदः षण्मासशेषायुषः, क्वाप्युच्चैर्ननु तीर्थकृद्दिविषदोऽत्यासन्नपुण्योदयाः ॥ २६ ॥

ततश्च्युत्वा श्रीवीरजिनेश्वरश्चरमतीर्थकृद्बभूवेति ।

पञ्चविंशतितमे भवेऽर्हता, वर्धमानजिनस्वामिना कृतम् ।
यत्तपो ददतु मादृशां च तत्, भावमङ्गलमिदं महोत्तमम् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोविंशे स्तम्भे षट्त्रिंशदधिकत्रिशततमं व्याख्यानम् ३३६ ॥

## सप्तत्रिंशदधिकत्रिशततमं व्याख्यानम् ३३७ ॥

अथ रोहिणीचरितमाह—

श्रीवासुपूज्यमानम्य, तपोऽतिशयप्रकाशकम् । रोहिण्याः सुकथायुक्तं, रोहिणीव्रतमुच्यते ॥ १ ॥

चम्पापुर्यां श्रीवासुपूज्यात्मजो मघवा राजा । तस्य लक्ष्मी राज्ञी सदाचारा । तस्या अष्टौ तनयाः, तेषामुपरि रोहिणी पुत्री जाता । राज्ञा वर्धापनं कृतं । रूपसौभाग्यादियुक्ता यौवनं प्राप्ता । राज्ञा ध्यातं—"यद्यस्या वरोऽनुरूपो मिलति तदा श्रेष्ठम्" । एवं विचिन्त्य राज्ञा बहवो राजकुमारा आहूताः । तेऽपि सविभवाः स्वयंवरमण्डप एत्य स्थिताः । तत्र रोहिणी मज्जनाङ्गक्षेपं विधाय सांशुका उष्णीपतिलकताटङ्कग्रैवेयकप्रालम्बकहारार्धहारकेयूरकटकोर्मिकामेखलानूपुरकिङ्किण्याद्यलङ्कारपूर्णा सुखासनासीना मण्डपे समागता । प्रातिहार्या वर्ण्यमानपृथक्पृथङ्नृपनामगोत्राणि श्रुत्वा तया नागपुरेशात्मजश्रीअशोककण्ठे वरमाला निहिता । अन्यकुमाराणां राज्ञा वस्त्रादिभिः सन्मानं दत्त्वा सर्वे विसृष्टाः । ततः श्रीअशोकः पत्न्या सह नागपुरं प्राप्तः । क्रमेण राज्ञाऽशोके राज्यं न्यस्य दीक्षा गृहीता । अथाशोकभूपो रोहिण्या सह भोगान् भुनक्ति स्म । तस्याष्टौ पुत्राः चतस्रः पुत्र्यश्च जाताः । अन्यदा पत्न्या सह क्ष्मापो गवाक्ष उपविष्टः, तदा पुरे काञ्चित्स्त्रियं पुत्रे मृते रुदन्तीं शिरस्ताडयन्तीं दृष्ट्वा रोहिणी हृष्टा । तया पृष्टम्—"स्वामिन् ! किमेतत् नाटकं ?" । राजा कथयति—"गर्वं मा कुरु" । राज्ञी वक्ति—"धनयौव-

नृपतिपुत्रपितामहप्रसादपूर्णाऽपि गर्वमहं न कुर्वे, एतन्नाटकं मया कदापि न दृष्टम्" । राजावक्—
"अस्याः सुतो मृतस्तेनैषा रुदति" । राज्ञी स्माह—"क शिक्षिता ?" राज्ञा प्रोक्तं—"शिक्षयामि"
इत्युक्त्वा लोकपालोऽङ्गज उत्सङ्गादुज्झितः, स पतन् पुरदेव्या धृतः सिंहासने स्थापितः, रोहिण्या
रोदनं नोत्पन्नं । तस्मिन् काले श्रीप्रभोः शिष्यौ रूप्यकुम्भस्वर्णकुम्भौ समागतौ सपरिकरौ । नृपस्तत्र गत्वा
प्रणम्य पप्रच्छ—"भगवन्! केन कर्मणा राज्ञी दुःखं न वेत्ति ?" गुरवः स्माहुः—

राजन्! अत्रैव पुरे धनमित्रेभ्यस्य सुता दुर्गन्धा । तां दुर्भगां यौवनं प्राप्तामपि कोऽपि पुमान्न काम-
यति, कोऽपि कोटिद्रव्यलाभेऽपि न वृणीते । एकदा कोऽपि चौरो मार्यमाणः श्रेष्ठिना मोचितः, गृह-
मानीतः, तस्मै श्रेष्ठिना पुत्री दत्ता, रात्रौ तस्यास्तनुतापेन स नष्टः । एकदा धनमित्रेण पुत्र्याः कर्म-
स्वरूपं पृष्टाः श्रीगुरवः प्राहुः—"उज्जयन्तगिरौ गिरिपुरे पृथ्वीपालनृपः, तस्य सिद्धिमती राज्ञी, ताभ्या-
मेकदोपवने मासोपवासी भिक्षार्थं गच्छन् श्रीगुणसागरसाधुर्दृष्टः, राज्ञा वन्दितः, ततः पत्नीं प्राह—'एष
मुनिर्जङ्गमतीर्थं, त्वं गृहे गत्वा प्रासुकाहारैरेनं प्रतिलाभय' । राज्ञी चचले क्रुद्धा । तया कटुतुम्बं दत्तं ।
मुनिः कटुकं ज्ञात्वा परिष्ठापनायां बहुजीवघातं निश्चित्याहार्य च केवलं प्राप्य सिद्धिं गतः । राज्ञा तद्वृत्तं
श्रुत्वा सा निष्कासिता । सप्तमे दिने कुष्टिनी जाता, मृत्वा षष्ठं नरकं गता । ततस्तिर्यक्त्वं प्राप्य सर्वान्
नरकान् गता । ततः करभी कुर्करी शिवा सूकरी गोधा मूषिका यूका काकी चाण्डाली रासभी च
जाता । तद्भवेऽवसाने नमस्कारं श्रुत्वा तेन पुण्येन तव पुत्री जाता । स्वल्पे सावशेषे कर्मणि दुर्गन्धा

दुर्भगा च जाता" । तच्छ्रुत्वा साऽपि जातिं स्मृत्वा पूर्वभवं दृष्ट्वा गुरुं प्राह—"भगवन्! मां दुःखेभ्यो निस्तारय" । गुरुः स्माह—"त्वं रोहिणीव्रतं कुरु सप्त वर्षाणि सप्त मासान् यावत् रोहिणीनक्षत्रे उपवासः वासुपूज्यध्यानं, चैत्यकारापणं, पूर्णे तपसि उद्यापनम्, अशोकवृक्षतले श्रीवासुपूज्यबिम्बं रत्नमयमशोकरोहिणीयुतं कार्यम्, एतत्तपोमहिम्ना त्वमनन्तरभवे श्रीअशोकराजस्य पत्नी भूत्वा सेत्स्यसि, एतत्तपःकरणे महत्सौख्यं स्यात् । अत्रार्थे शृणु ज्ञातम्—सिंहपुरे सिंहसेनभूपभूः दुर्गन्धनामा सर्वेषामनिष्टोऽभूत् । राज्ञा श्रीपद्मप्रभजिनपार्श्वे पृष्टं—'भगवन्! केन कर्मणा कुमारस्य दुर्गन्धत्वं ?' । प्रभुणोक्तं—'राजन्! नागपुरात् द्वादशयोजनैर्नीलपर्वतः, तत्रैका शिला, तस्या उपरि तपस्वी साधुरेको ध्यानं करोति स्म, तन्महिम्ना व्याधास्त्राणि जीवहिंसायां न प्रभवन्ति, तत्रैको व्याधः सकोपोऽभूत्, यावन्मुनिर्भिक्षार्थं ग्रामे गतस्तावच्छिलातले तृणेन्धनादिकं न्यस्य व्याधश्छन्नः स्थितः, मुनिस्तु एषणां कृत्वा तत्रोपविष्टः, तेन वह्निर्मुक्तः, तत्र मुनिस्तापं सहमानः केवलं प्राप्य सिद्धः, स व्याधस्तेन कर्मणा कुष्ठी जातः, ततो बहुभवान् भ्रान्त्वा श्रावकगृहे पशुपालको जातः, तत्र नमस्कारं शिक्षितवान्, एकदाऽरण्ये दवो लग्नः, स निद्रावशेन प्रज्वलितः, तत्र नमस्कारध्यानात्तवात्मजो जातः, शेषकर्मदोषेण दुर्गन्धश्च' इत्याकर्ण्य कुमारो जातिस्मृतिं लेभे । श्रीजिनेन रोहिणीतप उपदिष्टम् । तेन तपः कृतम् । ततः सुगन्धत्वं जातम् । "इति श्रीवासुपूज्यशिष्येणोपदिष्टं सुगन्धकुमारवत्त्वमपि तत्तपोऽङ्गीकुरु" । इत्थं श्रुत्वा

दुर्गन्धया विधिपूर्वं सोद्यापं, तपः कृतम्। तेन तस्मिन्नेव भवे सुगन्धत्वं प्राप्य स्वर्गं गता। ततश्च्युत्वा मघवराजपुत्री तव राज्ञी बभूव, तत्पुण्यत आजन्म दुःखं रोदनं च न वेत्तीति।

पुनरशोकः पृच्छति—"भगवन्! अतिस्नेहलत्वं कुतः?"। गुरुर्वक्ति—"सिंहसेनराजेन सुगन्धाय राज्यं दत्त्वा दीक्षा गृहीता। सुगन्धभूपो जैनधर्ममाराध्य पुष्कलावतीविजये पुण्डरीकिण्यां पुर्यामर्ककीर्तिनामा चक्री बभूव। तत्र साधुसंयोगेन दीक्षां गृहीत्वा विपद्य द्वादशकल्पे देवोऽभूत्, ततश्च्युत्वाऽशोकनृपस्त्वं जातः रोहिणीमनआह्लादकरः। युवाभ्यां पुरा समानं तप आराधितं तेनान्योऽन्यं भूरिस्नेहः। पुत्राः सप्त (अष्ट) गुणाढ्या अभवन् तस्यायं हेतुः—मथुरायामग्निशर्मविप्रस्य सप्त पुत्राः, ते सर्वे दरिद्रिणः। एकदा सालङ्काराः सुभगा राजपुत्राः क्रीडन्तस्तैर्विप्रपुत्रैर्दृष्टाः। दृष्ट्वा च ते दध्युः—'अकृतपुण्या वयं किञ्चिदपि सुखं स्वप्नेऽपि नाप्नुमः, अतो दीक्षां गृह्णीमः'। ततस्ते चारित्रं गृहीत्वा विपद्य देवत्वमनुभूय तव पुत्रा जाताः। अष्टमस्तु वैताढ्यवासी क्षुल्लकविद्याधरस्तत्र शाश्वतजिनबिम्बपूजां विधाय सौधर्मे देवत्वं प्राप्य ततश्च्युत्वा तवाष्टमः पुत्रोऽभूत् यस्त्वया गवाक्षतः परिष्ठापितो देवतया पतन्नेव वेगेन गृहीतः। अथ पुत्रीणां संबन्धं शृणु—वैताढ्ये विद्याभृत्पुत्र्यश्चतस्रोऽभवन्। एकदा ताभिरिति ज्ञानिगुरवः पृष्टाः—'भगवन्! अस्मदायुरिदानीं कियद्भविष्यति?'। ज्ञानी प्राह—'अल्पतरमस्ति, परं सर्वासां समकालं पञ्चत्वं भावि'। इति श्रुत्वा ताः प्राहुः—'अल्पायुषि सति किं पुण्यं कुर्मः?'। गुरुराह—'अन्तर्मुहूर्त्तमपि कृतं पुण्यं निष्फलं न याति, तर्हि युष्माकमपि महत्फलं भावि, अतः पञ्च-

मीतपआराधनं कुरुत' ततस्ताभिर्यावज्जीवं पञ्चमीतपः स्वीकृतम् । गुरुराह—'अद्यैव शुक्लपञ्चमी वर्तते' । ततस्ता उपवासं प्रत्याख्याय स्वगृहे देवपूजादिधर्मकृत्यं विधायैकत्र धर्मजागरिकां चक्रुः । पूर्णे पञ्चमीतपसि महोद्यापनं करिष्याम इति दध्युः । इतश्चाकस्मात्तासां मस्तकेषु विद्युत्पतिता । तपोध्यानाद्देवत्वमनुभूय त्वत्पुत्र्यो जाताः" ।

इति श्रुत्वा छिन्नसन्देहा अशोकनृपादयः श्राद्धधर्मं प्रपद्य गृहमाजग्मुः । क्रमाद्वासुपूज्यान्तिके नृपरोहिण्यादयो दीक्षां गृहीत्वा दुस्तपतपोभिः कर्मक्षयेण केवलज्ञानरूपमक्षयं कोशं प्राप्य निर्वाणं प्रापुः इति ।

> वासुपूज्यजिननाथसंस्तवैः, पूजनैस्त्रिविधदेववन्दनैः ।
> रोहिणीतपसि यत्नतां जनाः, कुर्वतां सुकृतपावनोद्यताः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोविंशे स्तम्भे सप्तत्रिंशदधिकत्रिशततमं व्याख्यानम् ३३७ ॥

## अष्टात्रिंशदधिकत्रिशततमं व्याख्यानम् ३३८ ॥

अथ नयस्वरूपमाह—

> धावन्तोऽपि नयाः सर्वे, स्युर्भावे कृतविश्रमाः । चारित्रगुणलीनः स्या—दिति सर्वनयाश्रितः ॥ १ ॥

१ त्रिविधं त्रिकालमित्यर्थः.

सर्वे नया यावन्तः स्वस्वपक्षस्थापनपुरस्सरा अपि भावे शुद्धात्मधर्मे कृतविश्रमाः स्युः स्थिरा भवन्ति, अतो मुनिश्चारित्रगुणलीनः चयोऽष्टप्रकारकर्मसंचयस्तस्य रिक्तीकरणात् निरुक्त्या चारित्रं तदेव गुणस्तत्र लीनः वर्धमानपर्यायः ( तथा ) सर्वनयाश्रितः स्यात् द्रव्यनये कारणत्वग्राहके भावनये तत्कार्यत्वग्राहके क्रियानये साधनोद्यमरूपे ज्ञाननये तद्विश्रामरूपे आसक्तः स्यात् । यतोऽनुयोगद्वारे—

सव्वेसिं पि नयाणं, बहुविहवत्तव्वयं निसामित्ता । तं सव्वनयविसुद्धं, जं चरणगुणट्ठिओ साहू ॥ ’ ॥

अत्रार्थे संबन्धश्चायम्—एकस्मिन् गच्छे एकः सूरिः क्षपकः वृद्धत्वादेकत्र ग्रामे तिष्ठति । तस्यैकः शिष्यश्चपलः क्रियाशिथिलो गुरुं प्राह—“तरुणोऽहं मैथुनं विना न स्थातुं शक्नोमि” । इति श्रुत्वा गुरुणा स गच्छतो दूरीकृतः, परं बाल्याभ्यासात् पठितसकलशास्त्रो लोकानावर्ज्य प्राणवृत्तिं विदधाति । प्रान्ते आर्तध्यानेन मृत्वा वृक्षकोटरे शुको जातः । एकदा साधुदर्शनात् प्राप्तजातिस्मरणेनावगतः सर्वधर्मप्रबन्धः । अथैकदा स वनचरेण गृहीतः, पादस्तस्याकुञ्चितः अक्षि च काणं कृतं, भिल्लेन विक्रयार्थं नगरचतुष्पथे स्थापितः, ह्यन्यपक्षिविक्रयार्थमन्यत्र गच्छन् पुलिन्दस्तं शुकं जिनदत्तश्राद्धापणे मुक्त्वा गतः, शुकेन मनुष्यभाषया स्वस्वरूपं निरूपितम् । श्राद्धेन स साधर्मिक इति मूल्येन गृहीतः काष्ठपञ्जरे क्षिप्तश्च । शुकेन तदुपासकस्वजनवर्गः श्रावकीकृतः । अन्यदा जिनदत्ततनुजो जिनदासः कस्यचिन्माहेश्वरिणः सुरूपां तनयां वीक्ष्योन्मत्तो धर्मं न शृणोति, तदा शुकेनोक्तं—“कुतस्तव चित्ते श्रद्धा नास्ति ?” । तेनोक्तः स्वव्यतिकरः । शुकः प्राह—“स्वस्थो भव, माहेश्वरिपुत्रीं परिणाययिष्यामि” । ततः शुक उड्डीय माहेश्वरिगृहे

गतः। यदा तस्य तनया विवाहवाञ्छया दुर्गामभ्यर्च्य विज्ञप्तिं कृतवती तदा प्रच्छन्नः शुक उवाच—"यदि सुवरो विलोक्यते तर्हि जिनदत्तपुत्रं वृणु"। ततस्तया पित्रे विज्ञप्तं—"मां जिनदत्तपुत्राय देहि"। एवमस्त्विति पित्रा विवाहः कृतः। अथ सा स्नुषाऽन्यासु वधूषु देवदत्ताऽहमिति गर्वं करोति, विरुद्धधर्मत्वाच्च शुकोक्तमुपदेशं न मन्यते। ततः शुकेन स्वजनसमक्षं विहस्य दुर्गावृत्तान्त उक्तः। ततः स्वजनेनोक्ता सा—"हे स्नुषे! त्वं देवदत्ता वा पक्षिदत्ता वा?"। ततः सा शुकस्योपरि द्वेषं वहति स्म। एकदा स्वजनेष्वितस्ततः कार्यव्यग्रेषु शुकस्यैकपिच्छमुत्पाट्य सोवाच—"शुक! त्वं पण्डितोऽसि"। शुकेन ध्यातम्—"अरे मम वाग्दोषफलमेतत्। यतः—

आत्मनो मुखदोषेण, बध्यन्ते शुकसारिकाः। बकास्तत्र न बध्यन्ते, मौनं सर्वार्थसाधनम्॥ १ ॥"

ततः शुकेनोक्तं—"नाहं विज्ञः, किं तु स धनश्रेष्ठी विज्ञः। कथमिति चेदुच्यते—एकस्मिन् ग्रामे बहवो निर्नेत्राः स्वस्वचतुष्पथे स्थिताः हास्यगीतदम्भादिभिर्दिनानतिक्रामन्ति। एकदैक इभ्यः सौवर्णिकान् नित्यं परीक्षते, तत्पार्श्वे स्थित एकोऽन्धो विनयेनेभ्यं स्तुत्वा नुत्वा च "हे श्रेष्ठिन्! एकां माषां स्पर्शनार्थं मम करे प्रयच्छ" इति ययाचे। ऋजुत्वेन श्रेष्ठिना हस्ते स्पर्शनार्थं दत्ता। अन्धेन गृहीत्वा स्ववस्त्रग्रन्थौ गाढं गुप्तीकृत्य सा माषा रक्षिता। श्रेष्ठिना पश्चान्मार्गिता। अन्धः स्माह—"हे पुण्यपात्र! मदीया माषा तव विलोकनार्थं दत्ता, पुनर्गृहीत्वाऽत्र मया बद्धा, नाहं ददामि, एतावन्मात्रं

१ सुवर्णनिष्कम्.

मम द्रव्यमाजीवाकारणं त्वं कथं वाञ्छसि ?" । इत्युक्त्वा तेन पूत्कारः कृतः । जनाः श्रेष्ठिनं निनिन्दुः । लज्जितः श्रेष्ठी एकं दक्षं नरं पप्रच्छ । स दक्षः शिक्षां ददौ—"रात्रौ ग्रामवासिनः सर्वेऽन्धा एकत्र तिष्ठन्ति, परस्परं प्राप्तद्रव्यादिकं दर्शयन्ति, तत्र त्वं गत्वा प्रच्छन्नस्तिष्ठ" । श्रेष्ठी तत्र गतः । तेनान्धेन हृष्टेन स्वपाणिफलं प्रकाश्य अग्रिमुन्मुद्यान्येषामन्धनराणां स्पर्शनार्थं स्वकमायासहितं वस्त्रं प्रसारितं तावत् शीघ्रं तेन माया गृहीता । अन्योऽन्धस्त्वाह—"कथं न दत्से?" । स स्माह—"दत्ता मया" । तत्र तयोर्महायुद्धं प्रवृत्तं । श्रेष्ठी तु स्वस्थोऽभूत् । ततः 'अन्धोऽन्धपीलाय' इति प्रसिद्धिर्जाता ॥

अत्रोपनयोऽपि विधेयः, यथा एकान्तवादिनः सर्वे नया अन्धसदृशाः सनेत्रसदृशोऽनेकान्तपक्षजः इन्यतुद्ग्यः तत्त्वं प्राप्नोति, नान्य इति । परस्मिन्येन मानवलेन कार्यं साधितमतः स विज्ञः ।

पुनरपीतस्ततो गच्छन्त्या स्नुषया लोमोत्पाट्य भणितं—"शुक ! त्वं विद्वानसि" । शुकेन नागितस्त्री-कथोक्ता । इत्येवमाख्यानकं रात्रिर्गमिता । शुको लूनपक्षः प्रभाते काष्ठपञ्जराद्बहिर्निष्कासितः । ततः श्येनेन गृहीतः । तदुपरि द्वितीयः श्येनः समेतः । जातं तयोर्युद्धम् । शुको मुखादशोकवाटिकायां पतितः । तत्र पतन् दासपुत्रेण गृहीत्वा एकान्ते स्थापितः सज्जो जातः । अथ दासेनोक्तम्—"हे शुक ! एतस्य ग्रामस्य राज्यं मम दापय, यतोऽस्य राजा निष्पुत्रो वृद्धोऽन्येषां राज्यं दातुं समीहते" । अथ राजा कुलदेव्याह्वानं विधाय सुप्तः । तदा शुको नृपगृहोपरि क्रीडामयूरदेहं प्रविश्य निशीथे नृपमब्रवीत्—"हे नृप ! दासपुत्राय राज्यं देहि, अन्यस्य प्रदत्तं सप्तदिनमध्ये यास्यति" । राजा तथैव

विहितं। दासपुत्रेण स शुको राजा कृतः। तस्यैवाज्ञा प्रसृता। तेन धर्मोपदेशेन श्रावककुलं माहेश्वरिकुलं च प्रबोधितं। स्वयं संवेगापन्नोऽनशनं कृतवान्। शुभध्यानेन मृत्वा सहस्रारदेवत्वेनोत्पन्नः परमश्रावकः। तत्रापि धर्मकथादिकं प्ररूपयति स्म। ततो देवेष्वपि विख्यातो जातः। ततश्च्युतो महाविदेहे मोक्षं यास्यतीति। ज्ञानवान् सर्वदा संवेगवान् भवति। ततः श्रीपञ्चमाङ्गे प्रोक्तं—"ज्ञानमैहिकपारभविकपारतरभविकम्" इत्येवं ज्ञानक्रियाभ्यां मोक्षः स्यात्॥

सर्वेषां नयपक्षाणां, रहस्यं संयमं मतम्।
चित्क्रियाभ्यां तदासेव्यं, श्रीमदाप्तैः सुनिश्चितम्॥ १॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोविंशे स्तम्भेऽष्टात्रिंशदधिकत्रिशततमं व्याख्यानम् ३३८॥

## एकोनचत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३३९॥

अथ स्त्रीभिः सह संवासेऽपि उत्तमाः स्वदार्ढ्यं न जहतीत्याह—

दिनमेकमपि स्थातुं, कोऽलं स्त्रीसन्निधौ तथा। चतुर्मासीं यथाऽतिष्ठत्, स्थूलभद्रोऽक्षतव्रतः॥ १॥

स्पष्टः। ज्ञातं चेदम्—

अन्यदा वर्षाकाले समायाते संभूतविजयाचार्यान् प्रणम्य त्रयो मुनय एवमभिग्रहान् चक्रुः, आद्यः प्राह—"अहं सिंहगुहाद्वारे उपोषितः कृतकायोत्सर्गश्चतुर्मासीमवस्थास्ये" इति प्रतिश्रवं चक्रे। द्वितीयोऽवक्—"अहं दृग्विषाहिबिलद्वारे कायोत्सर्गेण चतुर्मासीमुपोषितः स्थास्यामि" इत्यभ्यग्रहीत्। तृतीयः स्माह—"अहं कूपफलके कायोत्सर्गं कृत्वा चतुर्मासीमुपोषितः स्थास्ये" इति प्रतिपेदे। तान् संयतान् योग्यान् मत्वा गुरुर्यदाऽनुमेने तदा स्थूलभद्र उत्थाय गुरूनेवं व्यजिज्ञपत्—"षड्रसमाहारं कुर्वन् प्रबलं तपोऽकुर्वन् चतुर्मासीं कोशावेश्यानिकेतने स्थास्याम्यहम्"। सूरिरुपयोगेन तं योग्यं ज्ञात्वाऽन्वमन्यत। ततः सर्वेऽपि मुनयोऽङ्गीकृतस्थानेष्वगच्छन्। तत्र शान्तान् तीव्रतपोनिष्ठान्मुनिसत्तमान् वीक्ष्य त्रयोऽप्येते सिंहसर्पारघट्टिकाः शान्तिं प्रापुः।

अथ स्थूलभद्रोऽपि कोशासदनमासदत्। मुनिं वीक्ष्य कोशा दध्यौ—"अयं परीषहोद्विग्नो व्रतभग्न आगान्नूनं, तदद्यापि मामकं दैवं जागर्ति" इति सहसोत्थाय तं मुक्तादिभिर्वर्धाप्याहिताञ्जलिरग्रतः स्थित्वोवाच—"भगवन्! स्वामिन्! स्वागतम्, अद्यान्तरायापगमान्मम पुण्यं प्रादुरभूत्, अद्य चिन्तामणिकामगवीसुरद्रुमकन्दर्पदेवादयस्तुष्टाः हे नाथ! त्वयि समागते। अथ प्रसद्य सद्यः समादिश, सर्वमेतच्चित्तं वित्तं वपुर्गृहं च तवैवास्ति। मम यौवनं प्राक् त्वयैव सफलं नीतम्, अधुना हिमप्लुष्टां कमलिनीमिव मत्तनुं त्वद्विरहे दग्धामहर्निशं दर्शनस्पर्शनाभ्यां सुखमग्नां विधेहि"। ततः स मुनिः प्राह—

"इमां कामशास्त्रोक्तेन विधिना निर्मितां चित्रशालां मासचतुष्टयं स्थातुं मे देहि" । सापि सज्जयित्वा तां ददौ । तत्र समाहितः स तस्थौ । कोशादत्तं मदनोद्दीपकं षड्रसाढ्यमाहारमुपभुज्य प्रणिधानं दध्यौ । ततः शृङ्गारान् विधायानङ्गपहावभावादिकं वितन्वती मुनिसन्निधौ क्षोभाय समाययौ । मुनिः प्राह— "सार्धत्रिहस्तावग्रहाद्बहिः स्थित्वा नृत्यादिकं विधेयं" । ततः सा कटाक्षैस्तं लक्षयन्ती पूर्वकृतक्रीडां ह्रियं त्यक्त्वा स्मारयन्ती अङ्गमोटनपाटवात्त्रिवलीमञ्जुलं मध्यदेशं दर्शयन्ती नीवीबन्धनकैतवात् गम्भीरां नाभिकूपिकां प्रकाशयन्ती साधोः पुरतो विश्वैकमोहनं नाट्यं चक्रे । तथापि स मनाक् क्षोभं न गतः । ततः सखीवृता समेता । तासु मध्य एकाऽवक्—

जहिहि कठिनतां प्रयच्छ वाचं ननु करुणामृदु मानसं मुनीनाम् ।
उपगतमवगणयन्त्यनन्याः, सनिपुणमेत्य कयाचिदेवमूचे ॥ १ ॥
तदनघ तनुकृशा सकामा पुन-र्व्रजति पुरा हि परासुतां त्वदर्थे ।
पुनरपि सुलभं तपोऽनुरागी, युवतिजनः खलु नाप्यतेऽनुरूपः ॥ २ ॥

अनन्या निर्भाग्या उपगतं प्राप्तमवगणयन्ति, एवं कयाचिदागत्य सनिपुणं यथा तथा स मुनिरुक्तः । तस्मात् हे अनघ ! तनुकृशा त्वद्विरहेण, सा नायिका कोशा सकामा सफलमनोरथाऽस्तु । हि यस्मात्त्वदर्थे त्वामुद्दिश्य परासुतां निःप्राणत्वं पुरा व्रजति व्रजिष्यतीत्यर्थः, तथा च त्वन्निमित्ता हत्याऽनघत्वव्याघातश्च स्यादिति भावः ।

तदा मुनिः स्माह—"अनन्तशोऽनेकभवेषु मरणं (रमणं) कृतम्, अद्यापि न दिव्रमि, किं तृप्तिर्न जाता? इमं नृत्यादिप्रयत्नं मदग्रे तनोषि तमिमं प्रशस्तभावेन परमात्मस्तुतिमंदर्भ करोषि तदा सर्वं सफलं स्यात्।

दीनतां वदसि भोगलालसा, नृत्यगीतमसखीप्रयत्नकैः।
किं वृथा नयसि जन्मजीवने, स्वात्मनि प्रविदधातु मन्मते ॥ १ ॥"

इति श्रुत्वा सा तस्य जितेन्द्रियत्वं मादृशीभिः सञ्जाताभिश्चतुरनायिकाभिरप्यजेयं वीक्ष्यावक्—"यदज्ञानात्त्वया साकं प्राग्लोभितत्वाऽन्तुमना अहं क्षोभनोपायानकार्षं तदागस्त्वं मम महस्व"। ततस्तस्यै मुनिः श्राद्धधर्ममभाषत। साऽपि प्रबुद्धा श्राविका जाता, नन्दनृपप्रेषितं पुरुषं विनाऽन्यं मम बान्धवा इत्यभ्यग्रहीत्।

अथ वर्षासमये व्यतीते ते त्रयोऽपि साधवो निर्व्यूढाभिग्रहा गुरुपादान्तिकं क्रमादेयुः। तदाऽऽयान्तं सिंहगुहावासिनं मुनिं किञ्चिदुत्थाय सूरिर्जगौ—"हे वत्स! दुष्करकारक! तव स्वागतम्"। तद्वदायान्तौ इतरावपि सूरिणा भाषितौ। अथ स्थूलभद्रमायान्तं वीक्ष्याभ्युत्थाय गुरुः स्माह—"हे महात्मन्! दुष्करदुष्करकारिन्! तव स्वागतम्"। तन्निशम्य सामर्षास्ते त्रयो दध्युः—"गुरवो मन्त्रिपुत्रत्वादेवामुं मत्वगुणानमामन्त्रयन्ति, चित्रशालायां स्थितः यः षड्रसमाहारयन् कामिनीवृतः गुरुभिर्दुष्करदुष्करकारकः कथ्यते, वयमप्येष्यत्यब्देऽमुमभिग्रहं लास्यामः" इति ध्यायन्तः कष्टादष्टौ मासानत्यवाहयन्। अथ वर्षाकाले संप्राप्ते मानी सिंहगुहावासी सूरिं प्राह—"इमां चतुर्मासीं स्थूलभद्र इव कोशागृहे स्थास्यामि"।

गुरुणा ध्यातम्—"अयं हि स्थूलभद्रस्पर्धयाङ्गीकरोति"। तत उपयोगं दत्त्वा गुरुः प्राह—"वत्स! मैनमभिग्रहं कार्षीः, अमुं वोढुं स एव क्षमो नापरः। यतः—

अपि स्वयंभूरमण—स्तरीतुं शक्यते सुखम्। अयं त्वभिग्रहो धर्तुं, दुष्करेभ्योऽपि दुष्करः॥ १॥"

इतिगुरुवाचमवगणय्य स वीरंमन्यः कोशासदनं ययौ। साऽपि दध्यौ—"अयं मुनिर्नूनमस्मद्धर्मगुरुस्पर्धयाऽऽगात्"। ततः साऽपि नत्वा तद्याचितां चित्रशालिकां ददौ। ततो मदनदीपकं षड्रसाञ्चितमशनं तया दत्तं बुभुजे। अथ कोशा मध्याह्ने पूर्ववत्कृतनेपथ्या तं परीक्षितुमागात्। हावभावतारुण्यवारुम्बरकटाक्षनिक्षेपणादिकं प्रेक्ष्य क्षणात् क्षोभमुपागतो वह्निं प्राप्याज्यजतुमदनद्रव्यवत्। स मदनावेशविवशः संवेशनमयाचत। ततः कोशा तं प्राह—"स्वामिन्! वयं पणाङ्गनाः शक्रमपि धनदानं विना न स्वीकुर्मः"। मुनिराह—"कन्दर्पज्वरार्दितं मां संगमान्निर्वापय, धनमपि तत्प्राप्तिस्थानं निवेदयसि चेत् तत आनये"। ततः सा तं बोधयितुं प्रोचे—"नेपालभूपो नव्यसाधोर्लक्षमूल्यं रत्नकम्बलं प्रदत्ते, तमानय मत्कृते"। श्रुत्वेति सोऽकालेऽपि नेपालं प्रति चचाल। तत्र गत्वा भूपते रत्नकम्बलं प्राप्य सद्यस्तां ध्यायन् ववले। तत्र मार्गे स्थितानां दस्यूनां शकुनिरित्यूचे—"लक्षधनमायाति" इति पुनः पुनः प्रोचे। अथ तत्रागतं साधुं धृत्वा चौरा व्यलोकयन्। किमपि द्रव्यमपश्यन्तस्ते मुनिं मुमुचुः। पुनः शकुनिरित्याख्यत्—"इदं पुरो लक्षं याति"। तदा तं साधुं विधृत्य चौरराडित्यभ्यधात्—"वयं तवाभयं दद्मः,

१ भोगम्.

तथ्यं वद किमस्ति तव पार्श्वे?"। यतिर्जगौ—"हे दस्यवः! सत्यं शृणुत, एतद्वंशमध्ये [illegible] रत्नकम्बलः क्षिप्तोऽस्ति"। चौरैर्मुक्तः स एत्य कोशायै रत्नकम्बलमार्पयत्। साऽपि गृहनिर्गमने पङ्किले तं चिक्षेप। तद्वीक्ष्य विषण्णो मुनिरित्यूचे—"हे सुन्दरि! त्वया महामूल्योऽयं रत्नकम्बलः पङ्के किं क्षिप्तः?"। कोशा स्माह—"यदि त्वमेतज्जानासि तदा कथमात्मानं गुणरत्नाढ्यं भवकर्दमे क्षिपसि? किं च रत्नत्रयं भुवनत्रयदुर्लभं मदङ्गखालजम्बालकल्पे किं मुधा क्षिपसि? नान्ताशी कथं जागर्षि?"। इत्यादि निशम्योत्पन्नवैराग्यः साधुः कोशां जगौ—"हे अनघे! सुश्राद्धे! संसाराब्धौ पतन् साधु त्वया रक्षितोऽस्मि। अथातिचारोत्थदुष्कर्ममलं क्षालयितुं निजज्ञानाम्बुपूर्णं गुरुह्रदं अभिगच्छेऽहम्"। कोशापि तमुवाच—"त्वयि मिथ्या मे दुष्कृतं, यतो ब्रह्मव्रतस्थयाऽपि मया त्वं खेदितोऽसि, [illegible] मया कृताऽऽशातना सोढव्या, स्वमौलिना गुरोराज्ञा वोढव्या"। सोऽपीत्याशीर्युक्त्या गुरुमभ्या-गात्। गुर्वादीन् प्रणम्य स्वं निन्दति।

स चाब्रवीत्स्थूलभद्रः, स एकोऽखिलसाधुषु। युक्तं दुष्करदुष्कर—कारको गुरुणा जगे ॥ १ ॥

पुप्फफलाणं च रसं, सुराइ मंसाइ महिलियाणं च। जाणंतो जे विरया, ते दुक्करकारए वंदे ॥ २ ॥

क्वाहं सत्त्वोज्झितः क्व श्री—स्थूलभद्रश्च धीरधीः। क्व सर्षपः क्व हेमाद्रिः, क्व खद्योतः क्व चांशुमान् ॥३॥

इत्युदीर्यालोचनां गृहीत्वा स दुस्तपं तपस्तेपे। अथ कोशा स्वगुरुस्तुतिमाह—

सार्धद्वादशकोटीनां, स्वर्णं यो मामदाद्गृहे। स द्वादशव्रतान्येवं, साधुस्तोऽपि ददावहो ॥ १ ॥

येन दत्तं पुरा दानं, तेनैव दीयते पुनः । चातको रटते नित्यं, दानं यच्छेत् पयोमुचः ॥ २ ॥
धनदानादयाचित्व—माजन्म निर्मितं सुखम् । व्रतदानाद्भवेऽनन्ते, सौख्यदो मम सर्वदा ३ ॥
चतुरशीतिचतुर्विंश्या—मुद्भविष्यन्ति तीर्थपाः । स्थूलभद्रमुनीन्द्रस्य, करिष्यन्ति हि वर्णनाम् ॥ ४ ॥

स्त्रीवृतोऽपि बहुभिर्दिवसैः स, शीलमात्मनि गतं न मुमोच ।
मानसं हरिगुहामुनितुल्यं, साधुभिः शशिमुखीषु न नेयम् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोविंशे
स्तम्भे एकोनचत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३३९ ॥

## चत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४० ॥

अथ चुल्लकादिदृष्टान्तमध्यगतपाशकसंबन्धमाह—

संबन्धैर्दशभिर्ज्ञेयो, मनुष्यभव(वो) दुर्लभः । तन्मध्ये पाशकज्ञातं, लिख्यते पूर्वशास्त्रतः ॥ १ ॥

स्पष्टः । ज्ञातं चेदम्—

गोल्लदेशे जैनश्चणकनामा विप्रोऽभूत् । तस्य भार्या चणेश्वरी । तयोः सुतश्चाणाक्यः गर्भादशनैः सह जातः । अन्यदा तद्गृहे ज्ञानी मुनिराहारार्थमागात् । दम्पती मुनिं नत्वा पप्रच्छतुः—"हे भगवन् ! अस्मा

सदन्तो जातोऽस्ति तस्य को हेतुः ?" । मुनिः स्माह—"बालोऽयं नृपो भविता" । तच्छ्रुत्वा चणको विप्रो दध्यौ—"मत्सुतो राज्यारम्भैरधोगतिं मा यासीत्" इति ध्यात्वा दन्तान् घृष्ट्वा साधुभ्यः सोऽवक् । साधुः स्माह—"तर्हि बिम्बेशो भावी" । ततश्चाणाक्यः क्रमेण सकलकलासमुद्रोऽभूत् । यौवने विप्रकन्यां पर्यणैषीत् । निर्धनोऽपि हि संतोषतो द्रव्यार्थं महाप्रयत्नं नाकरोत् । अन्यदा तत्प्रिया भ्रातृविवाहे पितृगृहेऽगात्, परं निर्धनत्वेन भ्रातृजायादयोऽस्याः प्रतिपत्तिं न चक्रिरे, भोजनादावपि पङ्क्तिभेदं व्यधुः, ततोऽतिदौःस्थ्याल्लज्जिता पत्युर्गृहेऽगात् । ततः शोकभरां तां वीक्ष्य भर्त्रा सनिर्बन्धं पृष्टा मुखाम्बुद्धोऽनमश्रुजलं मुञ्चन्ती स्माह तं पराभवम् । तच्छ्रुत्वा चाणाक्यो दध्यौ—

कलावान् कुलवान् दाता, यशस्वी रूपवानपि । विना श्रियं भवेन्मर्त्यो, निस्तेजाः क्षीणचन्द्रवत् ॥१॥

नन्दनृपो विप्राणां धनं बहुलं ददाति इति विमृश्य स पाटलिपुरं द्राग् जगाम । तत्र राजसभायां गत्वा नृपासनमशिश्रियत् । अथ नन्दनृप एकेन सिद्धपुत्रेण निमित्तज्ञेन संयुत उपागमत् । तत्रस्थं चाणाक्यं वीक्ष्य सिद्धपुत्रोऽब्रवीत्—"असौ विप्रो नन्दवंशस्य छायामाक्रम्य तिष्ठति" । ततश्चाणाक्यं दासीर्दासीत्युवाच—"भगवन् ! इदं द्वितीयं सिंहविष्टरमध्यास्स्व" । सोऽवक्—"अस्मिन्नासने मत्कमण्डलुः स्थास्यति" । इत्युक्त्वा तत्र तं न्यस्याद्यमासनं न त्यक्तवान् । ततस्तृतीयं दण्डेन चतुर्थं चाक्षमालया पञ्चमं ब्रह्मसूत्रेण सोऽरुणत् । ततो दासी जगौ—"अहो अस्य धार्ष्ट्यं जडत्वं च" । स रुष्टोऽङ्घ्रिणा तामाहत्य सदम्भमिदमित्युवाच—

कोशैश्च भृत्यैश्च निबद्धमूलं, पुत्रैश्च मित्रैश्च विवृद्धशाखम् ।
उत्पाट्य नन्दं परिवर्तयामि, महाद्रुमं वायुरिवोग्रवेगः ॥ १ ॥

अनेन भिक्षुणा किं स्यादिति राज्ञाऽप्युपेक्षितः स निरगात्, भ्रमंश्च नन्दभूपतेर्मयूरपोषकग्रामेऽगात् । तत्र परिव्राजकवेषेणाभ्रमत् । तत्र ग्रामणीपुत्र्याश्चन्द्रपानदोहदोऽजनि, तं पूरयितुं कोऽपि नाशकत् । ततः पित्रादिभिश्चाणाक्यः प्रोक्तः, सोऽवक्—"तत्सुतं मम दत्त चेत्तदाहं पूरयामि" । "अपूर्णदोहदा गर्भान्विता मा म्रियताम्" इति विमृश्य तैस्तस्य वचनं स्वीकृतम् । अथ स सच्छिद्रं पटमण्डपमचीकरत्, तस्योपरि प्रच्छन्नं शनैः शनैश्छिद्रपिधायकं नरममुञ्चत्, तस्य छिद्रस्याधस्तात् स्थालं पयोभृतं न्यधात्, निशीथे कार्तिकीचन्द्रस्तत्र प्रतिबिम्बितः, चान्द्रं प्रतिबिम्बमन्तर्वर्त्त्याः प्रदर्श्य स पिबेत्यूचे, ततस्तुष्टा सा तत्पातुं प्रचक्रमे, चन्द्रपानधिया स्थालपयः सा यथा यथाऽपात् तथा तथोपरिस्थो नरो मण्डपच्छिद्रं पिदधे । ततो दोहदे पूर्णे सा समये सुतं सुषुवे । चाणाक्यस्तु द्रव्यार्जनं प्रारेभे । तस्य पुत्रस्य चन्द्रगुप्त इति नाम कृतम् । ततः प्राप्तप्रौढवयाः स बालः शिशुभिः सह भूपलीलया क्रीडति, देशपुरगोकुलहय-गजामात्यादीन् स्थापयति । तत्र भ्रमन् चाणाक्य एत्य प्राह—"हे बाल ! ममापि किञ्चिद्देहि" । चन्द्रो-ऽवदत्—"इमाः सुरभीर्गृहाण" । स स्माह—"एता गृह्णन् बिभेमि" । चन्द्रोऽवक्—"मा भैषीः, वीरभोग्या भूरियं" । ततो हृष्टः स तस्य कुलादिकमन्येभ्यो ज्ञात्वा स्वकीयं बालं निर्धार्येत्यूचे—"हे वत्स ! एहि राज्यं ददामि" । तच्छ्रुत्वा द्रुतमायातं तं हत्वा द्राक् पलायिष्ट । ततः सेनां कृत्वा पाट-

लिपुरं रुद्धम्। नन्देन तत्सैन्यं क्षणेन जितम्। चन्द्रगुप्तश्चाणाक्येन समं पलायत। ततो नन्दाश्ववारास्तत्पृष्ठ आजग्मुः, तेषां मध्य एकोऽश्ववारो दूरात्ताभ्यां दृष्टः। ततश्चाणाक्यश्चन्द्रं सरसि संगोप्य स्वयं रजककर्म प्रारेभे। इतश्च सोऽश्ववारस्तं पप्रच्छ—"चन्द्रगुप्तो व्रजन्नत्र त्वया दृष्टः?"। सोऽप्यूचे—"अत्र सरसि प्रविष्टोऽस्ति"। ततः स कौपीनमात्रभृज्जले विवेश। तदा चाणाक्यस्तस्यैव खड्गेन तच्छिरोऽच्छिनत्। ततश्चन्द्रं तस्मिन्नश्वे आरोप्य स पुरतोऽचालीत्। स चन्द्रं पप्रच्छ—"हे वत्स! यदा मया सादी सरसि प्रेषितस्तदा त्वया किं ध्यातम्?"। "हे पूज्य! उत्तमाः कुर्वन्ति तत्रेष्टमेवे"ति विनयवाक्यात्स हृष्टः। ततश्चन्द्रं क्षुधा बाधितं ज्ञात्वा स्वयं भोजनग्रहणार्थं व्रजन् पथि अनन्तरभुक्तकरम्बकं विप्रमेकं वीक्ष्य चाणाक्यस्तस्योदरं विदार्य तद्भोज्यं हृत्वा चन्द्रमभोजयत्। सोऽपि क्षुधितस्तद्रसविपर्ययं नाज्ञासीत्। अथ मौर्ययुक्तः स दिनात्यये एकत्र ग्रामे भिक्षायै भ्रमन् रोरगृहे ययौ। तदा वृद्धयैकया स्वबालानां भूरिसामुष्णा रब्बा परिवेषिता। एकः शिशुः क्षुधितो रब्बायां करं प्राक्षिपत्, तेन दग्धाङ्गुलिरुच्चै रुरोद, तं वृद्धाऽभाषत—"रे मूढ! चाणाक्यवत्त्वमपि जडोऽसि"। तच्छ्रुत्वा भिक्षुणा पृष्टम्—"हे मातः! त्वया चाणाक्यनिदर्शनमत्र कथं चक्रे"। सा तं साह—"यथा पूर्वं चाणाक्यो बाह्यं देशमसाधयन् पाटलिपुरं रुन्धानो मूढो विगोपनां प्राप तथैव बालकोऽपि शनैः परितोऽलिहन् मध्य एव पाणिं क्षिपन्नत्युपहासमासदत्"। तद्वाक्यं श्रुत्वा शिक्षां सत्यां निर्धार्य चाणाक्यो भ्रमन् क्रमात् पर्वताभिधेन राज्ञा समं गाढमैत्रीं विदधे। अन्येद्युस्तं नृपं स साह—"चेत्समीहसे तदा नन्दमुन्मूल्य तद्राज्यं विभज्याद-

ष्यहे" । ततः ससैन्यः पर्वतकश्चन्द्रगुप्तान्वितश्चाणाक्यवाक्यान्नन्ददेशस्य साधनं प्रारेभे । तदैकं पुरं बला-
द्ग्रहीतुमक्षमं मत्वा त्रिदण्डिवेषभृच्चाणाक्यस्तत्र विवेश । प्रविश्य च वास्तूनि संप्रेक्षमाणः सप्रभावाः
सप्त देवीरिन्द्रकुमारिका अपश्यत्, तासां प्रभावाद्भङ्गं तत्पुरमवबुध्य 'मयैताः कथमुत्थाप्याः ?" इति
यावता विममर्श तावता पुररोधार्ता नागरास्तं पप्रच्छुः—"भगवन् ! अयं पुररोधः कदा प्रयास्यति ?' ।
सोऽवक्—"यावदमूः देवीनां प्रतिमा अत्र भवन्ति तावत्पुररोधक्षतिः कुतः" ? । ततो धूर्तप्रतारिताः
पौराः तस्मात् स्थानात्ताः क्षिप्रमुदपाटयन् । ततः शीघ्रं तत्पुरं ताभ्यां गृहीतम् । इत्थं नन्ददेशं प्रसाध्य
नन्दपुरमवेष्टयताम् । तदा च क्षीणपुण्यत्वात् चाणाक्यस्यान्तिके नन्दो धर्मद्वारमयाचत । स स्माह—
"त्वमेकेन रथेन यन्नेतुमीशस्तदादाय निर्भयः पुरान्निर्याहि" । नन्दोऽपि भार्याद्वयं कन्यामेकां सार-
धनं च रथेऽधिरोप्य नगरान्निर्ययौ, चन्द्रगुप्तादयः पुरे प्रवेष्टुमागताः । तदा नन्दसुताऽनुरागपरा चन्द्रं
पश्यति, तदा नन्दोऽवक्—"हे पुत्रि ! यद्यसौ स्वामी तव रोचते तदाङ्गीकुरु" । तेनेत्युक्ता सा चन्द्र-
गुप्तरथे यावदारोढुमुपचक्रमे तावच्चक्रारका नवाभज्यन्त । चन्द्रोऽमङ्गलकरीं तां ज्ञात्वा न्यवारयत् । तं
प्रति चाणाक्यः स्माह—"वत्स ! मा मा निषेधय, अनेन निमित्तेन नव पुरुषान् यावत्ते वंशो भावी" ।
ततश्चन्द्रस्तां रथेऽधिरोप्य नन्दगृहे ययौ चाणक्यपर्वतकसहितः । तत्रैका कन्याऽभवत्, आजन्म तां
नन्दः शनैर्विषमं विषमभोजयत् । तां वीक्ष्य पर्वतको विषयार्तोऽङ्गसङ्गं चकार । तेन विषव्याप्तश्चन्द्रं

जगौ—"सद्यः कश्चित्प्रतिकारं कुरु"। स प्रतिक्रियाकरणोद्यतोऽभूत्, तदा चाणाक्येन भ्रूसंज्ञया निषिद्धः शिक्षितश्च, यतः—

तुल्यार्थं तुल्यसामर्थ्यं, मर्मज्ञं व्यवसायिनम्। अर्धराज्यहरं मित्रं, यो न हन्यात्स हन्यते ॥ १ ॥

ततः स पर्वतो नामशेषतां प्रपेदे। तस्य राज्यं चन्द्रगुप्ताधीनं जातम्। अथ चन्द्रगुप्तराज्ये नन्दनराश्चौर्यं व्यधुः। ततश्चाणाक्योऽन्यं कश्चिदारक्षकममार्गयत्। ततो भ्रमन्नलदाहकुविन्दस्य गृहेऽगात्। तं मर्कोटकगृहेष्वग्निं क्षिपन्तं ददर्श। चाणाक्यः किं करोषीति तमप्राक्षीत्। कुविन्दः स्माह—"मत्सूनोर्दंशदायिनो दुष्टानेतान्मर्कोटकान् सान्वयान् हन्तुं बिलेष्वहमनलं प्रक्षिपामि"। इति तस्य गिरा तं कर्मठं मोघमं ज्ञात्वा तस्मै पुराध्यक्षतां चन्द्रगुप्तादद्यापयत्। एवं मौर्यस्य राज्यं निष्कण्टकं जातम्।

अन्यदा चन्द्रस्य धनं नास्तीतिधिया पौरैः सह मद्यपानगोष्ठी कृता। एकदा मद्येनोन्मत्तेषु पौरेषु नृत्यत्सु चणिसुः क्षीवचेष्टामनुतिष्ठन् प्राह—

वस्त्रे द्वे धातुरक्ते मे, त्रिदण्डं स्वर्णकुण्डिका। नृपतिर्वशवर्ती मे, तन्मे वादय कुम्बरीम् ॥ १ ॥

ततश्च कुम्बरीवादकैः कोलिकैस्तन्नाम्ना कुम्बरी वादिता। तन्निशम्यापरो मत्तो नागरः करमुत्क्षिप्य कस्याप्यनुक्तां स्वलक्ष्मीं प्रादुष्कुर्वन्निदं जगौ—"सहस्रयोजनीं गच्छत इभस्य पदे पदे लक्षं ददामि एतावन्नानां स्वाम्यहं, तन्मन्नाम्ना ढोलकं वादयत"। ततोऽहंपूर्विकापूर्वमन्योऽप्येवं जगौ—"तिलानामाढके घसे वादमुक्ते फलिते च यावन्तस्तिला निष्पद्यन्ते तावन्ति दीनारलक्षाणि मद्गृहे सन्ति, तन्मे

वादयत ढोलकम्" । अन्योऽप्यूचे—"नव्यवर्षापूर्णगिरिनदीप्रवाहमेकदिवसोत्पन्नमक्षणेन पाली बद्ध्वा स्खलयामि, तन्मे वादयत ढोलकम्" । अन्योऽवादीत्—"एकाहर्जातजात्याश्वकिशोरस्कन्धकेशरैर्विश्वक् पुरं वेष्टये, तन्मे वादयत ढोलकम्" । अन्योऽवोचत्—"मद्गृहे एकः शालिः छिन्नच्छिन्नशालिबीजप्रसूतिमानस्ति, अन्यश्च छिन्नः छिन्नः प्ररोहकः गर्दभिकाशालिः, एतद्द्वयमस्ति, तन्मे वादयत ढोलकम्" । इत्थं मद्यविवशास्ते स्वस्वश्रियः प्राडुश्चक्रुः, यतः—

कुविअस्स आउरस्स य, वसणपत्तस्स रागरत्तस्स । मत्तस्स मरंतस्स य, सब्भावा पायडा हुंति ॥ १ ॥

ततः स्वास्थ्यं प्रपन्नेभ्यस्तेभ्यो यथार्हं धनं स्वल्पं स्वल्पमग्रहीत् । पुनश्चाणिसूर्लोकतो धनमादित्सुर्दिव्यपाशकानकरोत् । ततो दीनारैः स्थालमापूर्य चत्वरे गत्वा जनानूचे—"यो हि द्यूते मां जयति जनस्तस्मा अमूनखिलान् ददामि, यद्यहं जेष्यामि तर्हि निष्कमेकं ग्रहीष्ये" । तन्निशम्य रन्तुं लुब्धा जनास्तेन समं रेमिरे ।

द्यूतक्रीडासु दक्षोऽपि, तं विजेतुं न कोऽपि हि । अलंभूष्णुरभूत्तेषां, पाशकानां प्रभावतः ॥ १ ॥

संपदां पाशैस्तैः पाशैः, निजेच्छामनुवर्तिभिः । लोकान् विजित्य चाणिसूः, स्वर्णैः कोशमपूरयत् ॥ २ ॥

दिव्यानुभावादिबलेन यद्वा, जीयेत केनापि स धीसखोऽपि ।
प्रमादतो हारितमर्त्यजन्म, जन्मी पुनर्नो लभते नरत्वम् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोविंशे स्तम्भे
चत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४० ॥

## एकचत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४१ ॥

अथौत्पत्तिकीबुद्धिमाह—

औत्पत्तिक्यादिबुद्धिज्ञो, रोहकोऽङ्गजनेषु यत् । महामान्यस्तथा धार्यो, धर्मज्ञैर्गुणोत्तरः ॥ १ ॥

स्पष्टार्थः । दृष्टान्तश्चायम्—

अवन्तिसमीपे नटाह्वग्रामे भरतो नाम नटः । तस्य भार्या परासुरभूत् । तस्यौत्पत्तिकीबुद्धिमान् रोहकनामा सुतोऽस्ति । भरतनटोऽन्यां स्त्रियमानिन्ये । सा रोहकस्यान्नपानादिभक्तिं सम्यक् न कुरुते । ततो रोहकेण सा कथिता—"मातः! न मे सम्यग्वर्तसे त्वं, ततो ज्ञास्यसि" । साऽह—"रे सपत्नीपुत्र ! किं करिष्यसि ?" । सोऽवक्—"तत् करिष्यामि, येन त्वं मे पादयोर्लगिष्यसि" । ततोऽन्यदा स निशि सहसा पितरं स्माह—"भो भो पितर् ! एष नंष्ट्वा याति" । इति श्रुत्वा पिता शंकितः "नूनं विनष्टा मे भार्या" । एवमाशङ्क्य तस्यां निःस्नेहोऽभूत्, तां वाचापि न संभाषते । ततः सा बालकृत्यं ध्यात्वा तमवादीत्—"वत्स ! किमिदं त्वया चेष्टितं ? तव पिता मे सहसा पराङ्मुखोऽभूत्, ममापराधं क्षमस्व" । सोऽवक्—"तर्हि मा खेदं कुरु" । तदनु सा तस्य शुश्रूषां तनोति । एकदा रोहकश्चन्द्रकान्त्यां पितुः शङ्कापनोदाय बालस्वरूपेण निजच्छायामङ्गुल्यग्रेण दर्शयन् पितरमाह—"हे पितर् ! एष स याति" । स खड्गमादाय 'रे कथय कुत्र याति ?' । स शिशुरङ्गुल्या निजच्छायामदर्शयत्—'एष मया श्रृङ्खलितः' । इति

श्रुत्वा दध्यौ तस्य पिता—"नूनं प्रागप्येवंविध एव नरो भविष्यति, धिग् मां प्रियायां सुशीलायां निःस्नेहवन्तम्"। सोऽपि रोहको 'मयाऽस्या विप्रियं कृतमतः कदाचिदियं मां विषादिना हन्ति' इति ध्यात्वा सदैव पित्रा सह भुङ्क्ते। अन्यदा पित्रा सहावन्त्यां गतः, तां वीक्ष्य वीस्मयं प्राप। ततः पित्रा सह पुरीतो निर्गतः। पिता च 'मे किमपि विस्मृतम्' इति रोहकं सिप्रातटेऽवस्थाप्य स्वयं पुरीं प्राविशत्। रोहकोऽपि नदीसैकते वप्राकारां पूर्णां पुरीं सिकताभिरालिखत्। इतश्चाश्वं वाहयन्तं नृपं तत्रालिखितपुरमध्ये गच्छन्तं स आह—"भो राजपुत्र! माऽनेन पथा गमः"। तेनोक्तं—"किमिति?"। सोऽवक्—"रे! त्वं राजकुलमिदं न पश्यसि?"। नृपोऽपि यथार्थं तदालिखितं वीक्ष्य तं पप्रच्छ—"रे पूर्वं त्वया पुरमेतत् दृष्टमासीत् न वा?"। सोऽवक्—"न कदाचित्, केवलं नटग्रामादद्यैवाहमिहागतः" नृपो दध्यौ—"अहो! शिशोः प्रज्ञातिशयः!"। "किं ते नाम?"। तेनोक्तं—"रोहक इति मे नाम"। अत्रान्तरे रोहकपिताऽऽगतः। तेन सह स्वस्थानं गतः।

अथ नृपेण चिन्तितं—"ममैकोनपञ्चशती मन्त्रिणामस्ति, तेषां सर्वेषां बुद्धिरेकत्र सचिवे स्यादेवंविधं धीसखं करोमि, येन राज्यतेजो वर्धते"। अथ रोहकबुद्धिपरीक्षार्थं सामान्यतो ग्रामप्रधाननरानुद्दिश्यैवमादिष्टवान्—"युष्मद्ग्रामस्य बहिरतीव महती शिला वर्तते, तामनुत्पाट्य राजयोग्यं मण्डपाच्छादनं कुरुत"। इति नृपाज्ञां श्रुत्वा सर्वेऽपि चिन्तामनेकविधां चक्रुः, मध्याह्नो जातः,। तदा रोहक एत्य जनकं प्राह—"पीडितोऽहमतीव क्षुधया, समागच्छ गृहे भोजनाय"। भरतः प्राह—"वत्स! त्वं निश्चि-

ततोऽसि ।किमपि ग्रामकष्टं न जानासि"। स प्राह—"किं कष्टं?" । ततो भरतो राजादेशमुवाच । ततोऽवक्—"माऽऽकुला भवत यूयं, खनत राजार्हमण्डपकरणाय शिलाया अधस्तात्, स्तम्भांश्च यथा-स्थानं निवेशयत, शिलामनुत्पाट्य भूमिगृहवत् भित्त्यादिकं कुरुध्वं"। तन्निशम्य तुष्टाः सर्वे भोजनं कृत्वा तदुक्तरीत्या मण्डपं चक्रुः । नृपोऽपि तं मण्डपं वीक्ष्य हृष्टः नृपग्रामीकान् पप्रच्छ—"कस्येयं बुद्धिः?" । तेऽवादिषुः—"भरतपुत्रस्य रोहकस्य"। ततो भूयोऽपि नृपस्तद्ग्रामे मेंढकं प्रेषितवान्—"एष यावत्पलमितः सम्प्रति विद्यते, पक्षातिक्रमेऽपि तावत्प्रमाण एव समर्पणीयः न न्यूनो नाप्यधिकः"। एवं संप्राप्ते राजादेशे मिलितः सर्वोऽपि ग्रामाद्बहिः सभायाम्, आकारितश्च रोहकः, ज्ञापितो नृपादेशः। सोऽवक्—"वृकं प्रत्यासन्नं धृत्वा मेंढकमेनं यवसदानेन पुष्यन्तु"। ततस्ते तथैव चक्रुः। पक्षातिक्रमे राज्ञे दत्तः। तोलितश्च तावत्पलमित एव जातः। ततो भूयो राज्ञा कुर्कुटः प्रेषितः—"एष द्वितीयं ताम्रचूडं विना योधयितव्यः"। ततो रोहकबुद्ध्याऽऽदर्शस्तदभिमुखं स्थापितः, तन्मध्ये प्रतिबिम्बं वीक्ष्य साहङ्कारं योद्धुं प्रवृत्तः। तत् स्वनियुक्तचरमुखाच्छ्रुत्वा हृष्टो नृपः। भूयोऽपि "वालुकामया दवरकाः प्रेषणीया" इति आज्ञां प्रेषितवान्। ततो रोहकयुक्त्या तैः प्रत्युत्तरमदायि—"यद्राजकोशे ते चिरंतना भविष्यन्ति तन्मध्यादेकः प्रतिच्छन्दभूतः प्रेषणीयः, तदनुसारेण वयमपि तान् दवरकान् कुर्मः"। तच्छ्रुत्वा राजा तूष्णीमास्ते। पुनर्जीर्णो हस्ती रोगग्रस्तो मुमूर्षुर्ग्रामे प्रेषितः "यथाऽयं मृत इति न प्रोच्यः प्रत्यहमस्योदन्तो वाच्योऽस्माकम्"। ततस्तस्यामेव रात्रौ स हस्ती पञ्चत्वमुपगतः। ततो रोह-

कवाक्येन ग्रामेशै राज्ञे निवेदितं—"देव! अद्य हस्ती न निषीदति, नोत्तिष्ठति, नाहारं नीहारं च करोति, न कामपि चेष्टां तनोति"। राज्ञोक्तं—"किं रे मृतो हस्ती?"। तैरुक्तं—"देवपादा एवं ब्रुवते, न वयं"। ततो नृपो मौनं दधौ। पुनरपि नृपेणादेशः प्रेषितः—"युष्मदीयग्रामे सुस्वादुकूपोऽस्ति, स सत्वरमिह प्रेष्यः"। रोहकबुद्ध्या तैर्नृपो विज्ञप्तः—"अस्माकं ग्राम्यः कूपः स्वभावाद्भीरुः स्यात्, पुरमार्गदर्शको नागरिककूप एकः प्रेष्यताम्, यतस्तेन सह समेति"। नृपो मौनमास्ते। पुनर्नृप आदेशं प्रेषितवान्—"वह्निसंपर्कमन्तरेण पायसं पचत"। ततो रोहको ग्राम्यान् स्माह—"तन्दुलान् बहुजले क्लिन्नान् कृत्वा सूर्यकरसंतप्तकरीषपलालादीनामूष्मणि तन्दुलपयोभृता स्थाली निवेश्यताम्, येन परमान्नं संपद्यते"। तैस्तथैव कृतम्। तज्ज्ञात्वा राजा विस्मितः। ततो राज्ञा रोहकस्य बुद्ध्यतिशयमवगम्य तदाकारणाय समादिष्टम्—"य एवंविधबुद्धिरस्ति तेन मत्समीपे आगन्तव्यं, परं न शुक्लपक्षे नापि कृष्णपक्षे, न रात्रौ नापि दिवा, न छायायां नाप्यातपे, नाकाशे न पादाभ्यां, न पथा नाप्युत्पथेन, न स्नातेन न चास्नातेन"। तत एवमादिष्टे स कण्ठस्नानं कृत्वा गन्त्रीचक्रस्य मध्यभूमिभागे करणारूढो धृतचालनीरूपातपत्रः सन्ध्यासमयेऽमावास्याप्रतिपत्सङ्गमे नरेन्द्रपार्श्वमागमत्। स च "रिक्तहस्तो न पश्येत राजानं दैवतं गुरु"—मिति लोकश्रुतिं विभाव्य मृत्पिण्डमेकमादायागतः, प्रणतो राजा, उपायनीकृतः पृथ्वीपिण्डः। ततो राज्ञा पृष्टः "रे रोहक! किमेतत्?"। "हे देव! यूयं पृथ्वीपतयस्ततो मया पृथ्वी समानीता"। श्रुत्वेदं राजा तुतोष। रात्रौ राज्ञा स स्वपार्श्वे शायितः। प्रथमे यामे गते राज्ञाऽऽला-

पितः—"रे जागर्षि किं वा स्वपिषि ?"। "देव ! जागर्मि"। "किं चिन्तयसि ?"। सोऽवक्—"देव ! अश्वत्थपत्राणां किं दण्डो महान् उत शिखा ?"। राजा संशयमापन्नो वदति—"साधु चिन्तितं, कोऽत्र निर्णयः ?"। तेनोक्तं—"यावच्छिखाग्रभागो न शोषमुपयाति तावत् द्वे अपि समे"। पुनरपि द्वितीये यामे गते राज्ञा शब्दितः—"किं रे जागर्षि स्वपिषि वा ?"। "देव ! जागर्मि"। किं चिन्तयसि ?"। "देव ! छागिकाया उदरे कथं भ्रम्युत्तीर्णा इव वर्तुलगुलिका जायन्ते ?"। राजा स्माह—"कथय तत्त्वम्"। "देव ! संवर्तकाभिधवातविशेषात्"। ततः पुना रोहकः सुष्वाप। तृतीये यामे गते भूयोऽपि राज्ञा शब्दितः—"किं रे जागर्षि स्वपिषि वा ?"। "देव ! जागर्मि"। किं चिन्तयसि ?। "देव ! खरूहिलिकाजीवस्य यावन्मात्रं पुच्छं तावन्मात्रं शरीरमुत हीनाधिकं ?"। राजा तमपृच्छत्—"कोऽरेऽत्र निर्णयः ?"। "देव ! सममिति"। ततो रोहकः सुप्तः। प्रभाते राजा प्रबोधमुपगतः तमभाषिष्ट, स च निद्रान्तरमुपगतो न प्रतिवाचं ददौ। ततो राजा लीलाकम्बिकया मनाक् स्पृष्टवान्। ततः सोऽपनिद्रो जातः पृष्टश्च —"किं रे स्वपिषि ?"। स साह—"देव ! जागर्मि"। "तर्हि किं चिरेण जल्पितः ?"। "देव ! चिन्तयामि कतिभिर्जातो नृप इति"। एवमुक्ते सव्रीडमना मनाक् तूष्णीं स्थितः, क्षणान्तरे पृष्टवान्—"कथय रे कतिभिरहं जातः ?"। स प्राह—"देव। पञ्चभिः"। राजा भूयोऽपि पृष्टवान्—"केन केन ?"। सोऽवक्—"एकेन तावद्वैश्रवणेन, वैश्रवणस्येव भवतो दानशक्तिदर्शनात् १। द्वितीयेन चाण्डालेन, वैरिव्यूहं प्रति श्वपाकस्येव कोपदर्शनात् २। तृतीयेन रजकेन, यतो रजक इव वस्त्रं परि-

पीड्य जनस्य सर्वस्वं हरन् दृश्यसे ३। चतुर्थेन वृश्चिकेन, यन्मामपि शिशुं निद्राभरसुप्तं कम्बिकाग्रेण वृश्चिक इव निर्दयं तुदसि ४। पञ्चमेन निजपित्रा, येन राज्ये न्याये च स्थापितः" ५। इति श्रुत्वा नृपश्चमत्कृतः जननीमेकान्ते नत्वा स्माह—"कथय मातः! कतिभिरहं जातः?"। साऽऽह—"वत्स! किमेतत् प्रष्टव्यं? निजपित्रा त्वं जातः"। ततो राज्ञा रोहकोक्तं निवेदितं "मातः! रोहकः प्रायोऽलीकबुद्धिर्न स्यात्, ततः कथय सम्यक् तत्त्वं"। एवमतिनिर्बन्धे कृते साऽऽह—"यदा तव गर्भाधानमासीत्तदाऽहं बहिरुद्याने वैश्रवणपूजनाय गता, यक्षमतिशयरूपं दृष्ट्वा हस्तसंस्पर्शेन च संजातमन्मथोन्मादा भोगाय तं स्पृहितवती, अपान्तराले समागच्छन्ती चाण्डालयुवानमेकमप्रतिमरूपमपश्यं, ततस्तमपि भोगाय स्पृहयामि स्म, तथैव रजकं वीक्ष्याभिलषितवती, ततो गृहे तथाविधोत्सववशाद्वृश्चिकं कणिकामयं भक्षणाय हस्ते न्यस्तवती, ततस्तत्स्पर्शतो जातकामोद्रेका तमपि भोगायाशंसितवती। एवं यदि स्पृहामात्रेण पितरः सन्ति, परमार्थतः पुनरेक एव ते पिता"। एवं सत्य उक्ते जननीं नत्वा रोहकबुद्धिविस्मितचेताः सर्वेषां मन्त्रिणां श्रेष्ठं तमकार्षीत्।

अत्रोपनयः—बुद्धिसमुत्पादात् पूर्वं स्वयमदृष्टोऽन्यतश्चाश्रुतो मनसाऽप्यनालोचितो गूढार्थः शीघ्रं समुपजायते, तथा धर्मकार्येषु सूक्ष्मार्थग्रहणेषु प्रज्ञा प्रयोज्या, सा चेहपरलोकहितावहेति ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोविंशे स्तम्भे एकचत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४१ ॥

## द्विचत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४२ ॥

अथ द्विविधमायुःस्वरूपमाह—

वर्तमानभवायुष्कं, द्विविधं तच्च कीर्तितम्। सोपक्रमं भवेदाद्यं, द्वितीयं निरुपक्रमम् ॥ १ ॥

स्पष्टः। नवरं सोपक्रममिति किं? बहुना कालेन वेद्यमप्यायुर्वेद्यमानैरध्यवसानाद्यैरुपक्रमैरल्पेनैव कालेन यद्भुज्यते तत्सोपक्रमं, यथा दीर्घीकृता रज्जुरेकतो दत्ताग्निः क्रमाद्दह्यते, सपिण्डिता तु सा एकहेलयैव झटिति दह्यते तथा सोपक्रमायुष्कमपि। यत्पुनर्बन्धसमये गाढनिकाचनाबद्धं क्रमवेद्यफलं तदुपक्रमशतैरप्यपवर्तितुं न शक्यमिति निरुपक्रमम्।

अथोपक्रममाह—

क्षीयतेऽध्यवसानाद्यै—र्यैः स्वोत्थैः स्वस्य जीवितम्। परैश्च विषशस्त्राद्यै—स्ते स्युः सर्वेऽप्युपक्रमाः ॥१॥

स्पष्टः। अध्यवसानादिभिदास्त्वमी, यदाहुः पूर्वपादाः—

अज्झवसाण १ निमित्ते २, आहारे ३ वेयणा ४ पराघाए ५।
फासे ६ आणापाणू ७, सत्तविहं झिज्झए आऊ ॥ १ ॥

अस्या लेशतोऽर्थः—अध्यवसानं त्रिधा रागभयस्नेहभेदात्, तत्र रागाध्यवसानं मृतिहेतुर्यथा कश्चित्तरुणोऽतिरूपवान् पथिकोऽरण्ये तृषार्तः प्रपास्थाने गतः, तत्र प्रपापालिकया जलमानीय तस्य पायितं,

ततस्तया निवारितोऽपि स पुमानुत्थाय गतः, साऽपि तं प्रलोकयन्ती तस्मिन्नदृश्ये जाते तत्रास्थैव रागाध्यवसायान्मृतेति । भयाध्यवसायाद्वासुदेवं वीक्ष्य सोमिलद्विजो हृदयस्फोटेन मृतः, यद्वा मृगावतीस्वामी शतानीकभूपः ससैन्यचण्डप्रद्योतसमागमनं श्रुत्वा भीतो मृतः । स्नेहाध्यवसानाद्यथा तुरङ्गपुरभूपो नरवरोऽभूत्, तस्य मन्त्री भानुः, तस्य सरस्वती भार्या, तयोः परस्परमतिस्नेहलत्वं नृपेण श्रुतं, तन्निर्णयार्थमन्येद्युर्मृगयां गतेन राज्ञाऽन्यजीवरक्ताङ्कितवस्त्रसहितो मन्त्रितुरगः पुरं प्रहितः, स्वप्रियं विना रुधिराङ्कितस्वनाथवस्त्रयुतं तमश्वमायातं वीक्ष्य "हा हा ! मृगयां गतो मम प्राणेशः केनापि सिंहादिना हतः" इति ध्यायन्ती सरस्वती वज्राहतेव भूमौ पतिता मृता, नृपस्तु खिन्नः, मन्त्री तद्विरहार्दितो योगीभूय गङ्गां गतः, सा च गङ्गोपकण्ठस्थितमहारथपुरेशसुता जाता, मन्त्री द्वादशाब्दानन्तरं भिक्षार्थं भ्रमन् राजमन्दिरं गतो भारत्या दृष्टः, अथ तस्य भिक्षां दातुमुपस्थितायास्तद्दर्शनादालिखिताया इव स्थितायास्तस्याः पाणिस्थं कूरं काका आददिरे, योगी तु किञ्चिदवलोक्य विचार्य क्वापि तत्रैव स्थित्वा गतः, तया च धात्र्यां सखीभ्यां सह सङ्केतः कृतः—'अत्र भवेऽयमेव पतिः' । तद्वृत्तान्ते राज्ञा ज्ञाते सर्वयोगिनां समूहः कृतः, तन्मध्ये तयोपलक्षितः, जातिस्मरणतया लब्धं प्राग्भवस्वरूपमुक्तं, नृपवाक्येन सा तेन योगिना स्वीकृता । तदाऽवसरज्ञैः पण्डितैरिति प्रोक्तम्—

भानुश्च मन्त्री दयिता सरस्वती, मृत्युं गता सा नृपकैतवेन ।
गङ्गागतस्तां पुनरेव लेभे, जीवन्नरो भद्रशतानि पश्यति ॥ १ ॥

इति वनितामाश्रित्य ज्ञातं निगदितम् । अथ पुरुषमाश्रित्योच्यते—

कस्यचिद्वणिजो भार्या तरुणी, द्वयोर्गाढः स्नेहः स्वामिना वाणिज्यार्थं देशान्तरगमनोत्सुकेन स्त्री पृष्टा, प्रियगमनवार्तां श्रुत्वा मूर्छां प्राप्य शीतोपचारैर्लब्धचेतना स्वामिनं स्माह—"युष्माकं गमने निश्चयस्तर्हि भवदीयां प्रतिकृतिमेकां विधाय मह्यं प्रयच्छ, तदाधारेण दिनानतिवाहयामि"। ततः पत्या स्वस्य मूर्तिर्निष्पाद्य दत्ता । ततः सोऽचलद्देशान्तरम् । सा तु तां मूर्तिं देवमूर्तितोऽप्यधिकमाराधयति । एकदा पुरे ज्वलनोपद्रवोऽधिकतरः सर्वत्र प्रसृतः, तदा सा स्वप्राणप्रियमूर्तिं कराभ्यां स्थगयित्वा स्थिता, स्वशरीरं सर्वं भस्मीभूतं तथापि तत्करौ दूरे न कृतौ । कियति काले स स्वौकसि समेत्य स्वभार्यासखीं पप्रच्छ—

> नवसत[1] (१६) ससिसमवदनी, हरहाराहारवाहनानयनी[2] ।
> जलसुतरिपुगतिगमनी[3], सा सुंदरि कह हे सयणी ॥ १ ॥

साऽवोचत्—

नयरमझे पावगजलियं, भित्ते चित्ताण कंतचित्तियं । सुणि हो नाहसयाणं, कर न बुट्टा बुट्टया पाणा ॥ १ ॥

इतिसखीवचःश्रवणसमकमेव स प्राणान्मुमोचेति । ननुरागस्नेहयोः कः प्रतिविशेषः ? उच्यते—

---

१ षोडशकलावच्चन्द्रसममुखी. २ शिवहारः सर्पस्तस्याहारो वायुस्तद्वाहनो मृगस्तत्तुल्यनेत्रा. ३ जलसुतः सिंहस्तद्रिपुर्गजस्तस्येव गमनं यस्याः सा.

रूपाद्याक्षेपजनितः प्रीतिविशेषो रागः, सामान्यस्तु कलत्रापत्यादिगोचरः स्नेह इति १। निमित्तात् दण्डशस्त्ररज्जुवह्न्युदकपतनमूत्रपुरीषरोधविषभक्षणादेश्चेति २। आहारात् बहुतोऽल्पतः सर्वथा तदभावाद्वा, अत्याहारतः सम्प्रतिप्राग्भवजीवद्रमकसाधुः दीक्षावासर एव क्षयं गतः ३ वेदनायाश्च शूलादेर्नेत्रादेश्च ४। पराघातात् गर्ताप्रपातविद्युदादेः ५। स्पर्शतश्च त्वग्विषादिसमुद्भवात् सर्पादेर्वा, यथा ब्रह्मदत्ते मृते तत्पुत्रेण स्त्रीरत्नमभाणि—"मया सह भोगान् भुङ्क्ष्व"। तया भणितं—"न शक्नोषि सोढुं मत्स्पर्शं"। न प्रत्येति सः। ततस्तया घोटकः पृष्ठे कटीं यावत् स्पृष्टः, स सर्वशुक्रक्षयेण मृतः, एवं लोहपुरुषोऽपि स्पृष्टः विलीनश्चेति ६। श्वासोच्छ्वासात् विकृतत्वेनात्यन्तप्रसर्पतः निरुद्धाद्वा म्रियते इति ७। एते सप्त सोपक्रमायुषामायुरुपक्रमाः स्युः। उत्तमपुरुषाश्चरमदेहा असङ्ख्येयवर्षायुषो मनुष्यतिर्यञ्चः सुरनारकाश्च निरुपक्रमायुषः। अपरे जीवा द्विधायुष्मन्तो ज्ञेयाः।

अत्राह—ननु स्कन्दकाचार्यशिष्या अर्णिकापुत्रझांझरियामुन्यादयश्चरमशरीरिणः निरुपक्रमायुषः प्रोक्ताः सन्ति तर्हि कथं ते उपक्रमैर्विपन्नाः? उच्यते—तेषां ते उपक्रमाः कष्टदा एव, न त्वायुःक्षयहेतव इति।

अथ सोपक्रमायुषामागामिभवायुःकर्मबन्धमाह—

तृतीये नवमे सप्त-विंशे भागे निजायुषः। बध्नन्ति परजन्मायु-रन्त्ये वाऽन्तमुहूर्त्तके ॥ १ ॥
केचित्तु सप्तविंशाद-प्यूर्ध्वं विकल्पयन्ति हि। यद्वा त्रिभागकल्पनां, यावदन्त्यं मुहूर्त्तकम् ॥ २ ॥

स्पष्टौ। अथ निरुपक्रमायुषामायुर्बन्धकालमाह—

सुरनैरयिकासङ्ख्य–जीवितिर्यङ्मनुष्यकाः । बध्नन्ति षण्मासशेषा–युषोऽग्रभवजीवितम् ॥ १ ॥
निजायुषस्तृतीयांशे, शेषेऽनुपक्रमायुषः । नियमादन्यजन्मायु–र्निबध्नन्ति परे पुनः ॥ २ ॥

स्पष्टौ । अथ सोपक्रमायुषि शिष्यः प्रश्नमाह—

नन्वप्राप्तकालमपि, यद्येवं कर्म भुज्यते । प्रसज्यते तदा नूनं, कृतनाशाकृतागमौ ॥ १ ॥

स्पष्टः । नवरं यत्प्रागनल्पस्थितिकं कर्म बद्धं, तन्न भुक्तमिति कृतनाशाख्यदूषणम् । तेनात्मना यन्न बद्धमल्पस्थितिकं तद्भुक्तमतोऽकृतागमदूषणं समायातम् । अत्र गुरुराह—

नोपक्रमेण क्रियते, दीर्घस्थितिककर्मणः । नाशः किं त्वध्यवसाय–विशेषाद्भुज्यते द्रुतम् ॥ १ ॥

स्पष्टः । नवरमत्रार्हयुक्तिभावना चेत्थं कार्या—

अनल्पकालवेद्यस्या–युषं संवर्तनेन यत् । अल्पकालेन भोग्यत्वं, सोपक्रमायुषां भवेत् ॥ १ ॥

एवमुपक्रमः स्थित्यादिखण्डनद्वारा प्राप्तानामनिकाचितानां सर्वेषां कर्मणां भवति, यस्मात् प्रायोऽनिकाचितानां किल्बिषेतरकर्मणां शुभाशुभकर्मवशादपवर्तना स्यात्, तथा तीव्रेण तपसा स्फूर्जच्छुभपरिणामवशान्निकाचितानामपि अपवर्तना भवेत् । उक्तं च श्रीजिनभद्रगणिक्षमाश्रमणपादैः—

सव्वपगईणमेवं, परिणामवसाउवक्कमो होइ । पायमनिकाइयाणं, तवसाउ निकाइयाणं पि ॥ १ ॥
यथा भूयःकालभोग्यान्, प्रभूतान् धान्यमूढकान् । रुग्णा भस्मकवातेन, अल्पकालेन भुञ्जते ॥ २ ॥
न चात्र वर्तमानानां, धान्यानां विगमो भवेत् । किं तु तद्भोगः स्यात्तूर्णं, कर्मणामप्ययं नयः ॥ ३ ॥

अथवाऽऽम्रादिकं फलं गर्तादेपपलालादियुक्त्या तु क्षिप्रं पक्कं स्यात्, एवं कर्मणामपि । अत्राह शिष्यः—नन्वेवं कर्म यद्बद्धं तत्सर्वं वेद्यमेव अपवर्तनाकरणादथवा चिरायथास्थितं चेति चेत् तदा प्रसन्नचन्द्रादेः सप्तमावनियोग्यस्य बद्धस्य कर्मणो भोगो दुःखविपाको वा न श्रूयते, शुभभावादचिरादेव कैवल्यं प्राप्तः, तर्हि सर्वं कर्म वेद्यमेतद्भवद्वचनं व्यर्थं यथोक्तन्यायेन । अत्रोच्यते—यद्बद्धं कर्म तत्सर्वं प्रदेशपरिभोगतोऽवश्यं जीवैर्भुज्यते, रसानुभवतः पुनः किञ्चित्कर्मानुभूयते किञ्चिच्च नानुभूयते तथाविधपरिणामात्तद्रसस्यापवर्तनात्, ततः प्रसन्नचन्द्राद्यैः सप्तमावनिकर्मणां प्रदेशा नीरसा भुक्ता नानुभागतस्तद्भवः । ननु प्रसन्नचन्द्राद्यैर्यत्कर्म रसांचितं बद्धं तन्नीरसं भुक्तं तदा कृतनाशाकृतागमदोषौ कथं न जातौ ? अत्र गुरुः प्रतिविधानमाह—परिणामविशेषेण यदि कर्मणां रसः क्षीयते तदा किमनिष्टं ? यथा तीव्रातपोपतप्तस्य यदीक्षो रसः क्षीयते कोऽत्रापूर्वस्यागमः, हे सन्मते ! त्वमेव वद । अपि च यथा बद्धं कर्म तथैवावश्यं भुज्यते तदा दुरितात्क्षयात्तपोविधिः सर्वो व्यर्थः स्यात्, यतोऽङ्गिनां तद्भवसिद्धीनामपि कर्मावशिष्यते तदा मोक्षप्राप्तिः कस्यापि न स्यादेव ।

सत्तायामन्तरम्भोधि–कोटाकोटिस्थिति स्फुटम् । तच्च प्रदेशैर्वेद्येत, ततस्तन्नीरसं मतम् ॥ १ ॥

किं चासन्नभवोपात्तं नानागतिनिबन्धनं तद्भवेऽपि कर्म सत्तायां स्यादेव । विपाकरूपेणैव कर्मणोऽनुभवो यदि भवति तदा तत्र भवे नानाभवानुभवसंभव इति । अथवा बन्धसमये तादृशा परिणामेन बद्धं यदुपक्रमैः साध्यं तत्स्यात् औषधैः साध्यो रोग इव । यत्त्वसाध्यरोगवत्तादृशाध्यवसायेन बद्धं तदु-

चितात् कालविपाकादेव नश्यति, यस्मात्कर्मबन्धाध्यवसायस्थानानि विचित्राणि असङ्ख्यलोकाकाश-प्रदेशप्रमितानि वर्तन्ते । तेषु कानिचित्सोपक्रमकर्मजनकानि कानिचिदनुपक्रमकर्मणां बन्धजनकानि, यादृशाध्यवसायेन यद्बद्धं कर्म तत्तथा भोक्तव्यं, नात्र त्वदुक्तदोषावकाशः । यथा तुल्येऽपि शास्त्रेऽध्येतव्ये बुद्धिपाटवभेदेन भेदः, तुल्येऽपि गन्तव्ये क्षेत्रे बहुयोजनमिते बहूनां गन्तॄणां गतिपाटवभेदेन कालभेदो दृश्यते, तथा समानस्थितिके बद्धे कर्मणि अनेकेषां प्राणिनां परिणामविशेषेण भोगकालः पृथक् पृथक् ज्ञेयः, यत उक्तं लोकप्रकाशे—

पिण्डीभूतः पटः क्लिन्न-श्चिरकालेन शुष्यति । प्रसारितः स एवाशु, तथा कर्माण्युपक्रमैः ॥ १ ॥

इति स्थितम् । अथ यत्र भवे एवमनन्तरोदिताः सप्त नित्यमायुःक्षयहेतवस्तत्रायुषो विश्वासाभावात् कामादिपरिहारेण धर्म एव सार इति तत्त्वमित्याह—

यस्मिन्नायुषि सुस्नेहः, प्रत्यहं धार्यते नरैः । प्रतिक्षणं क्षयं तस्य, मत्वा मा मुञ्च सन्मतिम् ॥ १ ॥

स्पष्टः अत्रार्थे पूर्वपूज्यवाक्यमिदं, यथा—

क्षणयामदिवसमास-च्छलेन गच्छन्ति जीवितदलानि । इति विद्वन्नपि कथमिह, गच्छसि निद्रावशं रात्रौ ॥ १ ॥

तथाऽयुषश्चञ्चलत्वं ब्रह्मदत्तप्रतिबोधार्थमित्थमुक्तं मुनिभिः—

इह जीविए राय असासयम्मि, धणियं तु पुणाइ अकुव्वमाणे ।
से सोअइ मच्चुमुहोवणीए, धम्मं अकाऊण परम्मि लोए ॥ १ ॥

इत्यादिभिः श्रुतवाक्यैरायुरशाश्वतं विचार्य धर्मः कार्य इति ।

सप्तायुषः शास्त्रधरैरुपक्रमाः, प्रोक्तास्तथा प्रायश (शो) वीक्ष्यतेऽधुना ।
विद्युत्पताकाशरदभ्रचञ्चल–मायुर्विचार्य प्रविधेहि सन्मतिम् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोविंशे स्तम्भे द्विचत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४२ ॥

## त्रिचत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४३ ॥

अथ द्वितीयामशरणभावनामाह—

पितृमातृकलत्रायु–र्वैद्यमन्त्रसुरादिकाः । नैव त्रायन्ति जीवानां कृतान्तभय उञ्झिते ॥ १ ॥

स्पष्टः । परं सुरा अपि मरणान्न त्रायन्ते ! उक्तं च—

स्नेहादाश्लिष्य शक्रेण–र्धासनेऽध्यास्यते स्म यः । श्रेणिकः सोऽप्यशरणो–ऽश्रोतव्यां प्राप तां दशाम् ॥ १ ॥
वैरादारकन्दकाचार्यं, मुनिपञ्चशतीं व्रतः । न कश्चिद्भवत्राता, पालकादन्तकादिव ॥ २ ॥
षष्टिपुत्रसहस्राणि, सगरस्यापि चक्रिणः । तृणवत्त्राणरहिता–न्यदहज्ज्वलनप्रभः ॥ ३ ॥

सगरपुत्रज्ञातं चेदम्—

अयोध्यायां जितशत्रुनृपोऽभूत् । तस्य पत्नी विजया । तयोः सुतोऽजितसेनजिनेश्वरो बभूव । जित-

शत्रोरनुजः सुमित्रविजयाह्वयः । तस्य महिषी यशोमती । तयोस्तनयः सगरचक्री अजनि । तस्य चक्रिणः षष्टिसहस्राणि तनया जज्ञिरे । तेषु जह्नुर्ज्येष्ठोऽभवत् । सोऽन्यदा नृपमप्रीणयत् । ततः पित्रा वरे दत्ते सोऽवादीत्—"त्वत्प्रसादतो भ्रातृयुक्तो दण्डादिरत्नवान् पृथ्वीं दिदृक्षेऽहं" । ततश्चक्रिणानुज्ञातः ससैन्यः प्रस्थितः अग्रे चतुर्योजनविस्तृतं योजनाष्टकमुन्नतमष्टापदं वीक्ष्य सर्वैः सहोदरैः सह तमारुरोह । तत्र क्रोशद्वयपृथुलं क्रोशत्रयोच्चं योजनायतं चतुर्मुखं रत्नमयं चैत्यं ददर्श । तत्र स्वस्वमानादिशोभिता ऋषभाद्यर्हतां प्रतिमा भरतादीनां शतं स्तूपांश्च ननाम । तच्छैलशोभां विलोक्य सगराङ्गजो जहर्ष । ततोऽमात्यं केनेदं कारितं चैत्यमिति पृष्टवान् । सोऽप्यूचे—"वः पूर्वजेन भरतचक्रिणा कारितम्" । अथ जह्नुः सेवकानाख्यत्—"ईदृशमपरमद्रिं भरते पश्यत यथाऽस्माभिरीदृशं चैत्यं तत्र कार्यते"। ते तु चतुर्दिक्षु प्रेक्ष्य प्रेक्ष्यागत्योचुः—"अन्योऽद्रिरीदृशो नास्ति"। ततो जह्नुर्जगाद—"अस्यैव रक्षां कुर्महे, अग्रे कालानुभावतो जना लुब्धा भाविनः, ते ह्यत्रोपद्रविष्यन्ति, अतोऽस्य रक्षा महाफला" । इत्युक्त्वा जह्नुस्तं गिरिं परितः सहस्रयोजनोद्वेधां परिखां दण्डरत्नेन क्षणाद्विदधे । तदा च तेन दण्डरत्नेन महीं दारयता नागानां क्रीडागेहानि मृत्पात्राणीव पुस्फुटुः । तत् प्रेक्ष्योपद्रवभीता भुजङ्गाः स्वप्रभुं ज्वलनप्रभमुपेत्य सौधभङ्गव्यतिकरं जगुः । सोऽपि क्रुद्ध एत्य सगराङ्गजानूचे—"भो जडाः ! किमेतत्पृथ्वीभेदनं कृतं ? ते नागाः क्रुद्धा हनिष्यन्ति" । जह्नुर्जगौ—"तीर्थरक्षाकृतेऽस्माभिरदः कृतं, हे भोगीन्द्र ! अज्ञानजमेनं मन्तुं क्षमस्व, नैवं पुनरिदं करिष्यामः" । इति श्रुत्वाऽहीन्द्रः स्वभुवनेऽगात् । ततो जह्नुरनुजैः सह दध्यौ—

"असौ परिखा वारि विना पांसुभिः पूरिष्यते तदेनां मन्दाकिनीजलैः पूरयाम"। सर्वैः स्वीकृतम्। ततः स दण्डेनाकृष्य जाह्नवीं तत्र चिक्षेप। भूयोऽपि भोगिगेहास्तदम्भसोपाद्रूयन्त। पुनर्नागलोकं क्षुभितं वीक्ष्य कोपवशाज्ज्वलनप्रभस्तद्वधाय महोरगान् दृष्टिविषान् प्रैषीत्। तैश्च निर्गत्य विषवृष्टिभिर्दृष्टिभिर्दृष्टास्ते सर्वेऽपि सगरात्मजा भस्मतां नेजुः।

ततः सैन्यानिति प्रोचे, सचिवः शोचनैरलम्। नावश्यं भाविनं भाव-मतिक्रामति कोऽपि हि॥ १॥

ततस्तेऽयोध्यामेत्य सामन्ताद्या दध्युः—"स्वामिसुताः सर्वेऽपि दग्धाः, वयमक्षताः, लज्जाकरमिदं राज्ञोऽग्रे कथं कथयिष्यामः"। इति ध्यात्वा नित्यं शोकपरास्तस्थुः। तत्स्वरूपमेकेन द्विजेन पृष्टं, ते तत्सर्वं यथाजातं जगुः। तच्छ्रुत्वा द्विजः प्राह—"अहं नृपाय निवेदयिष्ये"। ततो द्विजः कञ्चिदनाथं शवमुद्वहन् राजकुले गत्वा मुहुरुच्चैर्व्यलापीत्। तच्छ्रुत्वा चक्रिणा पृष्टः—किं रोदिषि? इति। तेनोचे—"ममैक एवासौ सूनुर्महाहिना दष्टो निश्चेष्टतां प्राप्तः, हे देव! एनमधुना जीवय"। भूधवो जाङ्गुलिकं तत्र कर्मणि आदिक्षत्। तदा ज्ञातभूपापत्यमृत्युः कोऽपि नर ऊचे—"यत्र गृहे कोऽपि मृतो न स्यात् तस्मान्मन्दिरात् भस्मानयत यथाऽहमेनं जीवयामि"। इति तेनोदितो भूपः पुर्यां सर्वेषु वेश्मसु भृत्यैर्भस्मामार्गयत। तेऽप्येत्यावदन्—"नाथ! सकला पुरी वीक्षिता, परं पुरा यत्र कोऽपि न मृतस्तद्गृहं नास्ति"। राजाऽप्यूचे—"अस्माकमपि भूयांसः पूर्वजा मृताः, तत्सर्वसाधारणे मृत्यौ हे द्विज! किं खिद्यसे? मृतं पुत्रं किं शोचसि? किञ्चिदात्महितं कुरु, त्वमप्यजरामरो न"। द्विजोऽवदत्—

“एतदहं जानामि, परमद्यैव पुत्रमन्तरा मे कुलक्षयो जायते, तत् हे नाथ! कथञ्चिदमुं जीवयित्वा मे पुत्रभिक्षां देहि”। नृपोऽभ्यधात्—“मन्त्रतन्त्रशास्त्राणामगोचरेऽदृष्टविद्विषि विधौ कः कृती पराक्रमते?। ततः शोकं मुञ्च”। सोऽवक्—“स्वामिन्! सर्ववस्तूनां विरहः सह्यते, कुलोद्योतकपुत्रविरहसहने न कोऽपि क्षमः”। चक्री प्राह—“अनन्तभवेष्वनन्ताः पुत्रा जाताः, स्वयमप्यनन्तशः सुतत्वेनोत्पन्नोऽनन्तकुलेषु, कस्य कुलमुद्योतितं? कस्य न? किं मुधा शोचसि? उक्तं च—

अशरण्यमहो विश्व—मराजकमनायकम्। यदेतदप्रतीकारं, ग्रस्यते यमरक्षसा ॥ १ ॥

योऽपि धर्मप्रतीकारो, न सोऽपि मरणं प्रति। शुभां गतिं ददानस्तु, प्रतिकर्तेति कीर्त्यते ॥ २ ॥”

इत्यादि श्रुत्वा विप्रः प्रोचे—“स्वामिन्! परविडम्बनां दृष्ट्वाऽनेके वैराग्यं वर्णयन्ति, यदि सा स्वात्मनि समेता, तदा चेतनास्थैर्यं न जहाति यः स एव प्रशस्यः”। चक्री प्राह—“मायाविन एव ते ज्ञेया ये स्ववाचं न पालयन्ति”। विप्रः प्राह—“तर्हि हे नृप! तव षष्टिसहस्राणि सुताः सममेव विपन्नाः, त्वमपि शोकं मा कृथाः”। इति श्रुत्वा सहसा संभ्रान्तो यावद्ध्यौ तावत्ते सामन्ताद्याः पूर्वसङ्केतिता आययुः। तैर्यथावृत्ते प्रोक्ते क्षणाद्वज्राहत इव मूर्छितो भूमौ न्यपतत्। कथञ्चिल्लब्धसंज्ञमनेकधा विलपन्तं तं चक्रिणं स विप्रः प्राह—“स्वामिन्! मां निषेध्याधुना स्वयं किं रोदिषि? वियोगः कस्यातिदुःसहो न स्यात्? किं तु तं धीरः सहतेऽर्णवो वडवाग्निमिव, परेषां शिक्षादानं तेषामेव विराजते ये समये आत्मानमपि शिक्षयन्ति” इत्यादिवाक्यैश्चिराद्धीरतामालम्ब्य तेषामौर्ध्वदेहिकीं क्रियां चक्रे।

ततोऽष्टापदासन्नमानवा अभ्येत्य राज्ञे व्यजिज्ञपन्—"हे नाथ ! भवत्सुतैः त्रिस्रोतसः स्रोतः समानिन्ये, तत् परिखां प्रपूर्य ग्रामान् प्लावयन्निवार्यताम्" । ततो जह्नुपुत्रो भगीरथो राज्ञादिष्टस्तत्र गत्वाष्टमं कृत्वा नागराजं संतोष्य तदाज्ञां गृहीत्वा जह्नुजो दण्डरत्नेन तत्प्रवाहं सुपर्वसरितं नीत्वा पूर्वाब्धावुदतारयत् । तदनु गङ्गासागरसङ्गाख्यं तत्तीर्थं पप्रथे ।

गङ्गापि जह्नुनाऽऽनीते–त्युक्ता लोकेन जाह्नवी । भगीरथेन सैवाब्धा–विति भागीरथी तथा ॥ १ ॥

ततो भगीरथोऽयोध्यां महोत्सवैः प्रविवेश । ततश्चक्री शत्रुञ्जयोद्धारं सप्तमं विधायाजितसेनाभ्यर्णे व्रतमादृत्य दुस्तपं तपस्तेपे । क्रमात् केवलज्ञानमवाप्य द्वासप्ततिलक्षपूर्वाण्यायुः समाप्य शिवं ययौ । ततो भगीरथः सर्वज्ञं पप्रच्छ—"हे ज्ञानिन् ! जह्नुप्रमुखाः सर्वे समायुषः किं जज्ञिरे ?" । सर्वदर्शी प्राह—"पुरा महान् सङ्घो जिनान्नन्तुं समेताद्रिं व्रजन् क्वचित्प्रान्तग्रामे ययौ, तदा षष्टिसहस्रमितैरेकेन कुम्भकारेण वार्यमाणैरपि लुब्धैः स सङ्घो मुषितः कथञ्चित् पुरोऽगमत् । तत्प्रत्ययं पापकर्म सर्वैर्निकाचितं बद्धम् । अन्यदा कोऽपि तत्रत्योऽन्यत्र पुरे चौर्यं व्यधात् । ततः पुरारक्षास्तत्पदानुगास्तं ग्राममीयुः । ग्रामद्वाराणि अपावृत्य परितोऽनलमज्वालयन् । स कुलालस्तु तत्राह्नि अन्यग्रामं गतोऽभवत्, तं विना ते सर्वे विपेदिरे । अरण्ये मातृवाहकजीवत्वेन प्रपेदिरे । ते पिण्डीभूय स्थिताः, तत्रागतस्य हस्तिनः पादेन मर्दिता मृत्वा कुयोनिषु चिरं भ्रेमुः । प्राग्भवे स्वल्पं पुण्यं किञ्चित् कृतं, तेन चक्रिणः षष्टि-

सहस्राणि इमे सुता जज्ञिरे । प्राग्भवैस्तस्य बहुभुक्तस्य कर्मणः शेषांशेन एते सममेव मृताः । कुम्भकार-जीवस्तु सुबहून् भवान् भ्रान्त्वाऽत्र भगीरथस्त्वं जातः" ।

इति श्रुत्वा प्रबुद्धः श्राद्धधर्मं प्रपद्य क्रमेण सुगतिं प्रापेति ॥

त्रैलोक्यभीमो यमराक्षसो जगत्, हर्तुं सदा वाञ्छति नाश्ववर्जितम् ।
तद्भीतिवार्यामशरण्यभावनां, भाव्येत वैराग्यपदं सुखप्रदाम् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोविंशे स्तम्भे
त्रयश्चत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४३ ॥

## चतुश्चत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४४ ॥

अथ संसारासारतामाह—

संसारासारतां वीक्ष्य, केचित्सुलभबोधिनः । शीघ्रं गृह्णन्ति साम्यत्वं, श्रीदत्तश्रेष्ठिवद्यथा ॥ १ ॥

स्पष्टः ॥ ज्ञातं चेदम्—मन्दिरपुरे सुरकान्तो नृपः । तस्य मान्यः सोमश्रेष्ठी वसति । सोमश्रीस्तस्य प्रिया । तयोः पुत्रः श्रीदत्तोऽभूत् । अन्यदा सोमश्रेष्ठी सभार्यः वनक्रीडार्थं गतः । सुरकान्तनृपोऽपि तत्रागात् । तेन सोमश्रीर्दृष्टा । ततो जातानुरागेण राज्ञा सा बलात्कारेण स्वान्तःपुरे क्षिप्ता । श्रेष्ठी तु विलक्षः सन् गृहमेत्य प्रकृतिवर्गेभ्यस्तमुदन्तमुक्तवान् । तैरपि राजा बहुधोक्तः परं न मन्यते । ततस्ते श्रेष्ठिनं प्राहुः—

माता यदि विषं दद्यात्, पिता विक्रयते सुतम् । राजा हरति सर्वस्वं, का तत्र प्रतिवेदना (परिदेवना) ॥१॥

तत इभ्यः स्वगृहमेत्य पुत्रं बभाषे—"हे वत्स ! अस्माकं द्रव्यस्य षड् लक्षाः सन्ति, तन्मध्यात्सार्धं पञ्चलक्षं लात्वा कञ्चिद्बलिनं नृपं संसेव्य तद्बलेन त्वन्मातरं वालयिष्ये" । इत्युक्त्वा धनं लात्वा कस्याञ्चिद्दिशि जगाम । श्रीदत्तस्य गृहस्थितस्यान्यदा पुत्रीजन्माभूत् । ततोऽसौ दध्यौ—

मायपियराण विरहो, धन्ननासो अज्ज पुत्तिआजम्म । नरनाहो वि विरुद्धो, दइवो रुट्ठो न किं देइ ॥ १ ॥

ततः पुत्र्या यावद्दश दिनानि जातानि तावता शङ्खदत्तमित्रेण सह श्रीदत्तो व्यापारार्थं प्रवहणेऽचटत् । क्रमात्तौ सिंहलद्वीपं गतौ । तत्र नव वर्षाणि स्थित्वा विशेषलाभार्थिनौ कटाहद्वीपं गतौ । तत्र वर्षद्वयं स्थित्वाऽष्टौ द्रव्यकोटीरुपार्ज्य बहूनि क्रयाणकानि गजाश्वाँश्चादाय स्वस्थानं प्रति चलितौ । अन्यदा प्रवहणाट्टालिकानिविष्टौ समुद्रजले तरन्तीमेकां मञ्जूषां ददृशतुः । ताभ्यामुक्तम्—"एतस्या मध्ये यत् किञ्चिद्भवति तदावाभ्यां विभज्य गृहीतव्यम्" । ततः सेवकैः सा मञ्जूषा निष्कास्योद्घाटिता । तन्मध्ये निम्बपत्रभारिता किञ्चिन्नीलाङ्गी अचेतनैका कन्या दृष्टा । किमिदमिति सर्वेऽपि प्रोचुः । ततः शङ्खदत्तेनोक्तम्—"नूनमेषा बाला सर्पदष्टा मृतेति विज्ञाय केनापि प्रवाहिता, अहमेतां जीवयिष्यामि" । इत्युक्त्वा मन्त्रितजलेनाछोट्य सचेतना कृता । ततः खानपानस्नानाभ्यङ्गनादिभिः सर्वाङ्गसुभगा जाता । ततः शङ्खदत्तेनोक्तं—"मयैषा जीविता ततोऽहमेनां स्वीकरिष्ये" । श्रीदत्तेनोक्तं—"मैवं वादीः,

मयाऽर्धं स्वकीयं कथितमस्ति, ततस्त्वं मत्पार्श्वान्मूल्यार्धं द्रव्यं गृहाण, अहमेतां स्वीकरिष्ये, त्वं त्वस्या जीवितदानात् पितृस्थानीयः"। इत्यादिविवादं चक्रतुः। उक्तं हि—

हा नार्यो निर्मिताः केन, सिद्धिस्वर्गार्गलाः खलु। यत्र संस्खलन्ति ते मूढाः, सुरा अपि नरा अपि ॥१॥

ततो निर्यामिकैरुक्तम्—"भो भो दिनद्वयेनैतत्प्रवहणं सुवर्णकूलं प्राप्स्यति, तत्राप्तपुरुषा विवादं निराकरिष्यन्ति, तावत्कलहो न कार्यः"। इति श्रुत्वा स्थितौ। ततः श्रीदत्तो दध्यौ—"नूनमेषा लोकै-र्जीवितप्रदत्वादस्यैव दापयिष्यते, ततोऽहमधुनैव ग्रहणोपायं कुर्वे"। इति विचिन्त्याट्टालके निविष्टो बभाषे—"हे मित्र ! त्वं शीघ्रमागच्छ, महत्कौतुकं, द्विमुखो मत्स्यः प्रवहणाधो याति"। इति श्रुत्वा यावत्स विलोकयति तावत्तेन सागरान्तर्निपातितः, लोकप्रत्ययार्थं च मिथ्यापूत्कारं कृतवान्। ततः प्रवहणानि कुशलेन सुवर्णकूलं प्रापुः। श्रीदत्तः कन्यायुतस्तत्र पुरे स्थितः। ततो राजाग्रे गत्वोपायनं कृतवान्। राज्ञा बहुमानं दत्तम्। ततः कन्यापाणिग्रहणमुहूर्त्तं गवेषयन्नस्ति। नित्यं राजसभायां गच्छति। अन्यदा राज्ञश्च-मरवीजिका दृष्टा। तत्सौन्दर्याकृष्टेन पृष्टं तत्स्वरूपं केनाप्युक्तम्—"एषा सुवर्णरेखा वेश्या, एकवारमप्येतया सह वार्तां कर्तुं स लभते योऽस्याः पञ्चाशत्सहस्राणि द्रव्यं ददाति"। श्रीदत्तेनार्धलक्षं धनं दत्त्वाऽऽ-कारिता सा। ततो वेश्यां कन्यां च रथे निवेश्य वने क्रीडार्थं ययौ। तावदेको वानरो वानरीभिः क्रीडँ-स्तत्रागात्। तं दृष्ट्वा श्रीदत्तेनोक्तम्—

धिग् जन्म पशुजन्तूनां, यत्र नास्ति विवेकिता। कृत्याकृत्यविभागेन, विना जन्म निरर्थकम् ॥ १ ॥

अहो ! एतेषां मातृपितृभगिन्यादिविवेकविकलानां किं जन्म ?" इति श्रुत्वा दन्तान् घर्षयित्वा कपिः रोषं कृत्वाऽऽह—"रे रे दुराचार ! ज्वलन्तं पर्वतं पश्यसि, परं पादयोरधो ज्वलनं न पश्यसि ।

राइसरसवमित्ताणि, परछिद्दाणि पाससि । अप्पणो बिल्लमित्ताणि, पासंतो वि न पाससि ॥ १ ॥

रे रे अधमाधम ! मित्रं समुद्रे प्रक्षिप्येदानीं भोगार्थं मातरं पुत्रीं च पार्श्वे निधाय निन्दां कर्तुमुद्यतोऽसि" । इति निर्भर्त्स्योत्प्लुत्य स्वयूथे गतः । श्रीदत्तो दध्यौ—"एषा वेश्या कथं मम माता स्यात् ? कन्या च मम सुता कथं ? समुद्रागतत्वात् । मन्माता तु किञ्चिच्छ्यामला उच्चतनुश्च एषा तु गौराङ्गी ह्रस्वतनुश्च" । साऽपि पृष्टा सती प्राह—"भोः कस्त्वामुपलक्षयति ? पशुवचसा किं विभ्रमे पतितोऽसि ? तथापि स शङ्काकुलः कपिमितस्ततो यावदन्वेषयति तावत्तत्र मुनिमेकं ददर्श । तं नत्वा स्वाकूतं पप्रच्छ । मुनिः प्राह—"अहमवधिना वेद्मि अतो यद्वानरेणोक्तं तत्तथैव ज्ञेयम् । यतः शृणु पूर्वं सुताया उदन्तम्—

त्वं तु दशदिनजातकां पुत्रीं मुक्त्वा प्रवहणे चटितः, ततः परं तत्र पुरे परचक्रभयमुत्पन्नं, तदा त्वद्भार्या सुतामादाय गङ्गातटस्थे सिंहपुरे स्वबन्धुसमीपे गता तत्रैकादश वर्षाणि गतानि । अन्येद्युः सा बाला व्यालेन दष्टा, जनन्या मातुलैश्चोपायाः कृताः, परं विषं न वलितं, ततो मृतेति ज्ञात्वा मात्रा स्नेहवशान्मञ्जूषायां क्षिप्त्वा गङ्गायां प्रवाहिता, सा त्वया लब्धा मञ्जूषा, सेयं तव सुता ।

अथ शृणु तव मातृस्वरूपं—सुरकान्तभूकान्तेन त्वन्माता स्वान्तःपुरे क्षिप्ता, तद्ग्रहणार्थं त्वत्पित्रा सार्धं पञ्चलक्षद्रव्यं लात्वा प्रच्छन्नं गत्वा समरपल्लीपतिः सेवितः । तेनोत्कटसैन्येनागत्य

पुरं भग्नं, सुरकान्तो नष्टः। एतत्समये त्वत्पितरमग्रे भूत्वा प्रविशन्तं ललाटे बाणो लग्नो मृतश्च तत्रैव. यतः—

अन्यथा चिन्तितं कार्यं, दैवेन कृतमन्यथा। वर्षन्ति जलदाः शैले, जलमन्यत्र गच्छति ॥ १ ॥

अन्यथा चिन्तितं कार्यं, दैवेन कृतमन्यथा। प्रियाकृते हि प्रारम्भः, स्वात्मघाताय सोऽभवत् ॥२॥

त्वन्मातापि केषाञ्चित् भिल्लानां हस्ते गता। मार्गे तेभ्योऽपि नष्टा। वने भ्रमन्त्या तया कस्यचित्तरोः फलं भक्षितं तेन देहे ह्रस्वत्वं किञ्चिद्गौरत्वं च जातम्, यतः—अचिन्त्यो मणिमन्त्रौषधीनां प्रभावः। सा तत्र देशान्तरं गच्छद्भिः कैश्चिद्वणिग्भिर्दृष्टा। वनदेवाङ्गनां ज्ञात्वा भ्रान्त्या स्वरूपं पृष्टा सा प्राह—"अहं मानुषी अस्मि"। ततस्तां गृहीत्वा सुवर्णकूले विक्रीता। सुरूपत्वाद्विभ्रमवत्या वेश्यया लक्षद्रव्येण गृहीता। नाट्यादिकं शिक्षयित्वा सुवर्णरेखेति नाम कृतम्। क्रमाद्राज्ञश्चामरधारिणी जाता। सेयं सुवर्णरेखा त्वन्माता। अनया त्वमुपलक्षितः, तथापि लज्जया लोभेन च न स्वात्मा प्रकटीकृतः"।

इति श्रुत्वा श्रीदत्त आह—"स्वामिन्! युक्तमिदं, परं वानरः कथमिदं जानाति?"। मुनिरूचे—"तव पिता सोमश्रीध्यानेन मृत्वा व्यन्तरो जातः, स भ्रमन्नत्र त्वां सोमश्रियं च दृष्ट्वा कपिदेहेऽवतीर्य त्वामनर्थकरणतत्परं न्यवर्तयत्"। श्रीदत्तो दध्यौ—"अहो कर्मणां विषमा गतिः"। पुनर्मुनिराह—"अयं व्यन्तरः पूर्वमोहात्स्वां स्त्रियं गृहीत्वा यास्यति"। तावत्स एव वानरस्तामुत्पाट्य वनान्तरं गतः। श्रीदत्तस्तु शिरो धुन्वन्मुनिं नत्वा पुत्र्या सह स्वस्थानं गतः। तावता वृद्धवेश्यया दास्यः पृष्टाः—"क्व सुवर्णरेखेति"। ताभिरूचे—"अर्धलक्षसुवर्णदानेन श्रीदत्तवणिजा वनान्तर्नीतास्ति"। तयोक्तम्—"साऽद्य-

यताम्" । ततो दासीनिरागत्य हट्टे निविष्टः श्रीदत्तः पृष्टः—"क्वास्माकं स्वामिनी ?" । तेनोक्तं—'नाहं जाने' । ततो वृद्धवेश्यया राजाग्रे पूत्कृतं—"हा हा प्रभो ! मुषिताऽस्मि, सुवर्णरेखा श्रीदत्तेन क्वापि गोपिता" । राज्ञा तदैवाकार्य स पृष्टः । स त्वसङ्गतमेतत्केनापि न मन्यते इति विचिन्त्य किमपि नाचख्यौ । ततो राज्ञा कारागारे क्षिप्तः, पुत्री च स्वगृहे दासी भविष्यतीति रक्षिता । अथ तत्रस्थेन तेन चिन्तितं—"सत्यकथनेनैव कथञ्चिन्मे मोक्षः स्यात्" । इति ध्यात्वाऽऽरक्षकमुखेन नृपं व्यजिज्ञपत्—'स्वामिन् ! सत्यं वदामि' । ततो भूपेनाकारितः सभायामेत्य कपिस्वरूपं प्रोक्तवान् । सर्वोऽपि जनो जहास—"अहो ! कीदृशं सत्यमुक्तं ? यतः—

असंभाव्यं न वक्तव्यं, प्रत्यक्षं यदि दृश्यते । यथा वानरगीतानि, तथा तरति सा शिला ॥ १ ॥

इतिन्यायात्" । 'अयमद्यापि सत्यं न वदति' इति रुष्टेन राज्ञा मारणार्थमादिष्टो दध्यौ—"कृतं कर्मोदयागतं किं खेदेन ?" । तावता वनपेन राजा विज्ञप्तः—"प्रभो ! मुनिचन्द्रकेवलिनः पुरोद्यान आजग्मुः" । राजा सपरिकरस्तं गुरुं नत्वा देशनां ययाचे । केवली प्राह—"हे नृप ! सत्यवादिनः श्रीदत्तस्य हननं त्वयाऽऽदिष्टं तत्तव शुश्रूषाभिलाषुकस्य नार्हम्" । ततो लज्जितस्तमाकार्य स्वपार्श्वे निवेश्य यावत्तस्य स्वरूपं पृच्छति तावता स वानरः स्वर्णरेखां पृष्ठे कृत्वा एत्य तामुत्तार्य सभायां निविष्टः । सर्वेऽपि विस्मिताः तं श्रीदत्तं प्रशशंसुः । ततः श्रीदत्तेन पृष्टं—"स्वामिन् ! कुतो मम मातृ सुतयोर्विपयाभिलाषादि बभूव ?" । मुनिराह—"पूर्वभवसंबन्धात्, श्रूयताम्—

काम्पिल्यपुरे चैत्राभिधो द्विजोऽभूत्, तस्य गौरी गङ्गा चेति द्वे प्रिये अभूतां, सोऽन्यदा मैत्रेण नाम्ना स्वमित्रेण सह यात्रार्थं कुंकणदेशे गतः। ताभ्यां तत्र बहु धनमार्जितम्। अन्यदा चैत्रं सुप्तं वीक्ष्य मैत्रेण चिन्तितम्—"एनं हत्वा सर्वं धनं गृह्णामि"। पुनः क्षणान्तरात् "धिग्मां विश्वस्तघातिनम्" इति ध्यात्वा तथैव स्थितः। पुनस्तौ लोभेन भ्रमन्तौ वनान्तः प्रविष्टौ, तत्राज्ञातपूर्ववैतरणीजले निमग्नौ मृत्वाऽनेकभवान् भ्रान्त्वा चैत्रजीवस्त्वं जातः मैत्रजीवस्तु शङ्खदत्तः। तेन पूर्वं त्वन्मारणं ध्यातं तत्कर्मणा त्वयाऽसावम्बुधौ क्षिप्तः। चैत्रस्त्रियौ गौरीगङ्गानाम्न्यौ भर्तृवियोगाद्विरक्तचित्ते तापस्यौ जाते। एकदा गौरी गाढं तृषाकुला स्वसेवाकारिणीं प्रति जलं ययाचे, सा च निद्रालुरालस्यवशाद्यावदुत्तरं नादात्तदा क्रोधवशात्तयोक्तं—'रे रे! कृष्णसर्पेण किं दष्टाऽसि? यन्मृतेवोत्तरं न ददासि'। तदा तया दुष्कर्म बद्धं। गङ्गाऽप्येकदा कस्मैचित्कार्याय प्रेषितां कर्मकरीं प्रति 'रे रे! केनापि इयन्तं कालं बन्दीकृताऽभूः?' इत्यादिना दुष्कर्मार्जितवती। पुनरेकदा काञ्चिद्गणिकां बहुभिः कामुकैः सह विलसन्तीं वीक्ष्य दध्यौ–'धन्येयं कुसुमलतेव बहुभिः षट्पदैरिव कामुकैर्वेष्टिताऽस्ति, अहं तु मन्दभाग्या, यस्याः पतिरपि मुक्त्वा दूरं गतः' इत्यादिना दुष्कर्मोपार्जितवती। ततो मृत्वा द्वे अपि ज्योतिष्कदेव्यावभूतां। ततश्च्युत्वा गौरीजीवः पुत्रीत्वेन गङ्गाजीवश्च मातृत्वेन जातः। प्राक्तनपत्नीसंबन्धात्तवाप्येतयोर्विषये कामरागोऽभूत्"।

इति संसारस्वरूपं श्रुत्वा प्राप्तवैराग्यः श्रीदत्तः प्राह–"पूज्य! मम पापिनो मित्रमीलनं भावि न वा?"।

ज्ञानिनोक्तं—"मा विषीद, क्षणान्तरात्स एष्यति"। एवं वार्तां कुर्वत एव शङ्खदत्तः समागात्, श्रीदत्तं वीक्ष्य क्रोधारुणनेत्रं तं गुरुराह—"भो भद्र! कोपं मा कार्षीः, यतः—

लग्गइ कोहपलीवण, रुज्झइ गुणरयणाइं। उवसमरसि नउ उंलवे, सहेति दुक्खसयाइं ॥ १ ॥
कोह पविठ्ठो देहघर, तिन्नि विकार करेइ। अप्पउ तावे पर तवे, पर तह (नेह) हानि करेइ ॥ २ ॥"

इति श्रुत्वा किञ्चित् शान्तचित्तो जातः। श्रीदत्तेनाभ्युत्थाय स्वपार्श्वे निवेश्य केवलिनं पृष्टं—'कुतोऽयमागतः?'। स प्राह—'समुद्रमध्ये फलकमेकं प्राप्य तरन् सप्तभिर्दिनैः सारस्वततटनगरं प्राप्तः। तत्रास्य मातुलो मिलितः, तेन स्वस्थीकृतोऽसौ। स्वर्णकुलस्वरूपे पृष्टे मातुलेनोक्तम्—"इतो विंशतियोजनानि तत्पुरं, तत्र गजैर्भृतानि प्रवहणान्यागतानि श्रूयन्ते"। इत्याकर्ण्य मातुलमापृच्छ्यात्रागतः, त्वां दृष्ट्वा रोषपरो जातः"। पुनः केवली पूर्वभवं कथयित्वा शङ्खं प्रत्यबोधयत्। इत्यादिदेशनां श्रुत्वा राजा द्वादश व्रतानि जग्राह। श्रीदत्तोऽपि शङ्खदत्तेन सह स्वस्थाने गत्वा द्रव्यार्धं स्वपुत्रीं च तस्मै ददौ। स्वयं तु जिनभवनबिम्बप्रतिष्ठाज्ञानभक्तिप्रभृतिसप्तक्षेत्रेषु वित्तबीजमुप्त्वा महामहपूर्वकं केवलिपार्श्वे दीक्षां जग्राह। क्रमेण केवलज्ञानं मोक्षं च प्रापेति ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोविंशे स्तम्भे चतुश्चत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४४

## पञ्चचत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४५ ॥

अथ हुताशिनीपर्वाह—

पर्व हुताशिनीसंज्ञं, लौकिकं पापरूपकम् । हेयं लोकोत्तरधर्मज्ञै—र्भवसंततिवर्धकम् ॥ १ ॥

स्पष्टः । अत्रार्थसमर्थनार्थं हुताशिनीसंबन्धोऽयम्—

अत्र भरते जयपुरं नाम नगरम् । यत्र—

छत्रेषु दण्डश्चिकुरेषु बन्धः, शारीषु मारिश्च मदो गजेषु ।
हारेषु वै छिद्रविलोकनानि, कन्याविवाहे करपीडनं च ॥ १ ॥

तत्र विदग्धजना वसन्ति स्म । यतः—

नयरं न होइ अट्टालएहिं पासायतुंगसिहरेहिं । गामं पि होइ नयरं, जह वियड्ढो जणो वसइ ॥ १ ॥

तत्र पुरे न कोऽपि मार्गणो दृश्यते, यदि कोऽपि वीक्ष्यते स प्रतिबोधार्थं भ्रमति । यतः—

द्वारं द्वारमटन्तो हि, भिक्षुकाः पात्रपाणयः । कथयन्त्येव लोकाना—मदत्तफलमीदृशम् ॥ १ ॥

तत्र पुरे जयवर्मा नाम नृपः । तत्र तस्य माननीयः मनोरथश्रेष्ठी वसति स्म । श्रेष्ठिप्रिया लक्ष्मी-नामाऽस्ति । यतः—

संसारे श्रान्तदेहस्य, तिस्रो विश्रामभूमयः । अपत्यं च कलत्रं च, सतां सङ्गतिरेव च ॥ १ ॥

तस्य श्रेष्ठिनश्चत्वारः पुत्राः सन्ति । तेषामुपरि अनेकदेवार्चाभिरभ्यर्थिता होलिकाह्वा कन्या जाता । सा यौवनं गताऽनुरूपेभ्यपुत्रेण सह विवाहिता । स्वामी अकृतसंयोग एव विसूचिकया मृतः । प्राग्भवेऽनाराधितजिनाज्ञातः सा बालैव विधवाऽभूत्, पित्रोर्महादुःखं प्रसृतं, यतः—

पुत्रश्च मूर्खो विधवा च कन्या, शठं च मित्रं चपलं कलत्रम् ।
विलासकाले धनहीनता च, विनाऽग्निना पञ्च दहन्ति कायम् ॥ १ ॥
कुरंकुरंकत्तण दोहगाइ, विंकत्त निंदू विसकन्नगाइ ।
जम्मंतरे खंकियवंजधम्मा, नाऊण कुज्जा दढसीलजावं ॥ २ ॥

ततः पितृभ्यां सा होली निजगृह एवानीता । सा गृहाट्टालिकायां स्थिता मदोन्मत्ता कामव्यथार्दिता तिष्ठति, यतः—

बालरण्डा तपस्वी च, कीलबद्धश्च घोटकः । अन्तःपुरगता नारी, नित्यं ध्यायन्ति मैथुनम् ॥ १ ॥
नर सासरे स्त्री पीहरे, यति कुसंगतवास । नदीतीरे तरु माल कहे, यदि तदि होय विणास ॥ २ ॥

श्रुतेऽपि—

सीसा य जे संजमजोगजुत्ता, पुत्ता य जे गेहभरे नियुत्ता ।
वियारबुद्धी कुलबालिया य, होऊण तेसिं जवसंतिमेइ ॥ १ ॥

एवं शिष्यं पुत्रं कुलवधूं च निजनिजकार्येषु सालम्बना रक्षितव्याः । सा निरालम्बना कथं न काम विकारे प्रवर्तते । यतः—

यौवनं धनसंपत्तिः, प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय, किमु यत्र चतुष्टयम् ॥ १ ॥

अन्यदा सा होली गवाक्षस्था वङ्गदेशनृपस्य सुतं कामपालाख्यं लीलया तुरगारूढं गच्छन्तं वीक्ष्य कामबाणकटाक्षनिक्षेपं चकार । कामपालोऽपि तद्रूपमोहितः पुनः पुनरपश्यत् । यतः—

दिट्ठी दिट्ठिप्पसरो, पसरेण रई रईइ सब्भावो । सब्भावेण य नेहो, पंच य बाणा अणंगस्स ॥ १ ॥

द्वावपि परस्परं ध्यायतः, क्षणमप्यशनवसनादिषु रतिं न प्रापतुः । यतः—

नेह म करजो कोइ, गोरस नित नित इम जाणे । नेह पसाइओ य, जिम दहिंयक्षो विलोक्षिजे ॥ १ ॥

आइ फिरो सहु कोइ, अणगमतो आठे पहर । जो मन विसम्यो होइ, सो मुझ किमे न वीसरे ॥ २ ॥

एकदा पित्रा पृष्टा—"पुत्रि ! किं त्वं दुःखिता म्लानास्याऽतिकृशा दृश्यसे ?" । सा पितरं न किञ्चि-दुत्तरं ददौ । पित्रा ध्यातम्—"एषा वराकी बालविधवा किं जल्पति ? पूर्वकर्मोदयेन महादुःखिनी जाता । यतः—

यथा धेनुसहस्रेषु, वत्सो विन्दति मातरम् । तथा पुरा कृतं कर्म, कर्तारमनुगच्छति ॥ १ ॥

तथाप्यस्याः पठनाद्यालम्बनं कारयामि, येन दिनान्निर्गमयति । अथ तत्र पुरे चन्द्ररुद्रो विप्रः ज्ञ्यलोभेन ज्ञाणरुचेष्टां कुर्वन् ज्ञाणक्षो जातः । तस्य ढुंढा नाम दारिका । सा यौवनवत्यपि न केनापि

विप्रेण परिणीता, ततश्चन्द्ररुद्रेण अचलजूतिनाएरूस्य परिणायिता, मिलितः सदृशो योगः । यतः—

जूयारियस्स धूया, परिणीया गंठिगोरूपुत्तेण । जुरूियं विवाह जुगं मिलियं रयणायरे रयणं ॥ १ ॥

उष्ट्राणां च विवाहेषु, रासन्नास्तत्र गायनाः । परस्परं प्रशंसन्ति, अहो रूपमहो ध्वनिः ॥ २ ॥

सा पुनः ढुंढा परिणयनानन्तरमेवोजयकुलस्य पितुः पत्युश्च क्षयंकरी जाता । उदरजरणार्थं परि- व्राजिकावेषेण कार्मणमारणोच्चाटनादिकर्मणा जीवति । एकदा जिक्षार्थं भ्रमन्ती मनोरथश्रेष्ठिगृहे समागता, श्रेष्ठिना प्रदत्तासने निविष्टा, कुशलं पृष्टा धर्माक्षराएयुच्चचारेति, यतः—

काला कुशल किं पूछीइं, नितु उग्गंते नाण । जरा आवे जोव्रण खिसें, हाणी त्रिहाण विहाण ॥ १ ॥

काया पाटण हंस राजा, पवणु फिरे तलारो । तिण पाटण वसे जोगी, जाणे जोग विचारो ॥ २ ॥

एक खोलरूि पंचाहिं जण रुंधी, तिन्ह सगलहि जूजूइ बुद्धि ।

कह नाउ सा घरुं किम नंदे, जह्न कुटुंबउ अप्पण छिंदइ ॥ ३ ॥

जर कुत्तो जोव्रण ससा, काल आहेरूी मित्त ।

त्रिहु वयरि विच रूंपरूा, कुशल किं पूछे मित्त ॥ ४ ॥”

इत्यादिवाक्यानि श्रुत्वा श्रेष्ठी दध्यौ—“अहो ! वैराग्यरङ्गो यौवनेऽपि विस्मयकरोऽस्याः । यतः—

धातुषु क्षीयमाणेषु, शमः कस्य न जायते ।

प्रथमे(पुरा)वयसि यः साधुः, स साधुरिति मे मतिः ॥ १ ॥”

ततः श्रेष्ठिना सा विज्ञप्ता—"हे स्वामिनि ! मम पुत्रीं बालविधवां त्वं पाठय येन वैराग्यं स्यात्। यतः—

जे जारिसेण संगं करेइ, अचिरेण सो तारिसो होइ ।
कुसुमेहिं सह वसंता, तिला वि सुगंधया हुंति ॥ १ ॥

चंदणवणसंगेणं, अन्ने तरुणा वि चंदणा हुंति । इक्कं वंसं मुत्तुं, जा सो हियए वहइ गंठिं ॥ २ ॥"

तयोक्तं—"गृहिणां सङ्गस्तपस्विनां न गुणावहः । यतः—

द्वाविमौ पुरुषौ लोके, शिरःशूलकरौ परौ । गृहस्थश्च निरालम्बी, सालम्बी च यतिर्भवेत् ॥ १ ॥"

दम्भिनां नकारो गुणकर एव । यतः—

मनमांहि भावे मुंह हलावे, न न कही कही लोक सुणावे ।
मनकी वात कवहु को जाणे, कपट चिन्ह ए माल वखाणे ॥ १ ॥

ततो ढुंढया निजाभिप्रायो ज्ञापितः—

किं कीजे कृपण तणे, ऊंचो धवलहरेहि । वर पन्नालो कुंपओ, पहिय विलंबे जेहि ॥ १ ॥

ततो ढुंढां होलीसमीपे नीत्वा पुत्रीं स्माह—"एषा तव गुरुणी, एतत्पार्श्वे त्वं पठ, सेवां कुरु" । तदनु तया सह तिष्ठति, परं कामपालसङ्गस्पृहान्विता न पठति । यतः—

यस्य न सहजो बोधः, पुरतः किं तस्य जल्पितैर्बहुभिः ।
नलिकाधृतमिव सततं, न भवति सरलं शुनः पुच्छं ॥ १ ॥

अन्यदा ढुंढया पृष्टं—"हे वत्से ! त्वं सदोद्विग्ना केन दुःखेन दृश्यसे ?" इत्येवं पृष्टा सा होली स्वाकूतं सर्वमज्ञापयत् । जरटिकया जणितं—"न मनागप्युद्वेगं कुरु, अचिरेण तव कार्यं विधास्यामि" । ततः कामपालमन्दिरे गत्वा तपस्विनी तं प्राह—"जवद्विरहार्दिता सा होली त्वच्चित्तपरा मरिष्यति यदि तव सङ्गो न जविष्यति" । स प्राह—"द्वयोर्मेलापः क्व स्थले जायते ?" । साऽऽह—"सूर्यचैत्ये त्वया समागन्तव्यं, सापि तत्र समेष्यति" । इति श्रुत्वा स हृष्टः, न पुनरेतत्ख्यातं, यतः—

परतिय साथे खेम, मूरख मूल निवारिई । केतीवारे खेम, सुतां सापह साथरें ॥ १ ॥
दश्री लंक सतोरणी, वन हुआ मसिवन्न । महिलापराइ जोगमे, तसु सिर नहि कन्न ॥ २ ॥

ततः कामपालो निजकामसाधनार्थं तां संमान्य विससर्ज, यतः—

सत्त सायरम्मि फिर्यां, जंबूदीव पइठ । कारण विणु जो नेहलो, सो में कहिं न दिठ ॥ १ ॥

ततो ढुंढया होलीसमीपे एत्य सर्वं गदितं । अथ प्रजाते रविपूजासामग्रीं सर्वां गृहीत्वा गुरुएया सह रविमठे गता । सोऽपि तत्रागात् । बहुदिनपीडितेन सा गाढमालिङ्गिता । ततः सा हुताशिनी लघुगृहिणी मनसा किञ्चिद्विचार्य पूत्कारं चकार—"धावत धावत जो जनाः, गृह्णीत गृह्णीतामुं परस्त्रीशीललोपकं पुरुषं" । यतः—

नामृतं न विषं किञ्चि—देकां मुक्त्वा नितम्बिनीम् । सैवामृतलता रक्ता, विरक्ता विषवल्लरी ॥ १ ॥

अत्रान्तरे तस्या जनकः समेतः, तेन कामपालो दृष्टः पृष्टश्च—"केन हेतुना त्वं परस्त्रीकण्ठे विलग्नः ?"। सोऽपि महाधूर्तस्तं प्राह—"मम प्राणप्रिया तव पुत्रीसदृशरूपाऽस्ति, मया ज्ञातमसौ मम युवतिरेव, तेन हेतुना परिरब्धा"। इत्युक्त्वा गतः कामपालः। होली पुनः पितरावव्रदत्—"अहो ! सतीजनप्रधानस्य मम दोषो लग्नः, यत्परनरस्पर्शो मदीयदेहे जातः, अतोऽहमग्निं प्रविशामि, अधन्ये जन्मजीविते, अत्रैव रविचैत्यसमीपे देहं भस्मसाद्विधास्यामि"। यतः—

रोयंति रुयावंति य, अलियं जंपंति पत्तियावंति। कवडेण खयंति विसं, मरंति नवि दिंति सब्भावं ॥ १ ॥

ततः पितृभ्यां सा शिक्षिता—"किं गाढमाग्रहं करोषि ? तेनाज्ञानतया भ्रान्त्या कण्ठे लग्नासि, नात्र दोषः निर्विकारमनसां। यतः—

गृह्णाति दन्तैः शिशुमाखुमोतुः, पद्मं च वंशं दशति द्विरेफः।
भार्यां सुतां श्लिष्यति वै मनुष्य—स्तत्रापि नित्यं मनसः प्रमाणम् ॥ १ ॥"

एवं शिक्षां दत्त्वा कथमपि गृहं नीता, विश्वे सतीत्वेन विख्याता। तदनु स्वेच्छया गोसे उत्सूरे वा रविचैत्ये व्रजति ढुंढां वञ्चयित्वैव। यतः—

यात्रा जागरदूरवारिभरणं मातुर्गृहेऽवस्थितिः, वस्त्रार्थं रजकोपसर्पणमपि स्याच्चर्चिकामेलनम्।
स्थानभ्रंशसखीनिवासगमनं भर्तुः प्रवासादिका, व्यापाराः खलु शीलखण्डनकराः प्रायः सतीनामपि ॥१॥

अथान्यदा फाल्गुनपूर्णिमा रात्रौ रविमठे होली समागता, ढुंढया कामपालोऽपि तत्राकारितः । द्वावपि तत्र सुखं स्थितवन्तौ । ढुंढा पुनश्चैत्यपार्श्वे तृणकुटीरे सुप्ता । तत्समये द्वाभ्यामपि ध्यातं—"आवयोः कार्यसिद्धिर्जाता, असौ ढुंढा मर्मज्ञा कदाचिदपि दुःखदा स्यात्, अतो मारणीया । यतः—

उपाध्यायश्च वैद्यश्च, नर्तक्यश्च परस्त्रियः । सूतिका दूतिका चैव, सिद्धे कार्ये तृणोपमाः ॥ १ ॥
मन्त्रबीजमिदं पक्कं, रक्षणीयं यथा तथा । मनागपि न भिद्येत, तद्भिन्नं न प्ररोहति ॥ २ ॥
सुगुप्तस्यापि दम्भस्य ब्रह्माप्यन्तं न गच्छति । कौलिको विष्णुरूपेण राजकन्यां निषेवते ॥ ३ ॥

ततो होल्या काष्ठानि संमिल्य नरकरङ्कमेकं तत्र प्रक्षिप्याग्निः प्रज्वालितः, ततो द्वावपि प्रणष्टौ । यतः—

मारइ पियभत्तारं, हणइ सुअं तह पणासए अत्थं । नियगेहं पि पलीवइ, नारी रागाउरा पावा ॥ १ ॥

प्रभाते लोकाः परस्परं भणन्ति—"हा ! किमेतज्जातं ?" । तदा भद्रमनोरथश्रेष्ठी स्वगृहे होलीं पुत्रीं परिव्राजिकां चापश्यन् खेदपरः प्राह—"नूनमेकस्यां चितायां द्वे अपि अत्र मृते, पूर्वं महाप्रयत्नेन मया ज्वलनप्रवेशनं निषिद्धं, परं स्वपापनिवारणार्थं सतीत्वं नव्यं कृतं । तपस्विन्यपि तदनुरागतो दग्धा, अहो ! अस्या होलिकासत्याः भस्माङ्गविलेपनात् दुःखानि नश्यन्ति" । ततो लोका भस्मराशिं वन्दन्ते, मस्तके क्षिपन्ति । ततः पश्चात् फाल्गुनपूर्णिमादिने तत्र स्थले लोका इन्धनछगणादिपुञ्जं विधाय हुताशिनीं प्रकटीकुर्वन्ति, सर्वत्र होलीपर्व विख्यातं जातम् ।

अथान्यदा कामपालः स्त्रियं प्राह—"द्रव्यं विना चिन्तितं न सिध्यति, अतोऽहं विदेशं गच्छामि" ।

तदाकर्ण्य होली प्राह—"हे प्रिय! त्वदर्थं मया जातिकुलादिकं त्यक्तं, त्वद्विरहः क्षणमपि न सहेऽहम्"। तेन सत्यमिति वाक्यं मानितं। यतः—

लीलावतीनां सहजा विलासाः, त एव मूढस्य हृदि स्फुरन्ति।
रागो नलिन्याः सहजोऽङ्गजातः, तत्र भ्रमत्येव मुधा षडंघ्रिः ॥ १ ॥

पुनर्होली आह—"दृष्टं सर्वं स्थानं, परं मज्जनकगृहं विना नान्यत्र कुत्रापि धनलाभो दृश्यते"। स प्राह—"तत्र कथं गम्यते? महाकार्यं विधाय निर्गतावावां"। सा आह—"ईदृशीं दम्भरचनां रचयिष्यामि, येन पित्रादिजनः सानुकूलः स्यात्। आवयोर्निर्गमनानन्तरं तत्र लोकानां महापूज्यं मान्यं होलिकामहासतीपर्व जातम्, अतस्तत्रैव गमनं योग्यम्"। अथ द्वावपि जयपुरासन्नप्रदेशे समागतौ। तदा होली उपपतिं प्राह—"गत्वा त्वं मज्जनकहट्टे श्रेष्ठिनं कथय हे श्रेष्ठिन्! मदीयस्त्रीयोग्यां मूल्येनैकां शाटिकां प्रयच्छ"। तदाकर्ण्य कामपालो मूल्येन श्रेष्ठिपार्श्वे शाटिकां गृहीत्वा तस्यै ददौ। सा प्राह—"किमनया? अन्यां स्वच्छां गत्वा मार्गय"। पुनः स गतः, अन्यां लात्वाऽदर्शयत्। सापि पुनः पश्चात् तया प्रेषिता। तदा श्रेष्ठिना प्रोक्तं—"किं भूयो भूयो गमनागमनं करोषि? तव स्त्रियमत्रानय, येन स्वयं शाटिकां गृह्णाति"। एतद्वाक्यं कामपालेन प्रियायै ज्ञापितम्। तदाकर्ण्य होली शीघ्रं तत्रागात्। हट्टे स्थित्वा साऽन्यामन्यां शाटिकां यावद्विलोकयति तावत्पुनः पुनः श्रेष्ठी होलीमनिमेषदृष्ट्या पश्यति। तदा कामपालेनोक्तं—"हे श्रेष्ठिन्! त्वं सज्जनोऽसि, किं परवनिताभिमुखं निरीक्षसे?" श्रेष्ठी प्राह—

"नाहं कामविकारेण विलोकयामि, किं तु मत्पुत्रीसदृशं रूपं लावण्यं च वीक्ष्य चिन्तयामि किमियं सैव पुनर्मानुषरूपेण समेता? परं सा त्वग्नौ प्रविश्य सती देव्यभूत्"। ततः कामपालेनोक्तं—"अस्या अपि होलीति नाम, परमसौ तु मत्पत्नी, एवं पुरा सूर्यचैत्ये तव दारिकां दृष्ट्वा मद्भार्याभ्रमेण कण्ठे आलिङ्गिता मया, अधुना तवापि मद्भार्यायां स्वपुत्रीभ्रम उत्पन्नः, परं समानरूपाः सदृशवयसो बहवो नरा नार्यश्च भवन्ति, नात्र तव दोषः"। ततः श्रेष्ठी स्नेहेन पुत्रीं जामातरं च कृत्वा तौ स्वगृहेऽस्थापयत्। अहो! स्त्रीणां गूढा बुद्धिः यतः—

लब्भइ वारिहिपारं, लब्भइ पारं च सव्वसत्थाणं। महिलाचरियाण पुणो, पारं न लहेइ बंभा वि ॥१॥

अथ सा तापसी अग्निदग्धा शुभाध्यवसायेन मृत्वा व्यन्तरी देवी जाता, विभङ्गज्ञानेन निजप्राग्भवं दृष्ट्वा जयपुरपौरानुपरि कुपिता दध्यौ—"अहो! महाऽसतीं जीवन्तीं होलीं स्तुवन्ति पूजयन्ति च लोकाः, परं मां न कोऽपि स्मरति"। इति ध्यात्वा पुर्या उपरि शिलां विकुर्व्याबोचत्—"एकं मम संतुष्टिप्रदं मनोरथं मुक्त्वाऽन्यान् सर्वान् शिलया चूरयिष्यामि"। ततो नृपादयो भीताः श्रेष्ठिनं शरणं गताः। तेनापि विज्ञप्तं बलिपूजापूर्वकं—"यः कोऽपि देवो वा दानवो वा स प्रकटीभूय कथयतु वयं पौरास्तत्कुर्मः"। ततो ढुंढाव्यन्तर्या सर्वं पूर्वव्यतिकरं प्रोच्य कथितं—"होलीपर्वणि समायाते सर्वे पौराः भाण्डचेष्टां गालिप्रदानं रक्षारजःकर्दमविलेपनं च कुर्वन्तु, तत उपद्रवं निवारयामि"। जनैः प्रपन्नं सर्वं। तदनु रजःपर्व प्रसृतम्। लोको गड्डरिकप्रवाहसदृशः परमार्थं न वेत्ति। अत्र शिक्षावचनमवधार्यम्—

एकेनासंबद्धवाक्येनानेकभवदुर्मोचं पापं बध्नाति जीवः, अतः शुद्धं जल्पनीयं, इत्यतो हुताशिनीपर्व परित्यज्य भावतः स्वधियाऽङ्गीकार्यम्।

दुर्वाक्यविस्तारमयं भवोदधौ, मिथ्यात्वपूर्णं जनतानिमज्जनम्।
होलीरजःपर्व इदं तु लौकिकं, हेयं जिनेन्द्रागमतत्त्वकामुकैः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोविंशे स्तम्भे पञ्चचत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४५

## समाप्तोऽयं त्रयोविंशः स्तम्भः २३

## ॥ अथ चतुर्विंशः स्तम्भः २४ ॥

### षट्चत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४६ ॥

श्रीयशोभद्रसूरिश्रीबलभद्रसूरिज्ञातम्—

तपस्वी रूपवान् धीरः, कुलीनः शीलदार्ढ्ययुक् । षट्त्रिंशद्गुणैराढ्योऽभूत्, श्रीयशोभद्रसूरिराट् ॥१॥

स्पष्टः । ज्ञातं चेदम्—

पल्लीपुर्यां श्रीयशोभद्रसूरेराचार्यपदावसरे यावज्जीवमष्टाभिः कवलैराचाम्लं विधेयमित्यभिग्रहं स्वीकृतपूर्विणो मार्गे ईर्यापरा विहरन्तः सप्रत्ययया सूर्यप्रतिमयैकया दृष्टाः । मनसि तया ध्यातं—"अहो ! इमे सूरयो मद्भवने पादानवधारयेरन् तदा मज्जन्म सफलं भवेत्" । इति विचिन्त्य व्योम्नि मेघान् विकुर्व्य जलवृष्टिर्विहिता । तदाऽप्कायविराधना मा भूदिति मत्वा समीपवर्तिसूर्यभवनमेव प्रविविशुः । तपःप्रभावात् सूर्यः प्रत्यक्षीभूय "वरं वृणुष्व, अमोघं देवदर्शनम्" इत्युवाच, तथाप्यनिच्छन्तः सूरयः स्वोपाश्रयं प्राप्ताः ततः सूर्यो विप्ररूपेण बलात्सर्वस्वर्गश्वभ्रादिजीवावलोकनाञ्जनकूपिकां पुस्तिकां चार्पयत् । सूरेः पुस्तकवाचनादेवाम्नायाः पठितसिद्धा जाताः । तत एता विद्याः पाश्चात्यानामयोग्या इति विमृश्य स्वशिष्यं बलभद्रमुनिमाकार्य प्रोक्तम्—"इयं पुस्तिकाऽनाठेया, एतादृश्येव सूर्यौकसि गत्वा

तस्मै देया, कथनीयं च मद्गुरुप्रेषितां युष्मदीयपूर्वदत्तस्थापनिकामिमां गृहाणेति" । बलभद्रेण तु गुरुणा दृढं निषिद्धेनापि गत्वा तच्चैत्यतो बहिः पुस्तिका त्रोटिता, आम्नायपत्रत्रयं संगोप्य सा पुस्तिका सूर्यप्रतिमायै दत्ता, सूर्येणापि करौ प्रसार्य गृहीता । ततश्चैत्यतो बहिरेत्य पूर्वगोपितपत्राण्यदृष्ट्वा स्वमुपालम्भं ददौ—"धिङ् मां गुर्वाज्ञालङ्घितारं, पत्राणि तु को जानाति कुत्र गतानि" इति विलपन्तं साश्रुनेत्रं तं वीक्ष्य सूर्यः प्राह—"किं खेदं वहसि? गृहाणेमानि त्रीणि पत्राणि, शासनोन्नत्यां प्रगुणो भव" । ततस्तेनापि पत्रत्रयगता विद्याः पाठसिद्धिं नीताः । अन्यदा बहिर्भूमिं गतेषु गुरुषु यथोक्तकालादधिककालरक्षार्थं प्रासुकजलार्थमानीताश्छागलिण्डिकाः स्वसमीपे धृताः सन्ति, तस्मिन् काले संजीवनी विद्याऽविस्मृत्यर्थं गुणिता, तन्महिम्ना ता अजालिण्डिकाः सर्वास्तत्सङ्ख्ययाऽजामेषगणो बभूव । तावत्तत्र गुरवः प्राप्ताः । छागीछागा बूबूशब्दान् कुर्वाणा वीक्ष्योपालम्भं दत्तवान् । तदा स पप्रच्छ—"स्वामिन्! जातमजातं न स्यात्, अधुना किं कुर्वे? पूज्या मामादिशत" । गुरुराह—"जीवरक्षानिमित्तमजापालस्वरूपं कृत्वा साधुत्वं संगोप्य भिन्नौ द्वौ वाटकौ विधाय एकत्र वाटके छाग्यो रक्षणीया अन्यत्र छागाश्च, द्वयानां मेलापो न कार्यः सन्ततिवृद्धिक्षयार्थमिदं विधेयं, भक्षणमपि निर्जीवमेव विस्तार्यम्, तेषामिदमायुःकालपर्यन्तं यतितव्यम्" । इत्यादि तद्रक्षायै उपदिश्य सूरयः स्थानान्तरे व्यहार्षुः । ततो बलभद्रो गिरिगुहास्थोऽव्यक्तवेषधारी छागवृन्दमोषधीश्चारयन् तत्पुरिषेण होमं करोति । क्रमेण तस्य बहवो विद्याः सिद्धाः ।

अन्यदा श्रीरैवतगिरितीर्थं बौद्धैरध्यष्ठायि, ततो रायखेंगारनृपो राज्ञी च बौद्धैः स्वोपासकौ कृतौ, श्वेताम्बरास्तत्र तीर्थे प्रवेशं न लभन्ते । एकदा श्वेताम्बरसङ्घाश्चतुरशीतिर्मिलिताः, परं बौद्धीभूय देवा वन्द्या इति खेंगारनृपाज्ञया खिन्नाः पात्रेऽम्बादेवीमवतार्येत्यूचुः-"सङ्घानां विघ्नं निवार्य साहाय्यं कुरु"। सोचे—"तीर्थं बौद्धव्यन्तरै रुद्धं ततः साहाय्यकरं विना मदीया शक्तिर्न स्फुरति । शासनोद्योतने प्रद्योतननिभा यावज्जीवतपोरताः श्रीयशोभद्रस्वामिनस्तु स्वर्गं गताः । अधुना वलभद्रमुनिरमुकस्थले विराजते, तं मुनिं यदाऽऽनयत तदा तीर्थं वलते" । ततः सङ्घपतिभिरौष्ट्रिकास्तत्र प्रेषिताः । तैस्तत्राजवृन्दं चारयन्तमेकं नरं दृष्ट्वा पृष्टम्—"अत्र वलभद्रमुनिः क्व वसति ? वेषपरावर्तं विभ्रता तेनैव प्रोक्तम्—"अमुकस्थले गच्छत, तत्र स स्थितोऽस्ति" । ततस्तद्गमनात्पूर्वमेव गिरिगह्वरे मुनिवेषं प्रकटीकृत्य स्वयमेव स्थिताः । औष्ट्रिकैरेत्य सङ्घशिक्षितविज्ञप्तिः कृता । तच्छ्रुत्वा मुनिनोक्तं—"यूयं तत्र गच्छत, अहं सङ्घकार्ये शीघ्रमेमि" । स मुनिर्गगनमार्गेण तत्रागात् । सङ्घभक्त्यर्थं रायखेंगारस्य जीर्णदुर्गाधिपस्य पार्श्वे एत्योचे—"सङ्घानां यात्रान्तरायं मा कुरु, क्षणिकवादिनां नेदं तीर्थं" । नृपः प्राह—"बौद्धीभूयैव तीर्थं वन्दध्वं, नान्यथा" । इति श्रुत्वा तस्य वपुषि अकृताच्छोटनादिना वेदनामुत्पाद्य गतः सङ्घमध्ये । विद्यावलेन सङ्घस्य परितोऽग्निप्राकारं तत्परितो जलभृतखातिकां च विधाय सुखं तस्थौ । तद्व्याधिपीडितेन रुष्टेन राज्ञा सेनानीस्तं सङ्घं हन्तुं प्रहितः, स च तमग्निप्राकारं प्रेक्ष्य भीतो मुनिं प्रसादयामास, आह च—"हे मुने! राजानं मा रोषय" । ततो मुनिः स्वमतिशयं दर्शयितुं मन्त्रिणं प्राह—"मद्बलं पश्य" । ततो रक्तकण-

वीरकम्बां संहारेण भ्रामयित्वा पुरोवर्तिसर्वतरुशिरांस्यपातयत् । मन्त्रिणोचे—"मूषकोऽपि ढंकनिकापातने शक्तः, न तूद्धरणे" । ततः श्वेतकणवीरकम्बया सृष्ट्या भ्रामितया तानि तरुशिरांसि स्वस्थाने योजितवान् । तद्वीक्ष्य चमत्कृतेन मन्त्रिणा राजा विज्ञप्तस्तत्सामर्थ्यं । ततः स भीतो वप्पभट्टमेत्य नत्वा स्तुत्वाऽऽह—"मदपराधसहस्रं क्षमस्व, बालावज्ञया न क्रोधं पितर आवहन्ति" । इति श्रुत्वा मुनिः स्माह—"यद्यात्मानं जैनधर्मे निधेहि तदा सुखं स्यात्" इतिमुनिवचसा स जैनधर्मं प्रपन्नः । श्रीसङ्घैर्महामहेन श्रीरैवतगिरितीर्थयात्रा विहिता ॥

वप्पभट्टयशोभद्रौ, शासनस्य प्रभावकौ । जातौ तौ प्रत्यहं वन्दे, स्तौमि भक्तिगुणाञ्चितः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ चतुर्विंशे स्तम्भे षट्चत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४६

## सप्तचत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४७ ॥

अथ सुलभबोधिस्वरूपमाह—

लोभिता बहुभिर्भोगैः, पित्रादिभिर्निरन्तरम् । धर्मप्राप्तिं समीहन्ते, ते स्युः सुलभबोधिनः ॥ १ ॥

---

१ वैपरीत्येन वामभागेनेति यावत् २ प्रदक्षिणेन ।

कण्ठ्यः । भावार्थस्तु वक्ष्यमाणज्ञातेन ज्ञेयः । तथाहि—

क्षितिप्रतिष्ठिते नगरे चित्रसंभूतौ पूर्वभवे भद्रौ गोपौ सुहृदावभूतां । तौ वल्लवौ साधुसंयोगात्संयममाराध्य सुरावभवतां । ततश्च्युतौ पृथ्वीपुरे सोदराविभ्यात्मजौ जातौ । तयोरन्ये चत्वारो महर्द्धिका इभ्यपुत्राः सुहृदो जज्ञिरे । ते षडपि चिरं भोगानुपभुज्यान्यदा मुदा गुरूपान्ते धर्मं श्रुत्वा विजितेन्द्रियाः प्राव्रजन् । ते षडपि विविधं श्रुतमधीत्य प्रान्तेऽनशनं विधाय प्रथमस्वर्गे नलिनीगुल्मविमाने चतुःपल्योपमायुषः सुरा जज्ञिरे । तत्रायुःपूर्णे गोपजीवामरौ मुक्त्वा प्रागपरे चत्वारोऽच्यवन् । तेष्वेकः कुरुदेशे इषुकारपुरे इषुकाराभिधो भूमानभवत् । द्वितीयस्तु तस्यैव राज्ञो महिष्यभूत् । तृतीयस्तु तस्यैव राज्ञः पुरोधा भृगुसंज्ञक आसीत् । तुरीयस्तु यशाभिधा पुरोधसो भार्याऽभवत् । अथ तस्य पुरोधसः प्राप्ते समयेऽपि यदाऽङ्गजो नाभूत्तदा तच्चिन्तयाऽत्यन्तमन्तर्व्याकुलोऽभवत् ।

इतश्च तौ गोपसुरावन्यदाऽवधिज्ञानात् भृगोः पुत्रौ भविष्याव इति ज्ञात्वा तौ निर्ग्रन्थरूपौ भृगोः सौधे समेयतुः । सोऽपि प्रेक्ष्य प्रमुदितो रमणीयुतः प्राणमत् । ततस्तयोर्वाचं श्रुत्वा श्राद्धधर्मं प्राप्येति पप्रच्छ—"हे पूज्यौ ! मम पुत्रा भाविनो न वा ?" । तावूचतुः—"तव द्वौ सुतौ भाविनौ, परं शिशुत्वे एव प्रव्रज्यां ग्रहीष्यतः, तदा तयोरन्तरायो न करणीयः" । तत् दम्पतिभ्यां स्वीकृतं । ततो देवौ गतौ ।

अन्यदा दिवश्च्युतौ यशाकुक्षाववतेरतुः । तत आजन्मापि मत्सुतौ मुनीन् मा पश्यतामिति ध्यात्वा सभार्यः क्वापि ग्रामे गत्वाऽस्थात् । अथ क्रमात्सुतयुग्मं यशाऽसूत । क्रमेण विद्यायोग्यौ जातौ । तदा

पितृभ्यामिति शिक्षितौ—“हे पुत्रौ! ये यतयो मुण्डा दण्डहस्ताः शनैर्नीचैर्दृशो दम्भाढ्का इव विचरन्ति ते डिम्भान् गृहीत्वा घ्नन्ति राक्षसा इव तन्मांसमश्नन्ति, तद्युवाभ्यां तेषां पार्श्वे न गन्तव्यं कदापि हि विश्वस्तघातिनस्ते सन्ति”। अन्यदा तौ स्वैरं क्रीडन्तौ ग्रामाद्बहिर्जग्मतुः। दैवाद्ग्राममार्गादभिमुखमागच्छतो मुनीन् वीक्ष्य त्रस्तौ तौ नंष्ट्वा वने वटमारोहतां। साधवोऽपि तस्य वटस्याधः समागताः पृथ्वीं प्रमार्ज्य यतनया जीवान् दूरीकृत्य पूर्वोपात्ताशनादिकं भोक्तुमुपचक्रमिरे सिक्थमात्रमपि भूमावपातयन्तः चवचवादिशब्दमकुर्वाणाश्चेति। तेषां चंक्रमणजल्पनाशनकरणावलोकनादि सर्वं जीवरक्षापरं चेष्टनं वीक्ष्य वटोर्ध्वस्थौ तौ दध्यतुः—“नन्वमी भक्तमेव भुञ्जते, न पलं पितृभ्यां व्यर्थमेव कथितं, भ्रान्तिमावां नीतौ, परमीदृशाः श्रमणाः क्वाप्यावाभ्यां दृष्टाः सन्ति” इति ध्यायन्तौ तौ प्राच्यां निजां जातिं सस्मरतुः, प्राकृतं श्रामण्यं स्मृत्वा संबुद्धौ दध्यतुः—“अहो! मोहात् पितृभ्यां मृषोक्तिभिरावां वञ्चितौ” इति ध्यायन्तौ न्यग्रोधादुत्तीर्य तान्नत्वा स्तुत्वा च स्वीयसौधमभ्येत्य तातमित्याहतुः, तच्चेदमुत्तराध्ययने सूत्रम्—

असासयं दट्ठुमिमं विहारं, बहुअंतरायं न हु दीहमाउ।
तम्हा गिहंसी न रई लभामो, आमंतयामो चरिसामु मोणं ॥ १ ॥

अनित्यं दृष्ट्वा इमं प्रत्यक्षं विहारं मनुष्यत्वेनावस्थानं बहवोऽन्तराया रोगादयो यत्र स तम्। नैव दीर्घजीवितं सम्प्रति पूर्वकोटीवर्षाद्यायुषोऽभावतः। यत एवं तस्मात् गृहे न रतिं लभावहे, अत एवामन्त्रयावः आपृच्छावः आवां चरिष्यावो मौनं संयममित्यर्थः ॥

एवं ताभ्यामुक्ते तातः प्राह—"हे पुत्रौ! युवां वेदवचनं न जानीथः, उक्तं च वेदे—अनपत्यस्य लोको न भवतीति, तथा—पुत्रेण जायते लोकः इत्येषा वैदिकी श्रुतिः, अथ पुत्रस्य पुत्रेण स्वर्गलोके महीयते इति, यत एवं तस्मात् वेदानधीत्य विप्रान् संतोष्य पुत्रान् गृहे निवेश्य कामिनीविलासं विलस्य युवां दीक्षामङ्गीकुरुतम्"। इति श्रुत्वा तावूचतुः—"हे तात! वेदा अधीतास्त्राणं शरणं न भवन्ति, तत्पठनमात्रतो दुर्गतिपातरक्षणासिद्धेः। उक्तं च स्मृतौ—

अकारणमधीयानो, ब्राह्मणस्तु युधिष्ठिर। दुष्कुलिनोऽप्यधीयन्ते, शीलं तु मम रोचते ॥ १ ॥
शिल्पमध्ययनं नाम, व्रतं ब्राह्मणलक्षणम्। व्रतस्थं ब्राह्मणं प्राहुः नेतरान् वेदजीवकान् ॥ २ ॥

विप्रसंतोषणमपि श्वभ्रहेतुरेव। यतस्ते कुमार्गप्ररूपणपशुवधादावेव प्रवर्तन्ते। तथा च पुत्रादयोऽपि नारकादौ पततां न त्राणं भवन्ति। उक्तं च वेदानुगैरपि—

यदि पुत्राद्भवेत्स्वर्गो, दानधर्मो न विद्यते। मुषितस्तत्र लोकोऽयं, दानधर्मो निरर्थकः ॥ १ ॥
बहुपुत्रा दुली गोधा, ताम्रचूडी तथैव च। तेषां च प्रथमं स्वर्गः, पश्चाल्लोको गमिष्यति ॥ २ ॥

तथा कामिनीसौख्यमप्यशाश्वतं, यत उत्तराध्ययने सूत्रं—

खणमित्तसुक्खा बहुकालदुक्खा, पगामदुक्खा अनिगामसुक्खा।
संसारमुक्खस्स विपक्खभूया, खाणी अणत्थाण उ कामभोगा ॥ १ ॥

पुनर्हे तात! संसारकार्यस्य निरन्तरं क्रियमाणस्यापि आजीवितं परिसमाप्तिर्न स्यात् इत्यतः कथं

प्रमादो धर्मे कर्तुं युक्तः ? यो यो वासरो गतः स स पुनर्नागच्छति । धर्ममकुर्वतो जन्तोरफला यान्ति वासराः । अधर्मनिबन्धनं गार्हस्थ्यमिति तत्त्याग एव श्रेयान्" । इत्यादिवचनात्प्रबुद्धो भृगुराह—"हे जातौ ! अधुना गृहे सहैवोषित्वा युवामावां च सर्वेऽपि देशविरतिं प्रपाद्य पश्चाद्यौवनोत्तरकाले संभूय प्रव्रजिष्यामः" । कुमारावाहतुः—"हे तात ! यस्य मृत्युना सह सख्यमस्ति, यस्य वा मृत्योः पलायनमस्ति, तथा यो जानाति अहं न म्रिय इति तस्यैवं वक्तुमुचितं, परं सोऽज्ञो ज्ञेयः, यतो मृत्योरनागमावसरो नास्ति, ततश्चाद्यैव धर्मं प्रतिपद्यामहे, विषयसौख्यादिसर्वभावा अनन्तशः प्राप्ताः" । इत्यादि समाकर्ण्य जातव्रताशयो भृगुर्ब्राह्मणीं धर्मविघ्नकरीं मत्वेदमाह—"हे वशिष्ठगोत्रोद्भवे ! पुत्राभ्यां विना गृहेऽवस्थानं मम न योग्यं, यथा शाखाभी रहितो वृक्षः भृत्यैर्विहीनो नृपश्च शोभां नाश्नुते तथाऽहमपि पुत्रप्रहीणः, अत आभ्यां सह दीक्षां ग्रहीष्यामि" । इति श्रुत्वा साऽऽह—"स्वामिन् प्रभूता अध्यक्षाः कामगुणा नो त्याज्याः, दीक्षां हि भवान्तरभोगार्थं[1] गृह्णासि, ते चाधुनापि सन्त्येव, तत् किं तया ?" । भृगुः प्राह—"नासंयमजीवितहेतोर्भोगान् जहामि, किं नु लाभालाभसुखदुःखजीवितमरणादिषु समतां भावयन्निति, ततो मुक्त्यर्थमेव दीक्षाप्रतिपत्तिः" । इत्यादिवाक्यैः प्रबुद्धा साऽऽह—"धन्याविमावावयोरात्मजौ बालावपि यदावाभ्यां प्रागेव व्रतार्थिनौ जातौ, अनयोः स्थैर्यमेवावयोर्धर्मदायकम् । इत्थं चतुर्णामपि व्रताङ्गीकरकस्वरूपं श्रुत्वा इषुकारनृपः पुरोहितत्यक्तं गृहसर्वस्वं ग्रहीतुमा-

१ देवभवनिमित्तम्.

गात् । तदा नृपराज्ञी कमलानाम्नी राजानमभीदृशं सम्यगुवाच—हे नृप ! द्विजत्यक्तवान्तं गृहसारं त्वं भोक्तुमिच्छसि, अतस्त्वं वान्ताशी, न चैतद्भवादृशामुचितं, किं चेदं वान्तेच्छापूरणे सर्वजगद्धनं तवायत्तं भवेत्तथापि तत्सर्वं जरामरणाद्यपनोदाय न समर्थं, जातस्य ध्रुवं मरणात् । उक्तं हि—

कश्चित्सखे त्वया दृष्टः, श्रुतः संभावितोऽथवा । क्षितौ वा यदि वा स्वर्गे, यो जातो न मरिष्यति ॥१॥

अतो धर्माद्विना न त्राणम् । एभिश्चतुर्भिरनित्यं सर्वं ज्ञात्वा त्यक्तम्, अहमपि परिग्रहारम्भनिवृत्ता दीक्षां ग्रहीष्ये" । इत्यादितद्गिरा प्रतिबुद्धो नृपो दुस्त्यजान् कामभोगान् विपुलं राज्यं च त्यक्त्वा निराशंसो निर्ग्रन्थो जातः । एवममुना प्रकारेण तानि(ते)पूर्वोक्तानि(क्ताः) षडपि यथोक्तक्रमेण बुद्धानि (द्धाः) विगतमोहान्यर्हतां शासने पूर्वमर्त्यजन्मनि भावनया धर्माभ्यासरूपया भावितचित्तानि अचिरेणैव कालेन केवलज्ञानेन मुक्तिं प्राप्तानि ।

प्राग्भवेषु गतमोहशासने, धर्मभावितमनांसि तानि षट् ।
स्वात्मतत्त्वमचिरेण जज्ञिरे, तत्त्वमत्सुलभबोधियोगतः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ चतुर्विंशे स्तम्भे सप्तचत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४७ ॥



## अष्टचत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४८ ॥

अथ प्रत्येकबुद्धाश्चत्वारः, ते समकालं स्वर्गच्यवनदीक्षोपादानकेवलज्ञानमहानन्दभाजो बभूवुः, तेषां स्वरूपमाह—

तत्रादौ वृषभं वीक्ष्य, प्रतिबुद्धस्य धीनिधेः । करकण्डुमहीजाने—श्चरितं वच्मि तद्यथा ॥ १ ॥

चम्पायां दधिवाहनभूपस्य राज्ञी पद्मावती अन्तर्वत्नी बभूव । तद्गर्भानुभावत इति दोहदो जातः यदहं कृतनृपनेपथ्या धराभृता धृतछत्रा पट्टेभस्कन्धमाश्रिता विहरामि आरामादिषु । तदपूर्तौ सा कृष्णपक्षेन्दुवत् कार्श्यं दधौ । तत्कारणं नृपेण पृष्टं, सा स्ववाञ्छामाह । ततो भूपस्तया साकमिभमारुह्य स्वयं तदुपरि छत्रं दधत् रम्यमारामं जगाम । तदा नव्यजीमूते वर्षति जलसङ्गाद्भूमेर्गन्धः प्रादुरभूत् । तं गन्धमाघ्राय मदोन्मत्तः करी कान्तारं प्रत्यधावत् । अङ्कुशादिभिस्ताडितोऽपि गमनान्न न्यवर्तत । तदा दुःखार्तो भूपो देवीमूचे—"अयं दूरे वटो दृश्यते तस्याध एष गजो गन्ता तदा वटशाखां गृह्णीयास्त्वम्, अहमपि ग्रहीष्ये, ततो गजं हित्वा निजपुरं यास्यावः" । ततो वटस्याधो गजे गते शीघ्रं क्ष्मापस्तच्छाखामालम्ब्योदतरत्, सा तु तद्ग्रहणाय नालमभूत् । ततो नृपो विलपन् दन्तिपदानुसारेण चम्पां ययौ । गजः पिपासावशो महारण्ये एकं सरोऽविशत्, तदा लब्धलक्ष्या सा उत्ततार, सरस्तीर्त्वा पुलिनोद्देशमागत्य दध्यौ—"पूर्वकर्मभिरतर्किताऽऽपदापतिता, रोदनेन सप्त कर्माणि दृढबन्धनानि स्युः, अतोऽरण्यनिस्तर-

णावधि साकारमनशनं करोमि" । तत्कृत्वा काञ्चिद्दिशं प्रति चचाल । इतश्चैकेन तापसेन दृष्ट्वा पृष्टा—"किं त्वं वनदेवी किन्नरी वाऽसि ? । साऽऽह—"अहं जैनचेटकराजस्य पुत्री" । इत्यादि सर्वं श्रुत्वा स जजल्प—"अहं त्वत्पितुर्बान्धवोऽस्मि, तन्मा भैषीः" इत्याश्वास्य तस्या वनफलादिनाऽऽतिथ्यं चक्रे । ततः साऽन्तिकपुरे नीता । साऽपि भोगादिभ्यो निर्विण्णा साध्वीनां पार्श्वे गत्वा प्रणम्य स्थिता । तदा साध्वी तां पप्रच्छ—"आर्ये ! त्वं कुत आयासीः ? ।" साऽपि दीक्षालालसा गर्भं विना यथास्थितं वृत्तान्तमुवाच । श्रुत्वा साध्वी प्रोचे—"हे महाशये ! विद्युच्चपलसांसारिकसौख्याशंसां त्यक्त्वा संयममङ्गीकुरु" । साऽपि विरक्ता व्रतमाददे । क्रमेण गर्भवृद्धौ साध्वीभिः पृष्टा सत्यमूचे, ततस्तां गुप्तामरक्षत् । संपूर्णे काले शय्यातरगृहस्था सुतमसूत । ततस्तं सुतं गृहीत्वा तत्तातनाममुद्राङ्कितं रत्नकम्बलवेष्टितं कृत्वा प्रेतवने गत्वाऽमुचत्, तद्ग्राहकं द्रष्टुं प्रच्छन्नं संस्थिताऽद्राक्षीत्, तावत्तत्प्रेतवनेशस्तत्रायातस्तं जगृहे, पत्न्यै च दत्तवान् । आर्यापि तत्पृष्ठानुगा गृहं वीक्ष्योपाश्रयं जगाम, प्रत्यहं तत्र गत्वा मोदकान्नादिभिस्तं बालं मोहादलालयत् । तस्य देहे जन्मतः कण्डुव्याधिरभूत् । एकदा स बालैः सह क्रीडन् जगौ—"अहं युष्माकं नृपः, तस्मान्मम करं दत्त" । बालाः प्रोचुः—"किं दीयते ?" । स प्रोचे—"उच्चैः करेण मां कण्डूयध्वम्, अनेनाहं तुष्टोऽस्मि" ततस्तस्याभिधानं बालाः करकण्डुरिति व्यधुः । प्रौढिं प्राप्तः स प्रेतवनं ररक्ष । एकदा द्वौ मुनी तत्रायातौ वंशजालान्तरं दण्डमेकं वीक्ष्यैको लक्षणज्ञोऽपरं प्राह—

यावता वर्धते चत्वा—र्यङ्गुलान्यपराण्ययम् । तावत्प्रतीक्ष्य यो ह्येन—माद्त्ते स भवेन्नृपः ॥ १ ॥

तद्वाक्यं करकण्डुना एकेन द्विजेन च श्रुतं। ततो विप्रः प्रच्छन्नं खनित्वा तं दण्डमाददे । तत्प्रेक्ष्य महाविह्वरं विधाय दण्डं तं करकण्डुर्जग्राह । ततो विहस्य लोकैः पृष्टः—"त्वमनेन किं करिष्यसि ?" । स आह—"नूनमस्य प्रभावान्नृपो भविष्यामि" । लोकैरुक्तं—"त्वमस्यैकं ग्राममर्पयेः । तत्प्रपद्य स निजं धाम ययौ । द्विजा अपि दध्युः—"एनं हत्वा दण्डमाददे ( ददिमहे ) " । इत्याकूतं ज्ञात्वा स भीतो नंष्ट्वा काञ्चनपुरे गतः । श्रान्तो बहिः कुत्रापि सुष्वाप। तदैवापुत्रे नृपे मृते पञ्चदिव्यैः करकण्डुः राज्यं प्राप। इभारूढो नगरे प्रविशन् तैर्वाडवैररोधि—"अरे मातङ्ग! तव राज्यं न घटते" । तच्छ्रुत्वा तं दण्डं करे कृत्वा धुन्वन्तं वीक्ष्य भीता द्विजा नेशुः । धीसखादिभिः राज्येऽभिषिक्तः । क्रमेण स्वजातिमातङ्गान् द्विजान् विदधे । उक्तं च—

दधिवाहनपुत्रेण, राज्ञा च करकण्डुना । वाटधानकवास्तव्या—श्चाण्डाला ब्राह्मणीकृताः ॥ १ ॥

एकदा स द्विज एत्योवाच—"राजन्! मम त्वदुदितं ग्रामं देहि" । राज्ञोक्तं"कं ग्रामं तव ददामि ?"। स जगौ—"चम्पादेशे ग्राममर्पय" । ततो लेखं दधिवाहनं प्रति एवं लिलेख—"अस्मै द्विजायैकं ग्रामं देयं" । इत्थं द्विजदत्तलेखं परिवाच्य क्रोधारुणनेत्रो दधिवाहनः प्राह—"अरे विप्र! मातङ्गलिखितलेखस्पर्शेनाहं मलिनतां नीतः, याहि याहि त्वमधुना, मम कोपज्वलने त्वं पतङ्गत्वं यास्यसि" । सोऽपि तूर्णं गत्वा करकण्डुं प्राह । तन्निशम्य क्रोधाध्मातः स्वसैन्यभरेण सर्वत्र चम्पां रुरोध । परस्परं महारणं जातं । अथ तां वार्तां श्रुत्वा साध्वी करकण्डुसमीपेऽगात् । सोऽप्युत्थाय तां ननाम । सा तस्मै रहो

वृत्तान्तं प्रोच्योवाच—"हे पुत्र ! स्वतातेन समं युद्धं तव न युक्तं, यदि न प्रत्ययस्तर्हि बाल्ये मया त्वत्करे न्यस्तां त्वत्तातनामाङ्कां मुद्रां पश्य" । सोऽपि तां वीक्ष्य गतसंशयः प्राह—"हे मातः ! त्वं चम्पेशं शिक्षय" । ततस्तत्र गत्वा तया शिक्षितः स पप्रच्छ—"स गर्जः क्व गतः" । साऽऽह "राजन् ! येनेयं पुरी वेष्टिता स एव गर्जः" । इत्यादि सर्वं स्वरूपं श्रुत्वा गतस्मयो मिलनोत्सुको गन्तुं प्रववृते, तनुजोऽपि पादचारेणाभ्यागात् पितुः पादयोश्चापतत् । पिताऽपि तं नतं दोर्भ्यामादाय परिषस्वजे । क्रमेण पुत्राय राज्यं दत्त्वा स्वयं दीक्षामाददे । करकण्डुनृपः सनयं राज्यद्वयमन्वशात् ।

स चान्यदा गोकुलान्यवेक्षमाण एकं तारगौरं तर्णकमद्राक्षीत् । ततस्तस्मिन् जातप्रेमा भूमान् गोदुह-मूचे—"एतन्मातुः पयोऽस्यैव देयं, किं त्वन्यासामपि धेनूनां पयोऽप्यन्वहमस्य पातव्यं" । गोपालोऽपि तथैव विदधे । अथ स वत्सः शशित्विषा स्पर्धमानः पलोपचयेन दुर्लक्ष्यश्चाभूत् । क्ष्मापोऽपरैर्वृषभैः समं तमयोधयत्, परं कोऽपि शाक्करस्तं नाजैषीत् । पुनः कालान्तरे गोकुलमीक्षितुं नृपो गतः पङ्गुकाद्यैः संघट्यमानमेकं जरद्गवं ददर्श । "महोक्षः स महावीर्यः क्व" इति गोदुहमपृच्छत् । सोऽवादीत्—"देव ! स एवायं जरातुरो वृषभः" । तन्निशम्य नृपोऽध्यासीत्—"अहो ! अनित्यता सर्वभावानां ! यस्य हुंकारवेण ज्याटंकारवेण पक्षिण इव बलिनोऽपि बलिवर्दा नेशुः द्रुतं सोऽधुना पङ्गुकैः कृतां परिघट्टनां सहते । यतः—

यद्रूपं पश्यतां नेन्दु-दर्शनेऽप्यादरोऽभवत् । सोऽप्यद्य तनुते दृष्टो—र्जुगुप्सां हि पुरीषवत् ॥१॥

तस्मादिदं विक्रमवयोरूपविभुत्वविभवादिकं पताकाञ्चलचञ्चलं प्रत्यक्षमेव वीक्ष्यते । एवं सत्यपि जनोऽज्ञानाद्यथास्थितं न जानाति । ततोऽहं जन्म सार्थकं स्वभावधर्मानुयायिनं करोमि" ।

ध्यात्वेति कृत्वा स्वयमेव लोचं, बिभ्रन्मुनेर्वेषममर्त्यदत्तम् ।
प्रत्येकबुद्धो जिनधर्मरागी, भुवि व्यहार्षीत् करकण्डुराजः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ चतुर्विंशे स्तम्भेऽष्टचत्वारिंशदधिकत्रिशततमं व्याख्यानम् ३४८ ॥

## एकोनपञ्चाशदधिकत्रिशततमं व्याख्यानम् ३४९ ॥

अथ द्वितीयप्रत्येकबुद्धमाह—

अथ प्रत्येकबुद्धस्य, बुद्धस्येन्द्रध्वजेक्षणात् । राज्ञो द्विमुखसंज्ञस्य, ज्ञातं वक्ष्यामि तद्यथा ॥ १ ॥

काम्पिल्यपुरे हरिवंशे यवाभिधो भूपोऽभवत् । तस्य गुणमाला प्रियाऽऽसीत् । अन्यदाऽऽस्थानस्थः देशान्तरादागतं दूतं पप्रच्छ—"अन्येषां राज्ये विद्यमानं मद्राज्ये किं न विद्यते ?" । दूतोऽवादीत्— "हे विभो ! तव राज्ये चित्रसभा नास्ति" । ततो नृपः स्थपतीन् चित्रकारानाकार्य जगौ—"मम चित्रसभा क्रियताम्" । प्रमाणमिति प्रोच्य शुभे क्षणे सभान्यासेच्छया भुवः खातं प्रारेभिरे । पञ्चमे दिने

तस्मान्मूतलात्तेजसा ज्वलन्मौलिः प्रादुरभूत् । रत्नमयं तं वीक्ष्य हृष्टः स्थपत्यादीन् वस्त्रादिभिरपूजयत् । तेऽपि सुरसभासमां शालभञ्जिकादिभिः शालिनीं सभां शीघ्रं वितेनिरे । ततः शुभे दिने तं दिव्यं मौलिं निजमौलौ संस्थाप्य संसदि तस्थौ । तन्मौलिमहिम्ना राज्ञ आनने द्वे अभूतां, यथा हारप्रभावेण रावणस्य दशाननानि । ततो द्विमुख इति तस्य नाम लोके विस्तृतं । क्रमादस्य तनयाः सप्त जज्ञिरे, परं सुतैकाऽपि नास्ति । तदर्थं कश्चिद्यक्ष आराधितः । क्रमेण मदनमञ्जरी नाम पुत्री सुरूपा सुगुणाऽभूत् ।

इतश्चोज्जयिनीभूभर्त्रा दूतमुखादिति श्रुतं—"काम्पिल्यनाथस्य मुखद्वयं किरीटाज्जातमस्ति" । तन्निशम्य जातलोभश्चण्डप्रद्योतः कोटिरहेतवे वाग्मिनं दूतं तत्पार्श्वे प्राहिणोत् । सोऽपि गत्वा तं नत्वाऽऽह—"स्वशिरोधृतं मौलिरत्नं द्रुतं मम नृपाय प्रेषय, नो चेद्रणाय प्रगुणो भव" । ततः सोऽवादीत्—"हे दूत! यदि तव नृपश्चत्वारि वस्तूनि मह्यं दत्ते तदाऽहमपि तं ददे एको गन्धद्विपोऽनलगिरिः १, अग्निभीरुरथः २, शिवाभिधा पद्मिनी राज्ञी ३, लोहजङ्घदूतश्चेति ४" । इति श्रुत्वा गत्वा च स भूपाय न्यवेदयत् । ततो दीप्तकोपाग्निर्भेरीं प्रयाणार्थं प्रवाद्यावन्तिपतिः पाञ्चालं प्रति चचाल । तत्सैन्ये लक्षद्वयं द्विपा रेजुः पञ्चायुतास्तुरगाः स्युः रथाश्च विंशतिशतमिता विरेजिरे कृतवैरिविपत्तयः सप्त कोट्यः पत्तयः । द्विमुखोऽपि चैररायातं तं ज्ञात्वा संमुखमाययौ । प्रद्योतः स्वसैन्यैर्दुर्भेदं गरुडव्यूहं विदधे, द्विमुखराट् च वार्धिव्यूहं । ततो मिथो महायुद्धे जाते तन्मौलिमहिम्ना द्विमुखोऽजय्योऽभूत् । तदा चोज्जयिनीनाथं नश्यन्तं द्विमुखः शशकग्राहं जग्राह क्रौञ्चबन्धं बबन्ध च निबिडं निगडं तच्चरणयो-

न्यवापयत्। यतः महानपि जनो लोभात् कां कामापदं नाश्नुते ?। क्रमेण मुत्कलीकृत्य सभायामर्धासने गौरवात्तं न्यवीविशत्।

अन्यदा राज्ञः सुतां मदनमञ्जरीं दृष्ट्वा जातगाढानुरागो गाढमाकुलः प्रद्योतोऽभूत्, दाहज्वरार्दितः पुष्पतल्पेऽपि सुप्तो मनागपि स्वास्थ्यं नाप, वर्षायितां रात्रिमतिवाह्य प्रातः संसद्यागतं तमुद्विग्नं वीक्ष्य नृपोऽब्रवीत्—"हे अवन्तीश ! किं तव पीडाऽस्ति ? हेमन्तेऽब्जमिव म्लानमास्यं तव कथं ? अब्रुवाणे त्वयि कथं तत्प्रतिक्रिया भाविनी ?"। ततः स दीर्घं निःश्वस्य लज्जां विहाय जगौ—"यदि मम क्षेम-मिच्छसि चेत्तदा निजां पुत्रीं मह्यं देहि, नो चेदहं वह्नौ विशामि" द्विमुखोऽपि महामहैस्तस्मै स्वपुत्रीं ददौ। सोऽपि सफलं जन्म मन्यमानो द्विमुखसंमानितो मुदा स्वपुरीमवाप।

अन्यदा शक्रमह उपस्थिते द्विमुखो नागरान् 'इन्द्रध्वजः संस्थाप्यताम्" इत्यादिदेश। ततः शुभ्रध्व-जपटं माल्यमालिनं किङ्किणीमालभारिणं नादनिर्घोषपूर्वकं पौराः पौरन्दरध्वजमुत्तम्भयामासुः। तं पुष्प-फलादिभिः प्रपूज्य केचिन्ननृतुः केचिद्गीतानि विदधुः, एवं महोत्सवैरागात् पूर्णिमा। सप्तमे दिने नृपोऽपि भूरिविभूत्या तमपूजयत्, संपूर्णे चोत्सवे वस्त्रभूषणादि निजं निजमादाय पौराः काष्ठशेषं तम-पातयत्। परेद्युस्तं विण्मूत्रलिप्तं कुस्थानसंस्थितं बालाद्यैराक्रम्यमाणं बहिर्गतो भूपोऽपश्यत्। ततः संवे-गमापन्न एवं दध्यौ—"य एवं गतेऽहनि सर्वैर्लोकैः पूज्यमानोऽभूत् स एवाद्य महाकेतुर्विडम्बनां महतीं प्राप्नोति, श्रीशोभा तु क्षणिका दृश्यते, यतः—

आयाति याति च क्षिप्रं, या संपत् सिन्धुपूरवत् ।
पांसुलायामिव प्राज्ञा—स्तस्यां को नाम रज्यते ॥ १ ॥

विडम्बनाप्रायामेनां राज्यसंपदं त्यक्त्वा निःश्रेयसकरीं शमसाम्राज्यसंपदं श्रये" ।

ध्यात्वेति विध्यातममत्ववह्निः, कृत्वा स्वयं लोचमुपात्तदीक्षः ।
प्रत्येकबुद्धो द्विमुखः सुपर्व—वितीर्णलिङ्गो व्यहरत् पृथिव्याम् ॥ १ ॥

श्रीमदुत्तराध्ययननवमाध्ययने श्रीवीरेणोक्तं, तथाहि—

करकण्डू कलिङ्गेसु, पञ्चालेसु च दुम्मुहो । नमिराया विदेहेसु, गन्धारेसु य नग्गई ॥ १ ॥

इमे चत्वारोऽपि पुष्पोत्तरविमानात्सह च्युताः सहोपात्तव्रताः सहैव मोक्षं प्रापुः । एषां मिथः संलापोऽभूत्, तथाहि—

इमे विहरन्तः क्षितिप्रतिष्ठेऽन्यदाऽऽययुः, तत्र चैकं यक्षचैत्यं चतुर्द्वारमभूत् । तत्र व्यन्तरो मूर्त्तिस्थितः पूर्वाभिमुखोऽभवत् । करकण्डुमुनिस्तत्र पूर्वद्वारा प्रविष्टवान्, अपाचीसंमुखद्वारा द्विमुखश्च विवेश । यक्षो दध्यौ—"साधोः पराङ्मुखः कथं तिष्ठामि?" । इति दक्षिणाभिमुखं मुखं व्यधात् । नमिराजर्षिस्तु यक्षौकसि पश्चिमद्वारा प्राविशत् । तदापि प्राग्वत्तृतीयं वदनं सुरोऽकरोत् । नग्गतिस्तु उत्तरद्वारेण तत्राविशत् । ततोऽपि मुखं यक्षश्चक्रे । इत्थं भक्त्या चतुर्मुखोऽभूत् । अथ करकण्डोः सा रूक्षकण्डूर्देहे तदाऽभ्यभूत् । ततः स कण्डूयनं लात्वा श्रुतिं कण्डूययित्वा तत् संगोपितं । तद्वीक्ष्य द्विमु-

खोऽब्रवीत्—"राज्यादिकं सर्वं त्यक्तं चेत्तदाऽदः किं संचिनोषि?" । इति श्रुत्वा करकण्डुर्यदा नावदत्तदा द्विमुखर्षि नमिः साधुरभ्यधात्—"त्यक्तराज्यादिकार्योऽपि निर्ग्रन्थोऽपि भवान् स्वयमन्यदोषप्रेक्षणलक्षणं कार्यं करोति तदिदानीं निस्सङ्गस्य नोचितं" । तच्छ्रुत्वा नमिं प्रति गतदुर्गतिर्नग्गतिरित्यूचे—"हे मुने! यदि सर्वं विहाय मोक्षायोद्यतोऽसि तदा किमर्थमन्यस्य वृथा निन्दां वितनुषे?" । अथ करकण्डुः प्राह—"मोक्षकाङ्क्षिष्वहितं वारयन् साधुर्निन्दकः कथं कथ्यते? यतः—

या रोषात् परदोषोक्तिः, सा निन्दा खलु कथ्यते । सा तु कस्यापि नो कार्या, मोक्षमार्गानुसारिभिः ॥१॥

हितबुद्ध्या तु या शिक्षा, सा निन्दा नाभिधीयते । अत एव च साऽन्यस्य, कुप्यतोऽपि प्रदीयते ॥२॥

आगमेऽप्युक्तं च—

रुसउ वा परो मा वा, विसं वा परिअत्तउ । भासिअव्वा हिया भासा, सपक्खगुणकारिया ॥ १ ॥"

इति श्रीकरकण्डुसाधुना इमामनुशास्तिमुदितां ते त्रयोऽप्यङ्गीचक्रुः । करकण्डुसाधुना कण्डूयनोपकरणं त्रिविधत्रिविधेन मुक्तं, साधुत्वं स्वीकृतं, तदा कण्डूयनेन देहसत्कारो न विधेयः । द्विमुखो दध्यौ—"मया साधूभूय कण्डूयनं वीक्ष्य स दूषितः, नेदमुचितमद्यप्रभृति, शाम्यमेव ममास्तु" । इत्थं सर्वेऽपि स्वस्वजल्पनं शाम्यरहितमनर्हं मत्वा विशेषेण शाम्यपरा बभूवुः । ततो यथारुचि विजह्रुः । ततः सहैव केवलं प्रापुः ॥

इति प्रत्येकबुद्धानां, चतुर्णां शमशालिनाम् । संप्रदायानुसारेण, चरितं कीर्तितं लघु ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ चतुर्विंशे स्तम्भे एकोनपञ्चाशदधिकत्रिशततमं व्याख्यानम् ३४९ ॥

## ॥ पञ्चाशदधिकत्रिशततमं व्याख्यानम् ३५० ॥

अथ चतुर्थप्रत्येकबुद्धमाह—

अथ नग्गतिसंज्ञस्य, संबुद्धस्याम्रपादपात् । तुर्यप्रत्येकबुद्धस्य, कथां वक्ष्यामि तद्यथा ॥ १ ॥

गान्धारदेशे सिंहरथो नृपः । तस्यैकदा उपायने वक्रशिक्षितौ द्वौ वर्णनीयौ तुरगौ समायातौ । तत्परीक्षार्थमेकमश्वमारुह्य नृपः केलिं गतः । सोऽश्वः सिन्धुपूरवत् गच्छन् द्वादश योजनान्यतिगतः । महारण्ये नृपो नीतः । नृपस्तस्य वल्गामाकृष्याकृष्य निर्विण्णो यत्रामुचत् तत्रैव सोऽपि तस्थौ । तं क्वापि द्रुमे बद्ध्वा फलैः प्राणवृत्तिं व्यधात् । रात्रिवासायैकं गिरिमारूढः । एकं सप्तभूमिकं मन्दिरं प्रेक्ष्य तन्मध्ये प्रविष्टः । तत्रैकां मृगेक्षणामद्राक्षीत् । साऽपि शीघ्रमुत्थायासनं ददौ । ततो नृपेन पृष्टा—"हे सुभगे ! त्वं काऽसि ? एकाकिनी कथमत्र तिष्ठसि ?" । सा प्राह—"अत्र गान्धर्वविवाहेन पूर्वं मामुद्वह, पश्चाद्वृत्तान्तं सर्वं वक्ष्ये" । इति श्रुत्वा स तामुदुवाह । ततः सा स्वां वार्तां जगौ—

हे नृप! अत्रैव भरते क्षितिप्रतिष्ठपुरे जितशत्रुर्भूपः। स चान्यदा चित्रसभां कर्तुकामश्चित्रकारानाहूयैवमवोचत्—"युष्माकं यावन्ति गृहाणि स्युः तावन्मितैर्भागैरियं सभा चित्रयितव्या"। तैस्तथा कृतं। तन्मध्ये एको वृद्धश्चित्रकारोऽसहायः। तस्यैका पुत्री कनकमञ्जरी नाम। सा प्रत्यहं सभायां गत्वा पितुर्भक्तमदात्। सोऽपि भक्तं वीक्ष्य नित्यं बहिर्भुवं गच्छति। अन्येद्युर्भक्तमादाय राजमार्गे साऽऽगता तावद्भूपस्याश्ववारं द्रुतगतिकारकं दृष्ट्वा भीता प्रणष्टा सभायामगात्। अत्रान्तरे सभां द्रष्टुं भूपस्तत्रायातः, स कुट्टिमचित्रितं केकिपिच्छमादातुं करमञ्जसा चिक्षेप। तत्पिच्छं करे नागात्। करभङ्गोऽजायत। तं विलक्षं वीक्ष्य सविलासं विहस्य सोचे—"अधुना मञ्चकश्चतुर्भिः पादैः पूर्णोऽभूत्"। नृपः पप्रच्छ—'कथं?'। निर्बन्धेन पृष्टा प्राह—अद्य चतुष्पथे वाहं शीघ्रं वाहयन्तं मर्त्यमेकमद्राक्षम्, स प्रथमो मूर्खः, स खट्वायामाद्यः पादः। यतः—

राजमार्गो हि बालस्त्री-वृद्धाद्यैः संकुलो भवेत्। इति तत्र जवेनाश्वान्, वाहयन्ति न धीधनाः॥१॥

द्वितीयस्तु नृपोऽविज्ञातपरवेदनोऽन्येषां यूनां तुल्यं भागं चित्रयितुं दुःस्थनिष्पुत्रस्य मम पितुरदात् सः। तृतीयो मत्पिता, यतो यदाहं भोजनमानयामि तदैव देहचिन्तायै स गच्छति, न च पूर्वं न वा पश्चात्। चतुर्थस्तु भवान्, यतः कुट्टिमे केकी कथं भवति ? अतः स तुर्यः पादः"। इत्यादिवाक्यानि सत्यानि मत्वा भूपो दध्यौ—"एनां पाणौ कृत्वा स्वं जनुः सफलं करोमि"। ततो नृपाज्ञया मन्त्रिणा तत्पिताऽभ्यर्थितः, हृष्टश्चित्रकृत् नृपाय स्वपुत्रीं ददौ। अथान्यदा स्ववारकदिने दास्या समं राज्ञो

वासवेश्मनि साऽऽययौ । नृपे सुप्ते पूर्वसंकेतिता दासी तामेवं जगौ—"हे स्वामिनि ! त्वमद्भुतामेकां कथां ब्रूहि" । सा प्रोचे—"राज्ञि निद्राणे कथयिष्यामि" । नृपोऽपि तद्वाक्श्रवणलालसोऽलिकनिद्रया सुष्वाप । ततः सा तामवदत्—

एकत्र देवकुले एककरोच्छ्रये चतुर्हस्तमितं देवं पाषाणमयमेक इभ्यो न्यधत्त" । इति श्रुत्वा दास्या पृष्टम्—"एकहस्ते सुरगृहे चतुर्हस्तः सुरः कथं मातीति संशयं छिन्धि" । देवी स्माह—"अधुना निद्राऽऽयाति, कल्ये वक्ष्यामि" । ततो द्वितीयेऽपि दिने तदर्थश्रवणार्थं तस्या एव वारकमदात् । तत्रैव राज्ञि सुप्ते दास्या पृष्टा तदुत्तरमवदत्—"देवः चतुर्भुजः सोऽभूत्, न तु तन्मानभूघनः" । अथान्यामाख्याहीति तयोदिता राज्ञी जगौ—

"क्वापि वने रक्ताशोकद्रुमोऽभवत् शाखाशताकुलस्यापि तस्य छाया नाभवत् ?" । राज्ञी आख्यत्—"तन्द्राकुलाऽस्मि, कल्ये वक्ष्यामि" । साऽऽह "कथं तस्य छाया नाभवत्" । नृपस्तृतीयेऽह्नि तस्यै ददौ वारकं । प्राग्वद्दास्या पृष्टा सा प्रोचे—तस्य तरोश्छाया कूपेऽधस्तादभूत्, ऊर्ध्वं तु नाभूत्" । ईदृशै-राख्यानैः षण्मासान् यावत्सा नृपं व्यामोहयत् । तेनान्या राज्यः कुपितास्तस्याश्छिद्राणि मार्गयन्ति । अथ सा प्रत्यहमेकान्तेऽपवरकं पिधाय स्वमूलवस्त्राणि परिधाय वस्त्रभूषा नृपार्पिता मुक्त्वाऽऽत्मानं निन्दति—"रे जीव ! मा मदं कार्षीः, ऋद्धिगौरवं मा विधाः, नृपः कदाचित्स्वगृहतः कुत्सिताङ्गीं शुनीमिव निष्कासयिष्यति, अतोऽहङ्कारं मा कुरु" । इति तच्चेष्टितं वीक्ष्यान्या राज्यो नृपं प्राह—

"हे स्वामिन्! सा कारुकसुता भवन्मान्या प्रत्यहं कार्मणं कुरुते, प्रमादं मुक्त्वा पश्य, अन्यथा तन्मोहितस्त्वं निष्कार्यो भविष्यसि"। ततो नृपस्तद्वीक्षितुं स्वयं तत्र गतः स्वमनुशासत्यास्तस्याः प्रागुक्तां गिरं शुश्राव। ततस्तुष्टो नृपोऽध्यासीत्—

मदोन्मत्ता भवन्त्यन्ये, स्वल्पायामपि संपदि। असौ तु संपदुत्कर्षं, संप्राप्तापि न माद्यति ॥ १ ॥

राज्ञ्यस्त्वेता मत्सरात् गुणमपि दोषं पश्यन्ति। उक्तं च—

जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं, शूरे निर्घृणता ऋजौ विमतिता दैन्यं प्रियालापिनि। तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे, तत्को नाम गुणो भवेत्स गुणिनो यो दुर्जनैर्नाङ्कितः ॥१॥

इति ध्यात्वा भूपस्तां पट्टराज्ञीं चकार। अथान्यदा नृपः पट्टराज्ञ्या समं श्राद्धधर्ममुपाददे। ततः क्रमात्सा चित्रकृत्सुताऽविराधितधर्मा स्वर्गं ययौ। स्वर्गाच्च्युत्वा सा वैताढ्ये दृढशक्तिनृपस्य पुत्री जज्ञे। तां प्राप्तयौवनां रूपाढ्यां प्रेक्ष्य मोहं गतो वासवखेचरो हृत्वाऽत्र गिरावानैषीत्। विद्ययाऽमुं प्रासादं विधाय यावदुद्वोढुमुद्यतस्तावत्तस्या अग्रजोऽत्रागतः द्वयोर्युद्धं जातं, मिथः प्रहारेण सद्यो यमातिथी अभूतां। तदा भ्रातृशुचाऽऽकुला चिरं रुरोद सा। अत्रान्तरे वानव्यन्तर एको देव एत्योचे—"वत्से! त्वं किं रोदिषि?"। इतः कन्यापिता इहाययौ, तावत्कन्यां द्राक् शवरूपां सुरोऽकरोत्। दृढशक्तिश्च सुतां सुतं च मृतौ वीक्ष्योद्विग्नः संसारमसारं मत्वा पञ्चमुष्टिलोचं चकार। तदा स देवो मायां हृत्वा तत्पुत्र्या समं

श्रमणं ननाम । ततः कनकमालया भ्रातृस्वरूपं प्रोक्तं । तदा मुनिः पप्रच्छ—"मयाऽधुना शवत्रयं कथं दृष्टं ?" । अथ सुरोऽवादीत्—"मयाऽसौ माया तव दर्शिता" । मुनिः स्माह—"कुतो हेतोः ?" । देवोऽवादीत्—"सा चित्रकृत्पुत्री जितशत्रुपत्नी परमश्राविकाऽभवत् । तया स्वपिता पञ्चनमस्कारादिना निर्यामितो मृतो वानव्यन्तरसुरोऽभवत् । सोऽहमवधिना शोकाकुलामिमां वीक्ष्य प्राग्भवसुताप्रेम्णाऽऽश्वासितवान् । त्वामायान्तं वीक्ष्य मया ध्यातं पित्रा सहासौ गमिष्यतीति मे विरहो भावी, अतो निश्चेष्टा कृता, त्वां निःस्पृहं प्रेक्ष्य च मया माया संहृता । हे मुने ! तन्मच्चेष्टितं सोढव्यं" । मुनिः स्माह—"धर्महेतुत्वेन त्वमुपकर्ताऽसि" इत्युक्त्वा मुनिरन्यत्र विजहार । साऽपि जातिस्मृत्या प्राग्भवपितरं ज्ञात्वा स्माह—"तात ! मम को वरो भावी ?" । सुरोऽवधिना विज्ञाय प्रोचे—"प्राग्भवपतिः स्वर्गाच्च्युतोऽधुना सिंहनृपो जातोऽस्ति, स वाजिनाऽपहृत इहागन्ता, स तव प्रियो भावी, तत उद्वेगं विहाय तिष्ठ" इति श्रुत्वा नृपो जातिं सस्मार, गतसंशयः सुखं मासमेकं तत्र तस्थौ । ततः पत्नी प्राह—"स्वामिन् ! तव पुरं दूरेऽस्ति, मदन्तिकात् प्रज्ञप्तिं विद्यां गृहाण" । ततो राजा तां विधिपूर्वमसाधयत् । ततो व्योममार्गेण स्वपुरं गतः । पुनस्तत्र नगे आयासीत् । एवं मुहुर्मुहुः शैले व्रजन्तं नृपं प्रजा नगेऽस्मिन् गतिरस्येति नगगतिरिति नामोचिरे । तच्चित्रकृद्देववचसा कनकमाला तत्रैव गिरौ तस्थौ । नगगतिना तत्र नव्यं पुरं वासितम् ।

अथ स कार्तिकराकायां सैन्यसंयुतो नरेन्द्रो नगराद्राजपाटिकायै विनिर्ययौ। तदा ताम्रपल्लवं मञ्जरीपुञ्जपिञ्जरं छत्राकारं सदाफलमेकमाम्रमद्राक्षीत्। तस्य कान्तस्य चूतस्य मङ्गलार्थमेकां मञ्जरीं नृप आददे। ततः सर्वे सैन्यलोकाः पत्रपल्लवमञ्जरीरादाय दारुशेषं तं वितेनिरे। ततः क्षणान्तरे नृपस्तत्रायातः। स आम्रः कुत्रेति नृपो मन्त्रिणं पप्रच्छ। मन्त्रिणा तस्मिन् काष्ठशेषे प्रदर्शिते पुनरपृच्छत्—"ईदृशोऽसौ कथमभूत्?"। सचिवोऽवक्—"स्वामिन्! अस्य महातरोः पूर्वं मञ्जर्येका युष्माभिर्जगृहे, ततः सैनिकाः सर्वे पत्रपुष्पफलादिकं गृहीत्वाऽश्रीकं धनिनं तस्करा इव चक्रुः"। तदाकर्ण्य नृपो दध्यौ—"अहो! श्रियां चञ्चलत्वं! यत्तादृशोऽप्यसावाम्रः क्षणान्निःश्रीकतां गतः। यतः—

यदेव तुष्टिकृत् पूर्वं, स्यात्तदेव क्षणान्तरे। जायतेऽनीदृशं वान्ति-वमितं भोजनं यथा ॥ १ ॥
यथा हि बुद्बुदाटोपः, सन्ध्यारागश्च न स्थिरः। संपदोऽपि तथा सर्वा, न स्थिरा इति निश्चितम् ॥ २ ॥

एवं विमृश्याहृतसाधुधर्मः, प्रत्येकबुद्धश्चतुरश्चतुर्थः।
गान्धारराड् नग्गतिनामधेयः, पृथ्व्यां व्यहार्षीत्सुरदत्तवेषः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ चतुर्विंशे स्तम्भे
पञ्चाशदधिकत्रिशततमं व्याख्यानम् ३५० ॥

## एकपञ्चाशदधिकत्रिशततमं व्याख्यानम् ३५१ ॥

अथ केचिन्नरा लज्जातो गृहीतं संयमं न त्यजन्तीत्याह—

लज्जातो गृहीतां दीक्षां, निर्वहन्ति(ति) यदा नराः(रः) । तदा सत्त्वेषु योग्यात्मा, लदयते भवदेववत् ॥१॥

स्पष्टार्थः । अत्रार्थसमर्थनाय सम्प्रदायागतः संबन्धश्चायम्—

सुग्रामनाम्नि ग्रामे राष्ट्रकूटान्वय आर्यवान् नाम कौटुम्बिकोऽस्ति । तस्य पत्नी रेवती नाम प्रियाऽस्ति । तयोर्भवदत्तभवदेवौ तनयावभूतां । भवदत्तो भवविरक्तो वैराग्येण सुस्थिताचार्यसमीपे प्रव्रज्यामाददे । सूरिभिः समं विहरन् श्रुतपारगो जातः । एकदा कश्चित् साधुः सूरीनापृच्छ्य स्वग्रामे निजबन्धुं व्रतयितुं जगाम । कनीयान् बन्धुर्विवाहकौतुकव्यग्रो ज्येष्ठबान्धवमुनिमायातमपि नाज्ञासीत् । तदा विलक्षवदनो गुर्वन्तिके समागत्य गुरोः पुरो बन्धोः स्वरूपं न्यवेदयत् । तच्छ्रुत्वा भवदत्तोऽवदत्—"अहो ! भवद्बन्धोः काठिन्यं ! येन त्वं न सत्कृतः" । ततस्तेनाभाणि—"तर्हि त्वं निजानुजं दीक्षय" । तदा भवदत्तः प्राह—"यदा गुरवस्तत्र देशे विहरिष्यन्ति तदा कौतुकं दर्शयिष्यते" अन्यदा गुरवस्तत्र जग्मुः । तदानीं गुरोरनुज्ञया मुनिर्बन्धुगृहे जगाम । तदा भवदेवो नागदत्तस्य कन्यां नागिलां नामोपयेमे । भवदत्तो मुनिर्बन्धुगृहे गत्वा धर्मलाभं दत्तवान् । तैः स्वजनैः प्रासुकान्नैः प्रतिलाभितः । अथ भवदेवः स्वकुलाचारत्वात् प्रेयस्या वक्षसि श्रीचन्दनरसेन स्वयमङ्गरागं चक्रे । तदा भ्रातरमागतमश्रु-

णोत्। ततस्तामर्धमण्डितां मुक्त्वा भ्रातरं वन्दितुमागात्। मुनिरपि गुर्वन्तिकं गच्छन् भ्रातुः करे घृत-
पात्रं दत्तवान्। दूरं गत्वा स्वजना मुनिं नत्वा नत्वा स्वस्थाने जग्मुः। भद्रात्मा भवदेवस्तु बाल्यक्रीडा-
दिवार्ताभिः प्रवर्तकं मुनिमनुजग्मिवान्। सबान्धवं तं मुनिं दृष्ट्वा ते मुनयो विस्मिताः प्रशशंसुः—“यो
भवदेव एवंविधे वयसि प्रव्रजति”। ततो भवदत्तो गुरुं नत्वा व्यज्ञपयत्—“ममैष बन्धुर्भवदन्तिके
दीक्षार्थमागतोऽस्ति”। गुरुणा पृष्टः—“त्वं किं व्रतार्थ्यसि?”। तेन चिन्तितं—“ममाग्रजो मा मृषा-
भाषी भवतु”। इति ध्यात्वा तेनोक्तं—“भगवन्नहं दीक्षार्थमागतोऽस्मि”। ततो गुरुणा दीक्षितः।
स्वजनास्तं गृहीतव्रतं ज्ञात्वा प्रत्यावर्तन्त। अथ बन्धूपरोधेन व्रतं पालयति सः, परं नागिलां हृदयान्न
मुञ्चति योगीन्द्रः परमात्मानमिव। ततः कियद्वर्षानन्तरं भवदत्तो मुनिरनशनेन कालं कृत्वा सौधर्मे
सुरोऽभवत्। ततो भवदेवोऽचिन्तयत्—“अहो भवदत्ते स्वर्गते किं मे व्रतायासेन! धिग्मम जीवितं,
यतः प्राणप्रियामर्धमण्डितां त्यक्त्वाऽऽगतोऽस्मि, अथ तत्र यामि”। इति विचिन्त्य संयमाद्भ्रष्टमनाः
स्वनगरकाननचैत्येऽगात्। तत्र चैत्ये एकया स्थविरया साकं किञ्चिद्वृद्धामेकां स्त्रियं दृष्ट्वा तां पप्रच्छ—
“हे वृद्धे! अत्र नगरे भवदेवप्रियाया नागिलायाः कुशलमस्ति?”। सैव नागिला तं भवदेवं विज्ञाय
बभाषे—“भो मुने! त्वं नागिलापतिरसि?”। तेनोक्तं—“स एवाहं, भ्रातरि स्वर्गते भोगोत्सुक इहा-
गतोऽस्मि, अतस्त्वया तस्याः स्वरूपं वाच्यं”। ततः सा प्राह—“भो महात्मन्! साऽहं नागिला, मम

वयसि ( शरीरे ) किं लावण्यं पश्यसि?" । इत्यादिबहूक्तोऽपि यावन्न विरमति तावन्नागिलायाः सख्या दारकः समागत्य प्राह—"हे मातः! त्वं भाजनं धारय, यतोऽहं भुक्तं पायसं वमिष्यामि, ममान्यत्र भोजनायामन्त्रणमायातमस्ति, तेनाहं तत्र गत्वाऽशनं कृत्वा यदा पुनर्बुभुक्षितो भविष्यामि तदाऽहं वान्तं भोक्ष्ये"। इति श्रुत्वा सा वृद्धा जगाद—"हे पुत्र! शुनोऽप्यधिकं जुगुप्सनीयं तदेवं न युक्तं"। तच्छ्रुत्वा भवदेवोऽप्याह—"हे बटो! वान्ताशीस्त्वं कुर्कुरादपि निकृष्टो भविष्यसि"। तदानीं नागिला प्राह—"हे महात्मन्! त्वमेवं जानन्नपि पूर्वं वान्तां मामभिलषन् किं न लज्जसे? दुर्गन्धे मम देहे किं पश्यसि?"। इत्यादिनागिलागिरा प्रबुद्धो भवदेवो मुनिः पुनरायातसंवेगः स्वगुरोः पार्श्वे समागत्य पुनर्दीक्षां समादाय गुरुणोक्तं तपो विधाय प्रान्तेऽनशनेन विपद्य सौधर्मदिवि सुरो बभूव। ततश्च्युत्वा शिवकुमारो जातः। तत्र पितृभ्यां दीक्षायामननुज्ञातो गृहे भावमुनिः षष्ठपारणके आचाम्लं करोति। द्वादशवर्षान्ते भावनिर्व्यूढसंयमो मृत्वा ब्रह्मदेवलोकेऽद्भुतसौख्यकान्तिमान् विद्युन्माली देवो बभूवेति ॥

लज्जातो गृहीता दीक्षा, बहुवर्षाणि द्रव्यतः। पुनः स्त्रीवचसा बुद्धः, शुद्धव्रतधुरां दधौ ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसंग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ चतुर्विंशे स्तम्भे
एकपञ्चाशदधिकत्रिशततमं व्याख्यानम् ३५१ ॥

## द्विपञ्चाशदधिकत्रिशततमं व्याख्यानम् ३५२ ॥

अथ जम्बूस्वामिचरितं लिख्यते—

गणाधिपेऽथ संप्राप्ते, पञ्चमे पञ्चमीं गतिम् । जम्बूर्विकासयामास, शासनं पापनाशनम् ॥ १ ॥

स्पष्टार्थः । ज्ञातं चेदम्—

वैभारगिरावेकदा श्रीवीरं समवसृतं श्रुत्वा श्रेणिकः सर्वर्द्ध्या तं प्रणम्य देशनामशृणोत् । तत्र कोऽपि सुरः सचतुर्भार्यः कान्त्याऽतिभासुरः सभायां दृष्टः । तदा श्रीजिनं नृपः पप्रच्छ—"देवेष्वयं देवो दीप्यतेतरां, तत्र को हेतुः ?" । प्रभुः प्राह—

तत्रैव देशे प्राग्भवदत्तभवदेवाह्वौ सहोदरौ बभूवतुः । अग्रजोपरोधादर्धमण्डितां नागिला मुक्त्वा व्रतं भवदेवोऽग्रहीत् । भग्नपरिणामः पुनर्नागिलयैव स्थिरीकृतः । क्रमान्मृत्वा सौधर्मेऽभवत् । इतश्च भवदत्तजीवः स्वर्गतश्च्युत्वा विदेहे पुण्डरीकिण्यां पुर्यां वज्रदत्तचक्रियशोधराप्रिययोः सुतोऽभवत् । एकदा यौवने स्वभार्याभिः सह सौधमूर्धानमधिरूढो विचित्रवर्णान्विताभ्राणि व्योम्नि वारिदं चावेक्ष्य विस्मयं प्राप । तत्क्षणेन नखरमरुता तत्सर्वं विलयं निन्ये । तदा दध्यौ—"यथाऽयं वारिदस्तथा सर्वं यौवनधनादिसौन्दर्यमनित्यम्" । इति ध्यात्वा गुरुभ्यः प्राप्तव्रतोऽवधिज्ञानी धरातले विजहार ।

अथ तत्रैव विजये वीतशोकपुरे भवदेवः सौधर्मतश्च्युतः शिवकुमारनामा राजपुत्रोऽभवत् । स एकदा

गवाक्षस्थः प्राग्भववन्धुं मुनिं वीक्ष्य वीक्ष्य मुमुदे । तदभ्यर्णे गत्वा स स्नेहकारणं पप्रच्छ । ज्ञानिना सर्वं पूर्वस्वरूपं प्रोक्तं । तच्छ्रुत्वा व्रतेच्छुः पित्रोरनुज्ञामप्राप्तः खिन्नः पौषधागारे षष्ठस्य पारणकमाचाम्लेन व्यधात् ।

इति द्वादश वर्षाणि, भूत्वा भावतो व्रती । विद्युन्मालीत्ययं ब्रह्म—लोकेऽभूद्भासुरः सुरः ॥ १ ॥

भूयोऽपि श्रेणिकेन पृष्टः स्वामी भाविस्वरूपं तस्य प्राह—"अतो दिनात्सप्तमे दिने एष सुरश्च्युत्वा—

अत्रैव पुरि धारिण्या—मृषभश्रेष्ठिनः सुतः । जम्बूनामावसर्पिण्यां, भावी चरमकेवली ॥ १ ॥

अथ स देवः शुभक्षणे धारिणीकुक्षितः सुतत्वेनोत्पन्नः । तस्य पितरौ जम्बूरिति ख्यातिं चक्रतुः । अथ स यौवनोन्मुखो जातः । एकदा वैभारगिरौ श्रीसुधर्मास्वामी समवसृतः । तं नन्तुं जम्बूकुमारो गतवान् । यथास्थानं स्थित्वा गुरोर्गिरमुज्ज्वलां पीत्वा निजधाम्नि समागच्छन् गोपुरे शत्रुमारणार्थं कृतचक्रयंत्रशिलादीन् वीक्ष्य दध्यौ—"कदाचिदेतन्मारणचक्रादिकं ममोपरि पतति तदाऽकृतधर्माऽहं प्रेत्य गच्छामि । अतो गणभृत्पार्श्वे प्रथमं यावज्जीवं ब्रह्मचर्यं व्याघुट्य गृह्णामि" । ततश्चिन्तितं सफलं कृत्वा स्वधाम जगाम, पितरौ नत्वा व्यजिज्ञपत्—"अहं युष्मन्निदेशेन दीक्षां श्रीसुधर्मतो गृह्णामि" इतिकालकूटच्छटानिभां गिरमाकर्ण्य पितरावपत्यस्नेहमोहितौ प्रव्रज्यादुष्करत्वादिवर्णनं चक्रतुः । अनेकप्रत्युत्तरदानेन तेन तौ निरुत्तरीकृतौ पुनरूचतुः—"हे पुत्र ! पूर्वं त्वदर्थं निमन्त्रिताष्टकन्यापाणिग्रहणं कृत्वाऽस्मन्मनोरथं पूरय" । वधूनां प्रेमबन्धबद्धः कायं प्रयास्यतीति ताभ्यां निश्चितम् । अथ जम्बूर्म-

हीयसा महेन लग्नदिनेऽष्टौ कन्याः परिणीतवान् । प्रथमं तासां स्वमनोरथो ज्ञापितः । तदा ता ऊचुः—

गतिरत्राप्यमुत्रापि, जम्बूस्वामी एव नः । कुमुदिन्यः किमिच्छन्ति, विनेन्दुमपरं वरम् ॥ १ ॥

अथ गतस्पृहो वासगृहोत्सङ्गे स्मरार्ताभिस्ताभिः सममनार्तोऽयं वार्तापरस्तस्थौ । तत्र स्त्रीभिरष्टौ कथाः स्नेहाङ्किताः प्रकाशिताः । जम्बूस्वामिना तदुत्तररूपा वैराग्याङ्किता अष्टौ कथाः प्रदर्शिताः । तत्प्रतिबोधनसमये पञ्चशतीचौरयुतः प्रभवो राजपुत्रोऽवस्वापिनीतालोद्घाटिनीविद्याप्रभावेण तद्गृहं मुष्णन् देवतया सपरिकरः स्तम्भितः । तथास्थितश्चाह मनसि—"अनेन महात्मना स्तम्भितः" इति संचिन्त्य जम्बूनाम्नो निजपत्नीरुत्तरप्रत्युत्तरतया प्रतिबोधयतो वचनमाकर्ण्य तं प्रत्याह—"भो महात्मन्! निवृत्तोऽहमितो दुर्व्यवसितात्, गृहाणेमे द्वे मद्विद्ये, देहि मे स्तम्भिनीमात्मविद्याम्" । जम्बूः प्राह—

"यद्विहाय गृहद्वन्द्व—मद्वन्द्वसुखहेतवे । सुधर्मस्वामिनः पार्श्वे, ग्रहीतास्मि प्रगे व्रतम् ॥ १ ॥

हे भद्र! न मया स्तम्भितस्त्वं, किं तु भक्त्या कयाचिद्देवतया, न च भवतो भववर्धनं विद्याद्वयमाददामि, गृहाणेमां समस्तार्थसाधनीं सर्वज्ञोपज्ञां ज्ञानादिविद्याम्" । इति कथयित्वा तस्य चमत्कारकारिणी धर्मकथा विस्तरत उक्ता । प्रभवो जगाद—"हे भद्र! सुकृतप्राप्यसंयोगान् भोगान् किं भवान्न भुङ्क्ते?" ।

जम्बूर्जगाद किंपाक—फलानीवान्तदारुणान् । आपाते विषयान् रम्यान्, को नु भुञ्जीत कोविदः ॥१॥

अत्र मधुबिन्दुदृष्टान्तः । पुनः प्रभवः प्राह—"तव पुत्रोत्पत्तौ दीक्षाग्रहणं युज्यते, अपुत्रिणो न स्वर्गः"। स्मित्वा जम्बूर्जगौ—

गर्ताशूकरगोधाद्या, बहुपुत्रान्वितास्ततः । यास्यन्ति स्वर्गं नो चाढ्या—ब्रह्मचर्यव्रतो जनाः ॥ १ ॥

अत्रार्थे महेश्वरवणिक्संबन्धः । ततः समुद्रश्रीः प्राह—"हे नाथ ! पुण्यलभ्यामिमां श्रियं परित्यज्य कथं निर्ग्रन्थत्वं त्वमीहसे ?"। जम्बूः स्माह—"चपलावच्चञ्चलासु श्रीषु को विश्वासः? हे प्रेयसि ! तदिमां विमुच्य स्वयं प्रव्रजिष्यामि"। ततः पद्मश्रियाऽवादि—"षड्दर्शनिनां दानादिभिरुपकारी गृहिणां धर्म एव श्रेष्ठः, यतः—

हितं भवद्वयस्यापि, धर्ममेतमगारिणाम् । पालयन्ति नरा धीराः, त्यजन्ति तु ततः परे ॥ १ ॥

जम्बूः प्राह—"सावद्यसेवनात् कथं गृहिधर्मः श्रेष्ठः ? यतः—

मेरुसर्षपयोः प्रद्यो–तनखद्योतपोतयोः । अन्तरं यादृशं तादृ–गनगारिगृहस्थयोः" ॥ १ ॥

ततः पद्मसेना प्राह—"रम्भागर्भसहोदरं तव वपुः व्रतकष्टानां पुष्टानां नोचितम्"।

उवाच जम्बूरेतस्य, कृतघ्नस्य विनाशिनः । का नाम वपुषः प्रीतिः, प्रेक्षावद्भिर्विधीयताम् ॥ १ ॥

अथोचे कनकसेना—"पूर्वजिनैरपि भुक्तराज्यैर्भोगानासेव्य पश्चाद्व्रतमाददे, त्वं तु नवोऽद्य शिवंगमी जम्बुनोचेऽवधिज्ञाना, जिनास्ते कालवेदिनः । स्पर्धा का नाम तैः सार्धं, रासभानां गजैरिव ॥ १ ॥

अचिन्तितः समभ्येत्य, महामूल्यानि मूलतः । जन्तुजीवितरत्नानि, हरते कालतस्करः ॥ २ ॥

ततः शिवपुरं याति, गृहीतव्रतशम्बलः । न यत्र विद्यते काल-दस्योरस्य भयोदयः ॥ ३ ॥

नभःसेना प्राह–"हे प्राणेश ! इदं प्रत्यक्षं स्वाधीनं च संबन्धिसौख्यं प्राप्तं परित्यज्य निर्देहिकं सौख्यं किं समीहसे ?" । जम्बूरुवाच—

अनिशं क्षुत्तृषामूत्र—विष्ठारोगादिबाधिते । इष्टवस्तुवियोगाद्यैः, किं सुखं मानवे भवे ॥ १ ॥

कनकश्रीरुवाच—प्रत्यक्षमेतत्सुखं प्राप्य परोक्षस्य कथा वृथा भोगप्राप्त्यर्थं व्रतं कुर्वीत, तेषु प्राप्तेषु तदाचरणेन किं ? पक्वेषु धान्येषु कोऽरघट्टं वाहयेत् ?" ।

व्याजहार कुमारस्ते, मतिर्नाञ्चति चारुताम् । अदीर्घदर्शिता स्वस्य, परस्य च हिताय न ॥ १ ॥

स्वर्गापवर्गदं भोगै—र्मानुष्यं प्रक्षयन्ति ये । आयतौ जायते दुःखं, तेषां नीविभुजामिव ॥ २ ॥

सत्वरं गत्वरं प्राप्य, मानुष्यं तदिदं प्रिये । अहं तथा विधास्यामि, यथा नानुशयं भजे ॥ ३ ॥

कनकवती प्राह–"एतत्सत्यं करोषि त्वं यत् हस्तगतं रसं हित्वा कूर्परप्रान्तं विलेढि" ।

जम्बूर्जगाद गौराङ्गि, भोगा हस्तगता अपि । न सन्ति भूतवत्तेषु, स्वाधीनत्वं भ्रमस्ततः ॥ १ ॥

मुञ्चन्ति भोगसंयोगं, स्वयमेव विवेकिनः । अमुञ्चन्तोऽपि मुच्यन्ते, तैरेव त्वविवेकिनः ॥ २ ॥"

जयश्रीर्व्याजहार—"हे स्वामिन् ! साधु साधु त्वयोदितं, परं च परोपकारी त्वमुत्तमं धर्ममङ्गीकुरुषे, ततो भोगाननिछन्नपि त्वमुपकारायास्मान् भज, यतो वृक्षा जनतापोपशान्तये तापं सहन्ते ।

यथा घनस्य संयोगात्, क्षारवारि सुधायते । भोगसार्थस्तथाऽस्माकं, श्रेयसे तव योगतः" ॥ १ ॥

कुमारः प्राह—"क्षणकाल सुक्खा बहुकाल दुक्खा" इत्यादिपरमाप्तवाक्यसिक्तं मम मानसं, न तत्र श्रेयस्त्वं किमपि वर्ततेऽतो हे कमललोचने नात्र कदाग्रहः शुभायेति ।

"कुमर्त्येषु कुदेवेषु, तिर्यक्षु नरकेषु यत् । प्राप्यते भोगिभिर्दुःखं, सर्वं वेत्ति त्रिकालवित् ॥ १ ॥"

इति तस्य गिरं श्रुत्वा वैराग्यरञ्जिताः सद्यः कृताञ्जलयः पतिमभ्यधुः—"हे देव! योऽध्वा त्वया श्रितः स एवास्माभिरपि सेव्यः" । अथ प्रभवो दध्यौ—"अहो! अस्य महानुभावस्य विवेकिता परोपकारिता च, मम पुनरहो! पापिष्ठता मूढता च । अयं हि महात्मा स्वाधीनामपि श्रियं त्यजति तामप्यहं लातुमभिलषामि, न च प्राप्नोमि, धिग् मामधमम्" इति जातवैराग्यः सपरिकरः प्रभवः प्राह—"भो भो महात्मन्! आदिश, किं मया कर्तव्यं?" । जम्बूः स्माह—"यदहं करोमि तत्" ।

अथ कुमारः प्रभाते सङ्घचैत्येष्वर्चनं कृत्वा स्वजनान् संमान्य स्नानचन्दनचर्चितः सितक्षौमधरः सर्वाङ्गीणाभरणभासुरः नृसहस्रेणोदस्तां शिबिकामधिरूढवान् । दानैर्दीनादीनानन्दयन् तूर्यैर्मुखरिताम्बरोऽनादृतेन देवेन कृतनिष्क्रमणोत्सवोऽष्टाभिर्वधूभिर्वृतः वधूपितृमातृभिर्युतः स्वजननीजनकाभ्यां सहितः पञ्चशतीतस्करान्वितेन प्रभवेण सार्धं श्रीसुधर्मपादपावनं वनमाजगाम । वाहनात्समुत्तीर्य गुरुं नत्वा व्यजिज्ञपत्—"हे नाथ! कुटुम्बयुतं मां दीक्षया तपस्यया सनाथय" । स्वामी निजपाणिना तं सपरिच्छदं दीक्षयामास । तदा गणेशेन प्रभवमुनिस्तस्य जम्बूमुनीशस्य शिष्यतयाऽर्पितः ।

गते विंशतिहायने, ततः श्रीवीरनिर्वृतेः । जम्बूस्वामी गणस्वामी, सुधर्मस्वामिना कृतः ॥ १ ॥
वत्सराणां चतुःषष्टौ, गतायां वीरनिर्वृतेः । जम्बूस्वामी व्यधाज्जन्ना—धिपं श्रीप्रभवं ततः ॥ २ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ चतुर्विंशे स्तम्भे
द्विपञ्चाशदधिकत्रिशततमं व्याख्यानम् ३५२ ॥

---

## त्रिपञ्चाशदधिकत्रिशततमं व्याख्यानम् ३५३ ॥

अथ भाववन्दनफलमाह—

स्वस्थानस्थोऽपि सद्भावात्, साम्बः श्रीकृष्णनन्दनः । श्रीनेमिवन्दनात्प्राप, फलं मुक्तिफलप्रदम् ॥१॥

कण्ठ्यः । तथाहि–द्वारिकायां श्रीकृष्णस्त्रिखण्डाधिपः । तस्य रुक्मिण्यादयः वहवः पत्न्योऽभवन् । अन्येद्युः रुक्मिण्या स्वप्ने लक्ष्वृषभशालिनि विमाने स्वं निषण्णं दृष्ट्वा मुरारये कथितं । कृष्णेन तव पुत्रो भविष्यतीत्युक्तं । तद्वाक्यं रुक्मिण्या सत्यभामायै ज्ञापितं । सा भामा रुषाऽरुणा गत्वा स्वाम्यग्रे जगाद—"मयाऽपि हस्तिमल्लोऽद्य स्वप्ने दृष्टः" । ततो भूपस्तदिङ्गिताकारैः कूटं मत्वाऽऽह–"भो प्रिये ! त्वं किं खिद्यसे परसंपदं भाविनीं श्रुत्वा ?" । साऽऽह"मद्वाक्यमन्वर्थमेव" । ततस्तयोः सपत्न्योर्मिथो विवादोऽभूत् यस्याः पुत्रः प्राक् परिणयति तस्यै अन्यया स्वमस्तकस्था वेणी छित्त्वाऽर्पणीया । तत्र

साक्षिणः कृताः। दैवाद्द्वे अपि गर्भं दधतुः। क्रमात् रुक्मिण्या जनिते पुत्रे प्रद्योतनत्वात् तस्य प्रद्युम्न इति नाम दत्तम्। सत्यभामाया अपरदिने पुत्रे प्रसूते तस्य भानुरिति नामाभूत्। इतो धूमकेतुरसुरो रुक्मिण्या गृहेऽभ्येत्य बालमर्भकं गृहीत्वा वैताढ्यमभ्यगात्। तत्र टङ्कशिलायामुपरि तं मुक्त्वा देवो गतः। इतस्तत्रागतः कालसंवरः खगस्तं संगृह्य स्वपत्न्यै ददौ पुत्रत्वेन स्थापितः। इतो नारदः कृष्णं पुत्रवियोगार्दितं मत्वा श्रीसीमन्धरपार्श्वे गतः। तत्र प्रद्युम्नस्थितिस्वरूपं धूमकेतुनाऽपहरणादिकं जिनेन सर्वं प्रोक्तं। तच्छ्रुत्वा नारदः कृष्णरुक्मिणीपार्श्वेऽभ्येत्य पुत्रवृत्तमुक्त्वा पुनरवक्—"प्राग्भवे रुक्मिण्या मयूर्यण्डकानां वियोगः षोडश प्रहरान् यावत् कृतः, तेन कर्मणा षोडशवर्षप्रान्ते पुत्रो मिलिष्यति" ततो हृष्टाऽभूत्। इतः स प्रद्युम्नो यौवनं प्राप। एकदा खेचरपत्नी कनकमाला उद्यौवनं कुमारं दृष्ट्वा स्मरातुरा तं जगौ—"भो महाभाग! मया सह भोगान् भुङ्क्ष्व"। श्रुत्वा स दूनोऽवक्—"हे मातर्! नेदं जल्पनं तवार्हं"। साऽऽह—"नाहं तव माता, मत्पतिना क्वचित्त्वं लब्धः, मया त्वं वृक्ष इव वर्धितोऽसि, तेनाहं त्वत्तो भोगफलानि ग्रहीतुकामाऽस्मि, गौरीप्रज्ञप्त्यौ द्वे विद्ये विजयक्षमे त्वं गृहाण"। तेन ओमित्युक्त्वा विद्ये गृहीते। ततस्तयोक्तं—"हे प्राणेश! मद्देहव्याप्तकामतापं निवारय, स्ववाचमन्वर्थां कुरु"। स प्राह—"हे मातर्! विद्यागुरुस्त्वमेवं किं वक्षि?"। एवं जल्पन् प्रद्युम्नः पुराद्बहिरगात्। तदा नखैः स्वदेहं निष्कृपं दीर्त्वा सा बुम्बारवं कृत्वाऽऽह—"भो भो ममात्मजाः! धावत धावत, अयं दुष्टो भोगार्थी मामेवं कदर्थयित्वा गतः"। ततस्ते तत्पृष्ठे युद्धाय प्रवृत्ताः। प्रद्युम्नो विद्यया

तान् जघान। सुतान् हतान् ज्ञात्वा तत्पिता युद्धार्थं निर्ययौ। सोऽपि हेलया जितो बद्धः खगः प्राह—"हे पुत्र! किमेवं मां कदर्थयसि? वद सत्यं"। कुमारो नत्वा जगौ—"हे पितर्! इयं तव पत्नी न वर्या, मया तु वक्तुमपि न शक्यते"। इतोऽकस्मान्नारदस्तत्राभ्येत्य कुमारं प्राह—"तव पितरौ कृष्णरुक्मिण्यौ विद्येते, त्वदपरमातुः भानुपुत्रो यदि प्राक् परिणेष्यति तदा त्वन्मात्रा पणीकृता वेणी दास्यते, केशदानविप्लवेन त्वद्वियोगशुचा च सत्यपि त्वयि एवंविधे पुत्रे रुक्मिणी मरिष्यति"। तदाकर्ण्य हृष्टो विद्यया विमानारूढो नारदयुक् द्वारिकोद्याने समाययौ। सविमानमृषिं बहिर्मुक्त्वा वेषान्तरभृत्स भानूद्वाहार्थमागतां कन्यामपहृत्य नारदोपान्ते मुमोच। कृष्णोद्यानं विद्यया च्युतपुष्पफलं व्यधात्। जलतृणादिकं सर्वं विवाहार्थं मेलितमदृश्यं कृत्वा बहिर्वाहमवाहयत्। ततस्तद्धयजवस्पृहयालुर्भानुः खेलयितुं तमश्वमारूढः, प्रद्युम्नेन विद्यया हयात् पातितः। तदा लोका जहसुः।

अथ प्रद्युम्नो द्विजीभूय वेदादि पठन् कस्यचिदिभ्यस्य हट्टस्थां कुब्जिकां दासीं मुष्टिघातात्सरलां चक्रे। ततस्तया दास्या स भामागृहे नीतः। भामया दासीरूपं तच्छ्लाघां च श्रुत्वा द्विजं नत्वोक्तं—"भो द्विज! रुक्मिणीतो मामधिकसुरूपां कुरु"। सोऽपि जगौ—"त्वं मुण्डितं शिरः कृत्वा जीर्णवासः परिधायेमां विद्यां विजने साधयसि तदा स्वेप्सितं स्यात्"। तया तथा कृतं। ततः प्रद्युम्नो रुक्मिणीगृहे गत्वा कृष्णसिंहासन उपविष्टः। तं वीक्ष्य रुक्मिणी जगौ—

कृष्णं वा कृष्णजातं वा, विना सिंहासनेऽत्र हि। अन्यं पुमांसमासीनं, सहन्ते न हि देवताः ॥ १ ॥

सोऽप्याह—"तपो मेऽतुलं विद्यते, षोडशवर्षप्रान्ते पारणायाहमिहागाम्। तेन त्वं मां पारणं कारय, नो चेन्नामागृहे यास्यामि"। साऽपि पेयां दत्त्वा विज्ञप्तिं जगौ—"हे पूज्यर्षे! मम मन्त्रदेवतया वाग्दत्ताऽस्ति तव षोडशवर्षान्ते पुत्रः समेष्यति, सोऽद्यापि नागतः, मम वाढं पुत्रवियोगोऽस्ति"। स प्राह—"ममापि मातृवियोगोऽस्ति, किं क्रियते? परं शास्त्रशकुनबलेन जानामि स्तोकेन कालेनावयोर्दुःखहानिर्भविष्यति। त्वं तु कृष्णसत्कमोदकान्मत्करे मुञ्च"। साऽऽह—"कृष्णस्यैव ते मोदका जीर्यन्ते, न त्वन्यस्य"। स मुनिर्जगौ—"तपस्विनां किं दुर्जरं स्यात्?"। ततः सा साशङ्का एकैकं मोदकं दत्ते। स च मोदकान् खादं खादं पुनः पुनर्याचते स्म। पात्रं रिक्तीकृतं वीक्ष्य सा जगौ—"मुने! त्वमतीव बलवानसि, यदेतैर्भक्षितैर्न तृप्तोऽसि"।

इतः सत्यभामाया मंत्रं जपन्त्या अग्रेऽभ्येत्य नराः प्रोचुः—"केनचिद्देवेन उद्वाहनार्थमेकीकृता सर्वाद्यादिसामग्री कन्या चापहृता"। तच्छ्रुत्वा विषण्णा सामर्षा भामा केशानयनहेतवे दासीः पटलिकाहस्ताः प्राहिणोत् रुक्मिण्या गृहे। तासां दासीनामेव केशैर्मायासाधुस्तत्पटलिकाः पूरयामास। ताभिः स्वशिरोमुण्डनं न ज्ञातं। प्रद्युम्नेन पश्चात् प्रेषितास्ताः तादृशीर्दृष्ट्वा खिन्ना सती भामा साक्षिणं कृष्णं प्राह—"मम रुक्मिण्याः केशान् दापय"। कृष्णोऽवक्—"प्रथमं त्वमेव मुण्डासि, कथमन्यां विरूपां कर्तुमिच्छसि?"। सा जगौ—"मया हास्येन कृतं"। ततः कृष्णेन रामः प्रेषितः केशानयनार्थं रुक्मिणीगृहे। तत्र प्रद्युम्ननिर्मितं कृष्णं प्रेक्ष्य लज्जां प्राप्तो रामो व्याघुट्यैत्यानुजं प्राह—"रूपद्वयकरणेन त्वयाऽहं

हे पितः" । कृष्णोऽवक् शपथपूर्वं नाहं तत्रागाम् । साऽपि जगौ—"सर्वत्र तवैव चेष्टितं विद्यते" । ततो विलक्षः कृष्णो रुक्मिणीगृहे समेतः । तदा नारदोऽभ्येत्य द्वयोरग्रे जगाद—"येनात्र विहितं कृष्णरूपं स एव भवतोः पुत्रः" । इतो द्रुतं पित्रोश्चरणयुगलं नत्वा प्रद्युम्नः कृताञ्जलिः प्राह—"अहं युवयोरङ्गजो यादवानामपूर्वं कमपि चमत्कारं न दर्शयामि तावन्मौनं कार्यं" । ताभ्यामालिङ्ग्य तद्वाक्यं स्वीकृतं । तदा स्वाम्बां रथारूढां कृत्वा सोऽचलत् । स शङ्खं वादयन् यादवान् क्षोभयामास, जजल्प चेति—

हरामि रुक्मिणीमेष, कृष्णो रक्षतु चेद्बली । अहमेव समर्थोऽस्मि, भंक्तुं वैरिबलं घनम् ॥ १ ॥

इत्यादि जल्पन् पुराद्बहिर्गतः । तदा कृष्णेन ध्यातम्—"नूनमयं कोऽपि मां विप्रतार्य मायावी मम पत्नीमपहृत्य याति, एष मया हन्तव्यः" । इति ध्यात्वा ससैन्यः सायुधस्तत्पृष्ठे गतः ।

प्रद्युम्नश्च हरेः सेनां भंक्त्वा विद्याबलाद्धरिं । सद्यो निरायुधं चक्रे निर्दन्तमिव दन्तिनम् ॥ १ ॥

यावद्विष्णुर्विषण्णोऽभूत्तावदेत्य नारदस्तस्य संशयं बभञ्ज । ततः प्रद्युम्नः पितुश्चरणयोः पपात जगौ च—"हे पितः! ममापराधः सोढव्यः, मया कौतुकाय दर्शितमिदं" । तत कृष्णः उत्सवेन तं पुत्रं नगरे निनाय । तदा दुर्योधन एत्य जगौ—"भोः कृष्ण! मम पुत्री त्वत्स्नुषा केनाप्यपहृता, तस्याः शुद्धिं कुरु" । कृष्णोऽवक्—"किं क्रियते? तस्याः शुद्धिस्तु क्वापि न लब्धा" । पितरं खेदं दधानं वीक्ष्य प्रद्युम्नः प्राह—"विद्यया तामहमत्रानेष्यामि, खेदो न कार्यः" । ततः सद्यः तां तत्रानिनाय । ततः कृष्णसुयो-

धनाभ्यां प्रोक्तं—"भोः प्रद्युम्न! त्वमिमां कन्यामुद्वह"। सोऽवक्—"नेदं युक्तं, भानुकुमाराय दीयतां"। तस्यैतादृशं साहसं वीक्ष्यानेके खगभूपाः स्वाः स्वाः कन्याः प्रद्युम्नाय ददुः।

तत एकदा जीर्णावस्थां भामां वीक्ष्य किं तव दुःखमिति कृष्णः पप्रच्छ। सा जगौ—"प्रद्युम्नतुल्यं सूनुमहमिच्छामि"। कृष्णोऽवक्—"तव चिन्तां हरिष्ये"। ततः कृष्णेन चतुर्थतपसाऽऽराधितो हरिणैगमेषी चिन्तितपुत्रसिद्धिदं हारं दत्त्वा तिरोदधे। हारप्राप्तिस्वरूपं विज्ञाय प्रद्युम्नो जाम्बूवतीं मातरं भामातुल्यां विधाय विद्यया हरेर्गृहे प्रैषीत्। हरिस्तत्कण्ठाञ्चितं हारं कृत्वा तां बुभुजे। तदा दैवाद्दिवश्च्युतः कश्चित्सुरस्तस्याः कुक्षाववातरत्। ततः सा जाम्बूवती हृष्टा स्वगृहं ययौ। तदनु भामा भोगार्थमागता। कृष्णो दध्यौ—"अहो! इयं स्त्री भोगतृषिता पुनरागता, स्त्रीषु कामोपशान्तिर्नैति सत्यं"। एवं ध्यात्वा हरिस्तां रेमे यदा तदा प्रद्युम्नो भम्भामताडयत्। तेन क्षुब्धः कृष्णस्तां जगौ—"तव पुत्रो (भीरुः) भविष्यति"। प्रातर्जाम्बूवतीकण्ठे तं हारं वीक्ष्य कृष्णो दध्यौ—"नूनं रात्रौ प्रद्युम्ननिर्मितप्रपञ्चोऽयं दृश्यते।

क्रमाज्जाम्बूवती पुत्रं शाम्बाख्यमसूत। भामा भीरुकं पुत्रमसूत। एकदा भामा कृष्णं जगौ—"मत्पुत्रं शाम्बो भीषयति सदा"। ततः कृष्णेन जाम्बवत्याः पुरः प्रोक्तं—"त्वत्पुत्रः शाम्बोऽन्यायी श्रूयते"। साऽवक्—"मत्पुत्रो नयी विद्यते"। कृष्णो जगौ—"आवां विलोकयिष्यावः"। ततः कृष्ण आभीररूपं जाम्बूवती चाभीरीरूपं कृत्वा दधिविक्रयच्छलेन चलतः। पुरीद्वारे शाम्बस्तावालोक्याभीरीं प्रत्याह—

"अत्रागच्छ, गृह्णामि ते गोरसम्"। इत्युक्त्वा तामाकृष्य शून्यवेश्मान्ते शाम्बोऽवक् तां यदा तदाऽकस्मात्ताभ्यां स्वरूपं दर्शितं, तेन लज्जितोऽनश्यत्। ततः कृष्णो जगौ–"त्वया पुत्रचेष्टितं दृष्टं प्रत्यक्षं?"। साऽऽह–"मत्पुत्रो भद्र एवास्ति, एषा तु बालक्रीडा"। कृष्णो जगौ—"यतः सिंही स्वसुतं भद्रं सौम्यं च मन्यते तत् सत्यम्। द्वितीयेऽह्नि शाम्बः कीलकभृत्करश्चतुष्पथे गच्छन् कृष्णे लोके च शृण्वति जजल्प—"यो मदीयं ह्यस्तनं वृत्तं प्रकटीकरिष्यति तस्य वक्त्रे कीलकं क्षेप्स्यामि"। तदा हक्कितो हरिणा, त्याजितः स्वपुरं। प्रद्युम्नात्स शाम्बो मन्त्रविद्यां प्राप्य निर्गतः। ततो भीरुकं नित्यमर्दयन् प्रद्युम्नो भामयौच्यत—"हे शठ! त्वमितः पुरात् शाम्बवत्किं न निर्यातः?"। सोऽवक्–"मातः! क्व गच्छामि"। तयोक्तं—"प्रेतभूमौ याहि"। स जगौ—"मातः! कदा मया समागन्तव्यं?"। भामाऽऽह—"यदाऽहं हस्ते गृहीत्वा शाम्बं पुर्यां प्रवेशयामि तदा त्वयाऽऽगन्तव्यं"। "मातः! तवादेशः प्रमाणम्" इत्युक्त्वा स शाम्बपार्श्वे गतः।

इतो भामा हृष्टा स्वपुत्रयोग्यमेकोनशतं राजकन्यानाममेलयत्। एका कन्या न मिलति। इति भामाऽऽकूतं विज्ञाय प्रद्युम्नो जितशत्रुर्भूपोऽभूत् शाम्बश्च कन्यारूपः मन्त्रतः सार्धं विकुर्व्य तस्थौ। इतो भामा तां कन्यां याचते स्म। भूपः प्राह—"यदि मत्पुत्रीं भामा करे धृत्वा पुरमध्ये नयति, विवाहकाले तु मत्सुतायाः करं भीरुकरोपरि चेत्कारयति तदाऽहं दास्ये"। तदङ्गीकृत्य भामा तां कन्यां करे

गृहीत्वा महामहेन पुरे निनाय। तदा पौराः शाम्बं प्रद्युम्नं च वीक्षन्ते, जल्पन्ति च—"अहो! स्वपुत्रौ भामा विवाहकाले समानयति"।

भामौकसि गतः शाम्बो, भीरोर्वामेतरं करम्। स्वहस्तेनोपरिस्थेना—दाय वामेन वामधीः ॥ १ ॥

कन्यानां नवनवतेः पाणीन् दक्षिणपाणिना धृत्वा युगपद्विधिना भ्रमन् वृत्तोद्वाहः शाम्बः कन्यारूपः सर्वकन्याभिः सह वासगृहं ययौ। तेन शाम्बेन प्रकटीकृतस्वरूपेण भीरुस्तत्रागच्छन् भ्रकुट्या भीतो नष्टो गत्वा तद्वार्तां मातुरग्रे प्राह। भामा ससंभ्रमा तत्रैत्य सामर्षा जगौ—"रे धृष्ट! त्वं केनात्रानीतोऽसि?"। "हे मातः! त्वयैवानीतो नवनवतिकन्योद्वाहं च कारितोऽस्मि। अत्रार्थे सर्वे पौराः साक्षिणः सन्ति"। तया ते जनाः सर्वे पृष्टास्तथैव जगुः। ततोऽनाकलनीयां शाम्बदर्शितमायां वीक्ष्य वहुरोपार्ता भामाऽशक्ता निःश्वस्य स्वगृहं ययौ। छलबलेन शाम्बो नवनवतेः कन्यानां पतिर्जज्ञे। इमौ द्वौ सर्वे यादवा उत्कृष्टौ मेनिरे।

अथैकदा कृष्णस्य केनचिद्भूपेन जात्याश्वः प्राभृतीकृतः। तदा शाम्बपालकौ द्वौ कुमारौ एत्य प्रोचतुः—"अयमश्वो मह्यं दीयताम्"। कृष्णोऽवक्—"द्वयोर्मध्ये यः कल्ये श्रीनेमिनाथं प्रथमं प्रणंस्यति तस्मायश्वो मया दास्यते। ततः पालको रात्र्याश्चरमे प्रहरे समुत्थायोच्चैः शब्दं कुर्वन् स्वभृत्यान् सज्जीकृत्य प्रभाते प्रभुं नत्वा व्याघुट्य पितृपार्श्वे याचते स्म। कृष्णेनोक्तं—"प्रभुं पृष्ट्वा दास्यते"। इतो मध्य-

रात्रातिक्रमे शाम्बः पापभीरुः स्वस्थानकस्थ एव प्रभुं ननाम । प्रभाते समवसरणे सर्वे प्रभुपार्श्वे गताः । प्रभुं प्रणम्य कृष्णोऽवक्—"अद्य प्रभो ! त्वं प्रथमं केन वन्दितः ?" । प्रभुः प्राह—"द्रव्यवन्दनेनाहं प्रथमं पालकेन वन्दितः, भाववन्दनेन तु शाम्बेन प्रागिति" । कृष्णेन शाम्बायाश्वो दत्तः । ततोऽन्यदा प्रभुवाक्यात् प्रबुद्धौ दीक्षां ललतुः क्रमाच्च गिरिनारश्रृङ्गे मुक्तिपुरीं जग्मतुः शाम्बप्रद्युम्नौ ॥

ध्यात्वान्तरङ्गात्फलमाप शाम्बः, साक्षान्निरीक्ष्यापि न पालकश्च ।
तेनान्तरङ्गं विधिमामनन्ति, मनीषिणो बाह्यविधेर्बलिष्ठम् ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ चतुर्विंशे स्तम्भे त्रिपञ्चाशदधिकत्रिशततमं व्याख्यानम् ३५३ ॥



## चतुःपञ्चाशदुत्तरत्रिशततमं व्याख्यानम् ३५४ ॥

अथ भव्यः प्रतिबोधं प्राप्नोतीत्याह—

विचक्षणया बहूपायैः, स्वस्वामी प्रतिबोधितः । समानधर्मश्रद्धाभि-र्दम्पतित्वं हि शोभते ॥ १ ॥

स्पष्टः । ज्ञातं चेदम्—

राजगृहे श्रेणिकनृपः बौद्धधर्मासक्तः बौद्धाचार्यं गुरुं नित्यमुपास्ते । प्रत्यहं बौद्धालये गत्वा नृपस्तद्धर्मं

शृणोति श्रद्दधाति च, चेल्लणायाः पुरो नित्यं तं बौद्धं प्रशंसति । बौद्धाचार्यस्तु नित्यमित्थं कपटवृत्तिं करोति, तद्यथा—तेन स्वशिष्या इति शिक्षिताः 'यदाऽहं प्रत्यूषादिकाले छन्नो गर्भगृहे तिष्ठामि तदा युष्माभिर्मद्दर्शनार्थं समेतानां नृपादीनां कथनीयम्—अस्मद्गुरुस्तु सदा स्वर्गे गच्छति इन्द्रादीनां धर्मवार्ताज्ञापनाय, तदनु समेति" । अन्यदा नृपस्तत्र गतो गृहमध्ये गुरुमदृष्ट्वा शिष्यान् पप्रच्छ । तेऽप्याहुः—"गुरुर्व्योममार्गेण स्वर्गाधिपपार्श्वे गतः" । ततो नृपश्चेल्लणायै तद्वार्तां निवेदयामास । परं चेल्लणा तु आजन्म श्रावककुलोत्पन्नत्वात्तदुक्तं न श्रद्धत्ते । एकदा नृपो बलात्कारेण राज्ञीं सार्धं गृहीत्वा गुरुगृहे समेतः तदा चेल्लणयाऽपि स्वसेवका उक्ताः यदा वयं बौद्धगृहे स्थितिं कुर्मस्तदा यथा नृपो न वेत्ति तथा बौद्धालयमग्निज्वालासमन्वितं विधेयम्, पश्चाद्गागतो वह्निर्मोच्यः । अथ दम्पती बौद्धशिष्यमुखात् गुरोः स्वर्गमनं श्रुत्वा तत्र किञ्चित् स्थितौ । तदा राज्ञी नृपं प्राह—"हे स्वामिन्! अद्यात्र तिष्ठावा वां स्वर्गादवतरतां गुरूणां स्वरूपं पश्याव" । ओमित्युक्त्वा नृपस्तत्र यावत् स्थितस्तावदग्निज्वालया त्रयभ्रान्तो विह्वलो गुरुर्गुप्तस्थलतः शीघ्रं निःसृत्य सलज्जो न्यग्मुखो बहिरायथौ । तदा नृपेण पृष्टम्—"यूयमद्य स्वर्गता न वा?" । स प्राह—"अद्य तु नाहं गतः, नित्याभ्यासाच्छिष्यैः स्वर्गमनं प्रोक्तमस्ति" । ततः सभार्यो नृपो गृहे गतः । परं तस्य चित्तमनेकविकल्पमयं जातं । ततो नृपो राज्ञीं पप्रच्छ—"किमिदं जातं? अकस्मादग्न्युपद्रवः कुतो निःसृतः? अतस्त्वया कारितोऽयं ज्ञायते" । साऽऽह—"स्वामिन्! शृण्वेकं ज्ञातम्—

एकत्र पुरे द्वाविभ्यौ । तन्नार्ये द्वे सार्धं सगर्भे जाते । तदा ताभ्यामिभ्याभ्यां परस्परमिति निश्चितं—"यदि द्वे सुते ( सुतौ वा ) प्रसुवाते तदा न, यदा तु पुत्रपुत्र्यौ स्यातां तदा मिथः पाणिपीडनं कार्यं" । तस्य लिखनं कृतं । क्रमादेकस्याः पुत्री जाता, द्वितीयस्याः सर्पः प्रसूतः । ततस्तौ यौवनं प्राप्तौ । सर्पजनकेन राजादिसमक्षं सर्वेषां पार्श्वे न्यायं कारयित्वा सर्पाय सा सुता परिणायिता । रात्रौ वासमन्दिरे द्वावपि पृथक्पल्यङ्के शयाते । इतश्च सर्पशरीरतो दिव्यरूपो नरो निःसृत्य तया समं भोगं चकार, पश्चात्तस्मिन्नेव कलेवरे प्रविवेश । एवं नित्यं भवति । तद्वार्ता तया स्त्रिया स्वजनाय ज्ञापिता तदा लब्धलक्ष्यनरेण प्रोक्तं—"यदा स्वयं कलेवरं मुक्त्वा त्वां सेवते तदा तत्कलेवरमग्निना सहसा भस्मसात्कार्यं, ततः सर्पकलेवरं विना स क्व प्रवेशं करिष्यति ? मूलस्वरूपं प्रकटं भविष्यति" । ततः कन्याप्तमर्त्येन तथा कृतं, ततो देवकुमारस्तेनैव रूपेण तत्र स्थितिं चकारेति ।

तद्वत् हे नृप ! युष्मद्गुरुर्नित्यं स्वर्गगमनार्हं दिव्यं मलादिरहितं स्वर्गसुरसदृशं विधाय नूतनं शरीरं कृत्वा मूलदेहं शवरूपं गेहे मुक्त्वा तत्र गतः स्यात्, नान्यथा । अतो मयापीदं चेष्टितं कृतं यदि मूलशरीरं सर्पतनुवद्भस्मीभूतं स्यात्तदा उत्तरशरीरेणैव सर्वेषां दर्शनं जायते तदा वरं, लोकोत्तररूपं तु दुर्लभमस्ति इतिबुद्ध्या मया इदं व्यधायि, परं न किमपि दृष्टं, अग्निज्वालाभिः पराभूतो गृहादेव निर्गतः विह्वलवदनवचनः, अतो हे नृप ! सर्वमेतत् व्यलीकं ज्ञेयम्" । एवं श्रुत्वापि धूर्तव्युद्ग्राहितचित्तत्वात् नृपो मनागपि बौद्धदृष्टिरागं नात्यजत् । यतः—

कामरागस्नेहरागा—वीषत्करनिवारणौ । दृष्टिरागस्तु पापीयान्, दुरुच्छेद्यः सतामपि ॥ १ ॥

अन्यदा नृपेण बौद्धगुरुर्भोजनाय निमन्त्रितः । तदा बौद्धगुरूपानहौ राज्ञ्या सेवकपार्श्वादानाय्य तच्चर्मखण्डान् सूक्ष्मान् कृत्वा शाकादिद्रव्येषु चर्मचूर्णं छन्नं निहितं । बौद्धगुरुणा सुस्वादमध्ये न किञ्चिज्ज्ञातं । ततो गृहचलनसमये उपानहावदृश्यान्वेषिते, तथापि नाप्ते । तदा चेल्लणया नृपः प्रोक्तः—"स्वामिन् ! युष्मद्गुरुर्ज्ञानी न वा ? यदि ज्ञानी तदा किमन्वेषणं कारयति ? यदि चाज्ञानी तदाऽधुना भुक्तं पक्वान्नादि तन्नामापि न स्मृतिपथमेष्यति, अतो हे नृप ! किमिदं दाम्भिका विदन्ति ? जैनगुरव एव समस्तविचारदक्षाः सन्ति" । ततः स विषण्णः स्वगृहं गतः । आकण्ठं यावद्भुक्तं, तेन वमनं जातं, तन्मध्ये चर्मखण्डान् वीक्ष्य नृपाय ज्ञापितं बौद्धेन । राजा प्राह—"मत्कारितभोजनमध्ये न किमपि ध्येयं" । तद्वार्ता पत्न्यै ज्ञापिता । साऽऽह—"युष्मद्गुरुर्ज्ञानिनाम्ना पूज्यते, एतावन्मात्रमपि न जानाति ?" । तच्छ्रुत्वा नृपो मौनं चकार ।

अथ नृपश्चेल्लणां स्वमतद्वेषिणीं ज्ञात्वा तदवलेपनिवारणाय स्वसेवकान् प्राह—"यूयं प्रेतभूमितो मृतबालशवमेकं तत्कालीनमानीय सूपकाराय दत्त" । तैस्तथा कृतं । नृपेण तद्बालमांसादिना क्षीरादिकं कारितं । ततोऽनुचरा जैनमुनीनामाकारणाय प्रेषिताः । चेल्लणयाऽप्यनुमानेन किञ्चिज्ज्ञात्वा नृपः पृष्टः—"स्वामिन् ! अद्यौत्सुक्यचलचित्तमस्ति ?" । नृपः प्राह—"राष्ट्रादिचिन्तया, नान्येन कारणेन" । ततो

नृपः सूपकारस्थले गत्वा स्थितः, राज्ञ्यपि साध्वागमनमार्गोपरि गवाक्षे स्थिता। इतश्च साधुरेको नृप-सेवकदर्शितमार्गेणागच्छन् दृष्टः। तदा राज्ञी दध्यौ—"निःस्पृहोऽयं मुनिर्मदभिमुखं नावलोकयिष्यति, ईर्यापरत्वात्, अतः काञ्चित्कलां वितनोमि"। ततो यदा मुनिर्गवाक्षाधोभागे समेतस्तदा राज्ञ्या उन्नतौ करौ कृत्वा कपाटौ खटखटायितौ। साधुना तदोर्ध्वं विलोकितं, चेल्लणया शीघ्रं प्रणम्य द्वे अङ्गुली तत-स्तिस्रोऽङ्गुलयो दर्शिताः, तदा मुनिरेकामङ्गुलिमदर्शयत्। अस्यार्थोऽयं—राज्ञ्या पृष्टमङ्गुलिसंज्ञया 'द्विज्ञानं वा त्रिज्ञानं वा युष्माकमस्ति'?, तदा साधुनोक्तं संज्ञया 'एकयुक्तं त्रिकं' एतावता चत्वारि ज्ञानानि सन्ति इति। ततः सा हृष्टा पुनः फिट्टावन्दनं चकार। ततो मुनिस्तत्र गतः। नृपो बहुमानपूर्वं तद्बालमांसान्वितमाहारं दातुमुद्यमं चकार। मुनिस्तु ज्ञानदृष्ट्याऽन्नदयमयोग्यं तदशनं मत्वा प्राह—"हे नृप! नास्मद्योग्यमिदमशनं, वयं मुनयो निर्दोषाहारिणः"। श्रुत्वेति नृपः प्राह—"हे पूज्य! कथम-यमाहारः सदोषः? राजगृहनिष्पन्नः, अतो मनोहरोऽस्ति, यदि सदोषस्तर्हि तं दोषं प्रकाशय"। मुनिः प्राह—"हे नृप! त्वया निष्पादितं कृत्यं त्वमप्यहं वेत्सि, दम्भं विधाय प्रच्छदनं तव नार्हं, परं मुनीनां तु अचित्तमप्याहारं सदोषं ग्रहीतुं न कल्पते तर्हि बालमांसपेश्यादिनिष्पन्नं सततं जीवोत्पत्तिस्थलं कथ-मपि न घटते"। इतिमुनिवचसा संजातप्रत्ययो ज्ञानिनं नत्वाऽऽह—"हे पूज्य! त्वज्ज्ञानं त्वद्धर्मस्त्वत्क्रिया चेति सर्वमपि सत्यम्"। इत्यादि स्तुत्वा हर्षनिर्भरः सम्यक्त्वाभिमुखो नृप एत्य चेल्लणां प्राह—"हे नार्ये! त्वद्गुरुः परमज्ञानी, मयाऽद्य परीक्षा कृता"। ततश्चेल्लणया पृष्टः स नृपः सर्वमाचष्ट। श्रुत्वाऽऽह—

"स्वामिन्! निःस्पृहस्यैतादृशस्य ज्ञानिनोऽन्तो न ग्राह्यः, एतादृशा मुनयो न बौद्धाचार्यतुल्याः, येन बौद्धगुरुणा पूर्वं भोजनमध्ये चर्मचूर्णखण्डा भक्षिता अपि करमुखादिस्पर्शेऽपि न ज्ञाताः"। ततो नृपः पृष्टा सा सर्वं तत्स्वरूपं जगाद। इत्यादियुक्त्या तया बोधितो भूपो जैनधर्मरसिकोऽभूत्। क्रमेण श्रीवीरदेशनादिना दृढधर्मा जातः। अयं दृष्टान्तो यथा श्रुतोऽभूत्तथा लिपीकृतोऽस्ति।

श्रीश्रेणिकज्ञातमिदं निशम्य ते, बौद्धाश्च शाक्याः स्मृतिवित्कणादयः।
एकान्तपक्षैकरताः कुवादिनो, हेयाः सुजैनागमतत्त्ववेत्तृभिः ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ चतुर्विंशे स्तम्भे चतुःपञ्चाशदधिकत्रिशततमं व्याख्यानम् ३५४ ॥

## पञ्चपञ्चाशदधिकत्रिशततमं व्याख्यानम् ३५५ ॥

अथ तीर्थस्तवनामाह—

शत्रुञ्जयादितीर्थानां, प्रत्यूषे समयेऽनिशम्। विदध्यात्स्तवनां जन्तुः, सर्वाघौघप्रणाशिनीम् ॥ १ ॥

स्पष्टः। स्तवना चेयं तीर्थस्तुतिरूपा पूर्वपूज्यैर्निर्दिष्टा—

राजादनाधस्तनभूमिभागे, युगादिदेवांह्रिसरोजपीठम्।
देवेन्द्रवन्द्यं नरराजपूज्यं, सिद्धाचलाग्रस्थितमर्चयामि ॥ १ ॥

आदिप्रभोर्दक्षिणदिग्विभागे, सहस्रकूटे जिनराजमूर्तीः ।
सौम्याकृतीः सिद्धततीर्भिश्च, शत्रुञ्जयस्थाः परिपूजयामि ॥ २ ॥
आदिप्रभोर्वक्त्रसरोरुहाच्च, विनिर्गतां श्रीत्रिपदीमवाप्य ।
यो द्वादशाङ्गीं विदधे गणेशः, श्रीपुण्डरीको जयताच्छिवाप्तौ ॥ ३ ॥
चउद्दसाणं सयसंखगाणं, बावन्नसहियाण गणाहिवाणं ।
सुपाउआ जत्थ विराजमाणा, सत्तुंजयं तं पणमामि निच्चं ॥ ४ ॥
श्रीसूर्यदेवेन विनिर्मितस्य, श्रीसूर्यकुण्डस्य जलप्रभावात् ।
कुष्ठादिरोगाश्च समे ह्यनश्यन्, नरोऽभवत् कुर्कुटतां विहाय ॥ ५ ॥
विश्वत्रयोद्योतकरा गुणालया, महर्घ्यमाणिक्यसुकुक्षिधारिका ।
मतङ्गजस्था मरुदेवमातृका, विराजते यत्र गिरौ विशेषतः ॥ ६ ॥
यत्रैव शैले खलु पञ्च पाण्डवा, युधिष्ठिराद्या विजितेन्द्रियाश्च ।
कुन्त्या समं विंशतिकोटिसाधुभिः, सार्धं शिवर्द्धिं च समाससादिरे ॥ ७ ॥
नमिविनमिमुनीन्द्रावादिसेवापरौ यौ, गगनचरपती तौ प्रापतुर्मोक्षलक्ष्मीम् ।
विमलगिरिवरे वै कोटियुग्मर्षिभिश्च, सह हि विमलबोधिप्राप्तिपुष्ट्येकहेतू ॥ ८ ॥
विमलगुणसमूहैः संभृतश्चान्तरात्मा, स्वपदरमणभोक्ता दर्शनज्ञानधर्ता ।

निखिलशमधनानां तिसृभिः कोटिभिश्च, सममभृतपदार्द्धं प्राप्नुयादत्र रामः ॥ ए ॥
सौराष्ट्रदेशे खलु रत्नतुल्यं, सत्तीर्थयुग्मं परिवर्तते च ।
शत्रुञ्जयाख्यं गिरिनारसंज्ञं, नमाम्यहं तं बहुमानभक्त्या ॥ १० ॥
अणंतनाणीए अणंतदंसिणे, अणंतसुक्खाण अणंतवीरिणे ।
वीसं जिणा जत्थ सिवं पवन्ना, संमेयसेलं तमहं थुणामि ॥ ११ ॥
प्रगेऽहर्निशं संस्तुतं वासवाद्यै—र्जिनं नाभिभूपालवंशावतंसम् ।
श्रयेऽष्टापदे प्राप्तपूर्णात्मतत्त्वं, सुसौभाग्यलक्ष्मीप्रदं द्योतिमन्तम् ॥ १२ ॥
कल्याणकन्दोद्भवनैकमेघं, समस्तजीवोद्धरणे क्षमं तम् ।
स्फुरत्प्रतापं महनीयमूर्तिं, श्रीमारुदेव्यं वृषभं च वन्दे ॥ १३ ॥

अत्रार्थे संबन्धश्चायम्—

क्षितिप्रतिष्ठे सान्तुनामा मन्त्री करेणुस्कन्धारूढो राजपाटिकायां व्रजन् व्यावृत्तः स्वयंकारितसान्तुवसतिकायां देवनमश्चिकीर्षया तत्र प्रविशन् वारवेश्यास्कन्धन्यस्तहस्तं कमपि चैत्यनिवासिनं सितवसनं ददर्श। ततो गजादवरुह्य कृतोत्तरासङ्गः पञ्चाङ्गप्रणामेन तं गौतममिव नमश्चक्रे । तत्र क्षणं स्थित्वा भूयस्तं प्रणम्य प्रतस्थे । तदनु स लज्जयाऽधोवदनः पातालं विविक्षुरिव तत्कालं सर्वमेव परिहृत्य मलधारिश्रीहेमसूरीणां पार्श्वे उपसंपदमादाय संवेगरङ्गपूर्णः श्रीशत्रुञ्जये गत्वा द्वादश वर्षाणि तपस्तेपे । कदाचित्स मन्त्री शत्रु-

अये देवपादनमस्करणायोपगतो दृष्टपूर्वमिव तं मुनिं प्रणम्य तच्चरित्रपवित्रितमनास्तद्गुरुकुलादि पृष्टवान्। तेन तत्त्वतो भवानेव गुरुरित्युक्ते कर्णौ पिधाय पाणिभ्यां मैवमादिशेत्यज्ञतावृत्त्या व्यज्ञपयत्। तेन प्रोचे—

जो जेण सुद्धधम्ममि, ठाविओ संजएण गिहिणा वा। सो चेव तस्स जायइ, धम्मगुरू धम्मदाणाओ ॥१॥

ततस्तस्मै मूलवृत्तान्तं निवेद्य तस्य धर्मदृढतां निर्ममे। इति ॥

चैत्यभङ्गाच्च यद्दुःखं, लब्धं तस्य क्षयः कथम्। भूयश्चैत्यविधानेन, तत्पापं विलयं व्रजेत् ॥ १ ॥

स्पष्टः। अत्रार्थे संबन्धश्चायम्—

प्रह्लादनपुर्यां प्रह्लादनो भूपोऽभूत्। अन्यदाऽर्बुदाचलदर्शनार्थं भूपो गतः। तत्र कुमारपालेन कारितः श्रीपार्श्वप्रभोः प्रासादो दृष्टः। तन्मध्ये रीरीमयं श्रीपार्श्वबिम्बं भूपेन भङ्क्त्वा महेश्वरपुरतो वृषभं विधाय शिवालये न्यस्तः। ततः स्वगृहे यावत्समागतस्तावद्भूपस्य देहे गलत्कुष्ठरोगः प्रादुर्भूतः, महावेदनाऽऽविर्भूता। तदा गङ्गादितीर्थजलैर्भूपः स्नापितः, परं व्याधिर्न गतः। भूपोऽतिव्याकुलीभूतः। अन्यदा रोगशान्तिकारणं भूपेन मुनिः पृष्टस्तदा तेन गदितम्—

स्वस्तिश्रियां धाम गुणाभिरामं, सुत्रामसन्ताननतांह्रिपद्मम्।
जाग्रत्प्रतापं जगतीतलेऽत्र, श्रीपार्श्वदेवं सततं श्रय त्वम् ॥ १ ॥

## षट्पञ्चाशदधिकत्रिशततमं व्याख्यानम् ३५६ ॥



अथ धर्मस्य माहात्म्यं दृष्टान्तेनाह—

जैनधर्मं समाराध्य, भूत्वा विभवभाजनम् । प्राप्ताः सिद्धिसुखं ये ते, श्लाघ्या मङ्गलकुम्भवत् ॥१॥

उज्जयिन्यां पुर्यां वैरिसिंहो भूपः । तत्र धर्मार्थी धनदत्तश्रेष्ठ्यभूत् । तस्य निरपत्या सत्यभामा भार्या विद्यते । साऽन्यदा पुत्रचिन्ताम्लानमुखं श्रेष्ठिनं दृष्ट्वा पप्रच्छ—"हे नाथ! दुःखस्य किं कारणं?" । श्रेष्ठिना याथातथ्ये कथिते सा स्माह—"किमनया चिन्तया सुखैषिणा इहामुत्रसुखप्रदो धर्म एव सेवनीयः" इति प्रियोदितं साधु मत्वा हृष्टः श्रेष्ठी पुष्पादिना देवपूजाद्यनेकधर्मकर्म चकार । अथ धर्मप्रभावेण तुष्टा शासनदेवता तस्मा ईप्सितवरं ददौ । सा श्रेष्ठिन्यन्यदा गर्भं दधौ । पूर्णे मासे जातस्य पुत्रस्य स्वप्नानुसारेण मङ्गलकलश इत्याख्यां तत्पिता ददौ । कलाभ्यासपरः स पुष्पानयनहेतवे आरामे व्रजन्तं स्वपितरं निवार्य प्रतिवासरं पुष्पाणि चानीय स्वयं तस्मै ददौ, जिनपूजनं स्वयं करोति कारयति च । धर्माभ्यासं कुर्वतस्तस्यात्रान्तरे यज्जातं तन्निशम्यताम् ।

चम्पापुरे महाबाहुः पार्थिवोऽभूत् । तस्य राज्ञी गुणावली । तयोः पुत्री लावण्यरसमञ्जूषा सुरूपा प्राप्तयौवना त्रैलोक्यसुन्दरी बभूव । तामनवद्याङ्गीं विलोक्य धरापतिरिति दध्यौ—"मम वत्सायाः कोऽनुरूपो रमणो भवति?" । ततो राज्ञा निजं सुबुद्धिसचिवं समाहूयाभाणि—"मया त्वत्सुतायात्मजा

दत्ताऽतः परं त्वया न वाच्यं" । अथ गृहं गत्वा सचिवोऽचिन्तयत्—"रतितुल्या राजपुत्री, मम सुतस्तु कुष्ठी, तदेतयोर्योगं जानन्नहं कथं करोमि ?" । इति चिन्तयन् स्वधियैव लब्धोपायो धीसखो गोत्रदेवीं समाराधयामास । साऽपि प्रत्यक्षीभूयोवाच—"भो मन्त्रिन् ! तवाङ्गजस्य कर्मोद्भूतकुष्ठरोगक्षयोऽशक्यः, अवश्यमेव हि भोग्यं कर्म भुज्यते, तथापि भवत्कार्यसिद्ध्यर्थं पुरीद्वारेऽश्वरक्षकनरान्तिके यः शीतार्तोऽग्निसेवनपरः कुतोऽप्यानीय त्वद्भक्तितुष्टया मयाऽऽनेष्यते, स बालो मन्त्रिन् ! त्वया ग्राह्यः" । इत्युक्त्वा देवी तिरोदधे । सचिवः सर्वविवाहसामग्रीं प्रगुणीचकार । अश्वपालनरमाकार्य समादिदेश—"यः कश्चिद्बालो भवदन्तिकेऽभ्येति स प्रच्छन्नं ममान्तिके समानेयः" । देवताऽपि विशालायां गत्वा पुष्पाण्यानीयारामान्निजगृहे गच्छतस्तस्य मङ्गलकलशस्यान्तरिक्षस्थितोवाचैवं—"अयं बालकोऽन्यकन्यां भाटकेन परिणेष्यति" । तच्छ्रुत्वा विस्मितः स गृहं ययौ । द्वितीयदिवसेऽप्येवं श्रुत्वा पुनरचिन्तयत्—"अद्याहं सदनं प्राप्तो व्योमवाणीं पितुः कथयिष्यामि" । यावदिदं चिन्तयति तावच्चम्पापुरीनिकटाटव्यां देव्या स मुक्तः । तत्र भ्रमन्नश्वपालान्तिके आगतः । तैरश्वपालैर्गोपयित्वाऽमात्यस्यार्पितः । स तं देवकुमाराभं दृष्ट्वा हृष्टः विजने स्थापयामास । एकदा तेन सचिवः पृष्टः—"तात ! कुतो मम वैदेशिकस्य गौरवं विधीयते ? कथं च विजने रक्षितोऽहं" ? । सोऽपि तस्मै "कपटेन चम्पापुराधिपस्य त्रैलोक्यसुन्दरीं पुत्रीं त्वं परिणीय कुष्ठेन पीडिताय मत्पुत्राय तां नृपाङ्गजां दद्याः, तदर्थं त्वमत्रानीतः" इति स्वाभिप्रायं न्यवेदयत् । तत् श्रुत्वा मङ्गल उवाच—"कुलकलङ्ककृदकृत्यमहं कथं

करोमि ? मुग्धजनं कूपे क्षिप्त्वा वरत्राकर्तनोपमं कर्मेदं न करिष्यामि" । मन्त्र्यूचे-"हे दुर्मते ! कर्मेदं चेन्न करिष्यसि तदा त्वां निजहस्तेन मारयिष्यामि" । ततः स बालो मतिचक्षुषा विलोक्य तं प्राह—यदि मया त्वत्समीहितं निर्वर्तनीयमेव तदा राजा करमोचने यद्वस्तु मह्यं ददाति तन्ममैव दातव्यम्" । एवमस्त्विति तद्वाक्यं मन्त्र्यपि मेने । अथ संप्राप्ते शुभे लग्ने महताऽऽडम्बरेण मङ्गलेन परिणीता सा । हस्तमोचनसमये जात्यघोटकपञ्चकादिकं तस्मै राजा प्रददौ । ततो मन्त्रिणा बध्वा समं स मङ्गलः स्वगृहं निन्ये । क्षणान्तरे स मङ्गलो देहचिन्तामिषेण वासमन्दिरान्निर्ययौ । साऽपि चलचित्तं निजपतिं ज्ञात्वा पयःपात्रं गृहीत्वा तदनु प्राचलत् । देहचिन्तान्ते विचित्तं स्वपतिं वीक्ष्य प्रेयसी प्राह—"हे कान्त ! त्वां क्षुधा बाधते किमु ?" । तेन ओमिति भणिते सा दासीहस्तेन मोदकान् स्वगृहादानाय्य तस्मै ददौ । भक्षयता तेनास्याः स्वस्थानज्ञापनायेत्युक्तं-"विशालावारिणा कृते एते मोदका न रम्यतराः" । तदाकर्ण्य नृपात्मजा विस्मिताऽचिन्तयत्—"अहो ! कथमघटमानं वाक्यमेष प्रजल्पति ? ( अथवाऽस्य मातुलगृहं तत्र स्यात् )" । इति विचिन्त्य सुरञ्जिताम्बूलं सा तस्य ददौ । पुनर्देहचिन्तामिषेण मन्दिरादेष विनिर्गत्य तुरगादिकं लात्वा क्रमादवन्तिं ययौ । पितरौ समायातं सुतमालोक्य गतशोकौ बभूवतुः । तेन पितृभ्यां स्वस्वरूपं निवेदितम् ।

इतश्च मन्त्रिणा रात्रौ मङ्गलवेषभृतं वधूपान्ते प्रेषितं सुतं शय्यारूढं कुष्ठिनं करस्पर्शं कुर्वन्तं दृष्ट्वा सहसा वासवेश्मनो बहिर्निर्गत्य दासीमध्ये निषण्णा विषण्णा सा निशामगमयत् । प्रातः सचिवो नृपतिं

व्यजिज्ञपत्–"प्रभो ! मम सुतोऽधुना त्वत्सुतास्पर्शतः कुष्ठरोगार्तो दृश्यते, किं क्रियते?" । तदाकर्ण्य नृपस्तं स्माह–"विचित्रा कर्मणां गतिः यतः—

चिन्तयत्यन्यथा जीवो, हर्षपूरितमानसः । विधिस्त्वेष महावैरी, कुरुते कार्यमन्यथा ॥ १ ॥

अत्र मम पुत्र्या दोषः, न तव पुत्रस्य" इत्याश्वासितः सचिवः स्वगृहं ययौ । राज्ञा दृक्पथान्निवारिता साऽन्येद्युर्विगलितमन्योः पितुरन्तिकं गत्वोवाच–"तात ! मम पुंवेषमर्पय, विशालां गतस्य तस्य मिलित्वा कलङ्कमपनयामि" राज्ञाऽनुज्ञाता सैन्यैर्वृता सा तामुज्जयिनीं प्राप । मालवाधिप आयातं नृपनन्दनं मत्वा वासगृहदानाद्यैः सच्चकार । अन्यदैषा सदनाग्रतः सरस्तीरे गच्छतः पितृनामाङ्कितानश्वान् ददर्श । तेषामनुपदं स्वभृत्यान् प्रेष्य भर्तुर्गृहाभिधानादि सा विवेद । ज्ञानाभ्यासपरं तं ज्ञात्वाऽसौ सच्छात्रमुपाध्यायं भोजनाय न्यमन्त्रयत् । भोजनार्थं तत्रायाते पाठके सा छात्रमध्ये स्वभर्तारं ददर्श । तान् वसनासनाद्यैः संमान्य सा कलाचार्यमुवाच–"एतन्मध्यात्त्वदाज्ञया यो जानाति स छात्रो मम कथानकमाख्यातु" । पाठकगिरा मङ्गलकुम्भस्तां पुंवेषधारिणीं निजप्रियां मत्वा सिंहादिकानां शृण्वतां स्वमुखाद्वादिकं प्रागुक्तं जगौ । तच्छ्रुत्वा नृपात्मजा सिंहसामन्तमवोचत्—"अयमेव मम प्रियः, अस्यान्वेषणार्थमहं पुंवेषं कृत्वाऽत्रागताऽस्मि" । सिंहोऽब्रवीत्—"अयं चेत्तव भर्ता तदाऽपशङ्कितं सेव्यः" । ततो राजाज्ञया त्रैलोक्यसुन्दर्या समं स मङ्गलो विललास । एकदा सुन्दर्या प्रेरितः स मङ्गलोऽवन्तीशमनुज्ञाप्य चम्पामयात् । राजाऽपि स्वदुहितुर्मुखाद्वृत्तान्तं श्रुत्वा हृष्टोऽभाषिष्ट—"वत्से ! तव कलङ्को

दूरीभूतः" । अथ महीभुजा दुष्टकर्मकारकं तममात्यं मार्यमाणं मङ्गलो मोचयामास । अपुत्रः स भूपस्तं मङ्गलं राज्ये स्थापयित्वा यशोभद्रसूरीणां चरणान्तिके परिव्रज्यामुपाददे । राज्यं पालयतस्तस्य पत्न्यां जयशेखरनामा सुतोऽभूत् ।

अन्यदोद्यानमायातं जयसिंहाख्यगुरुं सप्रियो भूपो भावेन प्रणम्य तद्देशनां श्रुत्वा पप्रच्छ—"भगवन्! केन कर्मणा मया विडम्बना प्राप्ता? देव्या च दूषणं प्राप्तं?" । सूरिः स्पष्टं न्यवेदयत्—"पुरा क्षितिप्रतिष्ठपुरे सोमचन्द्राह्वः कुलपुत्रकोऽभूत् । तस्य भार्या श्रीदेवी । तस्य सखा जिनदेवाभिधः श्रावकोऽभूत् । अन्यदा स जिनदेवो धनाकांक्षी देशान्तरं गन्तुकामो निजमित्रसोमचन्द्रस्य स्वधनं सप्तसु क्षेत्रेषु वपनायार्पयत् । तस्मिन् गते सोमचन्द्रस्तद्द्रव्यं यथास्थाने व्ययति स्म । तत्रैव पुरे श्रीदेव्याः सखी देवदत्तस्य गेहिनी भद्राभिधाऽभवत् । भद्रायाः पतिः केनचित्कर्मणा कुष्ठी जज्ञे । अन्येद्युस्तया सख्याः पुरः तत्स्वरूपं निवेदितं । हास्यपरया श्रीदेव्या तस्याः संमुखं निगदितं—"हले! त्वत्सङ्गेन त्वत्पतिः कुष्ठी जज्ञे" । तदाकर्ण्य भद्रा हृदि दोदूयते स्म । क्षणादूर्ध्वं 'वयस्ये! मा कृथाः खेदं, मया हास्येन कथितम्' इति प्रोच्य साऽऽह्लादिता । साधुसंसर्गतः श्राद्धधर्मं प्राप्य क्रमात्समाधिना मृत्वा युवां दम्पती सौधर्मे समजायेतां, ततश्च्युत्वा सोमचन्द्रजीवो भूपते! त्वमभूः, श्रीदेव्याश्च जीवस्त्रैलोक्यसुन्दरी जज्ञे । भवता परद्रव्येण पुण्यमुपार्जितं तेन भाटकेनैव नृपात्मजा परिणीता । पुराऽनया हास्येनापि वयस्यायै यद्दत्तं तदा तस्या इह भवे तत्कलङ्कमभूत्" । ईदृग्मुनिवचः श्रुत्वा विरक्तौ तौ

राज्यं स्वसूनवे दत्वा गुरोः पार्श्वे प्रव्रज्यां जगृहतुः निरतिचारं संयमं प्रपाल्यान्ते तावुभौ विपद्य ब्रह्मलोकमुपेयतुः । क्रमेणाव्ययमजरमभयं समस्तात्मसंपत्त्याविर्भावसुखं मोक्षपदं प्रापतुः । इति मङ्गलकुम्भस्य ज्ञातम् ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ चतुर्विंशे स्तम्भे
षट्पञ्चाशदधिकत्रिशततमं व्याख्यानम् ३५६ ॥

---

## सप्तपञ्चाशदधिकत्रिशततमं व्याख्यानम् ३५७ ॥

अथ श्रीगुरुपट्टानुक्रममाह—

षट्त्रिंशद्गुणरत्नाढ्यः, सौधर्मादिपरम्परः । गुरुपट्टक्रमो ज्ञेयः, सुरासुरनरैः स्तुतः ॥ १ ॥

स्पष्टः । गुरुपट्टश्रेणिस्तु हीरसौभाग्यकाव्योक्तैस्तैरेव वृत्तैर्लिख्यते । तथाहि—

एकादशासन् गणधारिधुर्याः, श्रीइन्द्रभूतिप्रमुखा अमुष्य ।
आर्योपयामे पुनराप्तमूर्तिं, रुद्राः स्मरं हन्तुमिवेहमानाः ॥ १ ॥
आसीत्सुधर्मा गणभृत्सु तेषु, श्रीवर्धमानप्रभुपट्टधुर्यः ।
विहाय विश्वे सुरभीतनूजं, कः स्यात् परो धुर्यपदावलम्बी ॥ २ ॥

यशःश्रियाऽधःकृतकुन्दकम्बु—र्जम्बूकुमारोऽजनि तस्य पट्टे ।
खधोरपि स्वस्य यतोऽभिभूतिं, पश्यन् ह्रियाऽदृश्य इव स्मरोऽभूत् ॥ ३ ॥
अलंचकार प्रभवप्रभुस्त—त्पट्टश्रियं पुण्ड्र इवेन्दुवक्राम् ।
स्तेनोऽपि सार्थेश इवाङ्गिनो यः, श्रेयःश्रियं प्राप यदत्र चित्रम् ॥ ४ ॥
शय्यंभवोऽभूषयदस्य पट्टं, सिंहासनं पित्र्यमिवावनीन्द्रः ।
कलिन्दिका मौक्तिकमालिकेव, यत्कण्ठपीठे विलुठत्यकुण्ठा ॥ ५ ॥
संपूरयन् कीर्तिभरोनदीभि—र्दिशो यशोभद्रगणाधिराजः ।
व्यभूषयत्पट्टममुष्य भूभृ—दधित्यकां दस्युरिव द्विपानाम् ॥ ६ ॥
संभूतिपूर्वो विजयो गुरुस्त—त्पट्टं श्रिया पल्लवयांचकार ।
कदम्बजम्बूकुटजावनीज—कुञ्जं नभोऽम्भोद इवाम्बुवृष्ट्या ॥ ७ ॥
स तत्सतीर्थ्योऽजनि भद्रबाहुः, सूरिः समग्रागमपारदृश्वा ।
दशाश्रुतस्कन्धत उद्दधार, वज्राकराद्रत्नमिवात्र कल्पम् ॥ ८ ॥
श्रीस्थूलभद्रेण निजान्ववाय—स्रोतस्विनीनायककौस्तुभेन ।
विश्वत्रयी तद्यशसेव शोभा—मलंभि तत्पट्टपयोधिपुत्री ॥ ९ ॥
पट्टेऽथ तस्यार्यमहागिरिश्चा—परः क्रमादार्यसुहस्तिसूरिः ।

बभूवतुर्धर्मधुरं दधानौ, रथे यथा सारथिकस्य रथ्यौ ॥ १० ॥
श्रीमत्सुहस्तिप्रतिवासवस्य, श्रीसुस्थितः सुप्रतिबद्धसूरिः ।
पदं विनेयौ नयतः स्वलक्ष्मीं, क्रमं मुरारेरिव पुष्पदन्तौ ॥ ११ ॥

पूर्वं तु सुधर्मस्वामिनमारभ्य सुहस्तिसूरिं यावत्साधूनां निर्ग्रन्था इत्यभिधानमासीत्, एतत्सूरियुगलात् द्वितीयं कोटिकगण इति नाम बभूव, कोटिशः सूरिमन्त्रजापात् इति ।

श्रीइन्द्रदिन्नप्रतिसार्वभौम—स्तत्पट्टलक्ष्मीतिलकं बभूव ।
निशुम्भ्यते दाम्भिकता स्म येन, कलिन्दकन्येव हलायुधेन ॥ १२ ॥
श्रीदिन्नसूरिर्गुणभूरिरस्मा—त्सप्तर्षिभूरङ्गिरसो यथाऽऽसीत् ।
येनानुरागोऽवधिकालनेमिः, कल्लोलिनीवल्लभशायिनेव ॥ १३ ॥
सूरीश्वरः सीहगिरिः क्रमेण, व्यलासयत्तत्प्रभुपट्टलक्ष्मीम् ।
जिनस्य पादं शिरसा स्पृशन्तीं, निकाय्यराजीमिव केतुवारः ॥ १४ ॥
तमोभरोर्वीधरभेदवज्रि—वज्रोऽथ वज्रप्रभुरेतदीयम् ।
पट्टं परां प्रापयति स्म भूषां, माणिक्यकोटीर इवोत्तमाङ्गम् ॥ १५ ॥
श्रीवज्रसेनसंज्ञ—स्तत्पदपूर्वाद्रिचूलिकादित्यः ।
मूलं चान्द्रकुलस्या—जनि च ततश्चन्द्रसूरिगुरुः ॥ १६ ॥

(श्रीवज्रसेनोऽथ तदीयपट्टं, व्यत्रासयत्प्रीणितजन्तुजातः ।
स्फुरन्मदोद्भेद इव द्विपेन्द्र–कपोलमानन्दितचञ्चरीकः ॥ १६ ॥)

अत्र चन्द्रगच्छ इति तृतीयाभिधानम् ।

कल्लोलिकारुण्यरसान्वितस्य, सामन्तभद्रप्रभुरस्य पट्टम् ।
व्यराजयद्वारिरुहाकरस्य, मध्यं यथोन्निद्रितपुण्डरीकम् ॥ १७ ॥

अत्र वनवासीति नाम ।

कोरण्टके वीरजिनेन्द्रमूर्त्तिं, दृक्पान्थवृत्तिं कृतपुण्यपाकाम् ।
यः प्रत्यतिष्ठत् किमु सत्रशालां, स वृद्धदेवोऽजनि तस्य पट्टे ॥ १८ ॥
प्रद्योतनाह्वप्रभुणाऽप्यमुष्य, पट्टं परं वैभवमावभार ।
त्रैलोक्यलक्ष्मीतिलकायितेन, पितुः स्वपुत्रेण यथान्ववायः ॥ १९ ॥
धिया जयँश्चित्रशिखण्डिसूनुं, गङ्गातरङ्गायितवाग्विलासः ।
श्रीमानदेवः पदमेतदीयं, रूच्यः सत्रास्थानमिवाध्युवास ॥ २० ॥
पदप्रदानावसरे समीक्ष्य, साक्षात्तदंसोपरि वाणिपद्मे ।
राज्यादिव क्षोणिपुरन्दरस्य, भ्रंशोऽस्य भावी नियमस्थितेर्हा ॥ २१ ॥
इत्थं गुरुं स्वं विमनायमान—मालोक्य लोकेश्वरगीतकीर्तिः ।

तत्याज यः षड् विकृतीर्व्रतीन्द्रः, षडान्तरारीनिव जेतुकामः ॥ २२ ॥

असौ सूरिर्लघुशान्तिकारको ज्ञेयः ।

तदीयपट्टाम्बरभानुमाली, श्रीमानतुङ्गश्रमणेन्दुरासीत् ।
य औजिढत्साधुजनान्निजाज्ञां, नाथान् पृथिव्या इव सार्वभौमः ॥ २३ ॥

असौ भक्तामरस्तोत्रनमिऊणकारकः ।

सङ्घाननागेश्वररश्मिसाम्य—मन्थाद्रिणाऽऽलोड्य मदाम्बुराशिम् ।
तत्पट्टलक्ष्मीरथ वीरनाम्ना—चार्येण वव्रे वनमालिनेव ॥ २४ ॥

ततोऽजनि श्रीजयदेवसूरिः, दूरीकृताशेषकुवादिवृन्दः ।
यद्वाग्विलासैरवहेलितश्रीः, सुधा किमु क्षीरनिधौ ममज्ज ॥ २५ ॥

स्वःकामिनीकीर्तितकीर्तिदेवा—नन्दश्चिदानन्दमना मुनीन्द्रः ।
तारुण्यमेणाङ्कमुखीमिवैत—त्पट्टश्रियं वैभवमानिनाय ॥ २६ ॥

श्रीविक्रमः सूरिपुरन्दरोऽभूत्, तत्पट्टदुग्धाब्धिसुधामरीचिः ।
ततश्चमूं हन्तुमनाः समग्रां, किं विक्रमोऽङ्गीकृतकाययष्टिः ॥ २७ ॥

आसीत्ततः श्रीनरसिंहसूरिः, स वाङ्मयाम्भोनिधिपारदृश्वा ।
अत्याजि यक्षः किल येन मांसं, स्वापं जगद्वारिजबन्धुनेव ॥ २८ ॥

महर्घ्यमाणिक्यमिवाम्बुधीयं, पोमाणभूपालकुलप्रदीपः ।
पट्टश्रियं श्रीनरसिंहसूरे–रलङ्करोति स्म समुद्रसूरिः ॥ २९ ॥
स मानदेवोऽजनि तस्य पट्टे, वाग्देवता यन्मुखपद्मसद्मा ।
वृत्तामृतैश्चारुवचोविलास–छलादिवोद्गारमिवातनोति ॥ ३० ॥
पदे तदीये विबुधप्रभेण, स्म भूयते सूरिपुरन्दरेण ।
येनाभिभूतः किल पुष्पधन्वा, पुनर्युयुत्सुर्विषमायुधोऽभूत् ॥ ३१ ॥
तत्पट्टपङ्केरुहमानसौकाः, श्रीमान् जयानन्दविभुर्बभूव ।
यस्याशयोऽमात् समयोऽप्यशेषः, कुम्भोद्भवस्य प्रसृताविवाब्धिः ॥ ३२ ॥
यदाननं चन्द्रति दन्तकान्ति—र्ज्योत्स्नायते भ्रूयुगमङ्कतीह ।
वाचां विलासोऽपि सुधायते त—त्पदे मुनीन्द्रः स रविप्रभोऽभूत् ॥ ३३ ॥
वर्द्धिष्णुयत्कीर्तिसुधार्णवेन, न्यमज्जि नामाप्यसितादिभावैः ।
अर्हन्महिम्नेव जगत्यजन्यैः, सोऽभूधशोदेवविभुः पदेऽस्य ॥ ३४ ॥
प्रद्युम्नदेवोऽथ पदे तदीये, प्रद्युम्नदेवोऽभिनवो बभूव ।
भिन्दन् भवं मुक्तरतिर्दवीयो—भवन्मधुर्विश्वविभाव्यमूर्त्तिः ॥ ३५ ॥
श्रीमानदेवेन पुनः स्वकीर्ति—ज्योत्स्नावदातीकृतविष्टपेन ।

एतत्पदश्रीरगमि प्रतिष्ठां, शक्तित्रयेणेव नरेन्द्रलक्ष्मीः ॥ ३६ ॥

इति तृतीयमानदेवसूरिरयम् ।

वाचंयमेन्द्राद्विमलादिचन्द्रा—त्पदाब्जभृङ्गीत्नवदिन्द्रचन्द्रात् ।
अमुष्य पट्टः श्रियमश्नुते स्म, परंतपाद्भूप इव प्रतापात् ॥ ३७ ॥

श्रीविमलचन्द्रसूरिः ।

रेजेऽस्य पट्टे स्मररूपधेयः, सूरीन्दुरुद्योतननामधेयः ।
दिग्वारणेन्द्रा इव सूरिचन्द्राः, संजज्ञिरे यत्पदधारिणोऽष्टौ ॥ ३८ ॥

अत्र वटगच्छ इति नाम ।

माहात्म्यनम्रीकृतसर्वदेवः, पदे तदीयेऽजनि सर्वदेवः ।
तारापतिस्तारकपर्षदेव, गुणश्रिया यः प्रभुरन्वयायि ॥ ३९ ॥
कुर्वन्निवासं गवि गौरवश्री—र्गिरामधीशो विबुधैरुपास्यः ।
श्रीदेवसूरिः किमु देवसूरिः, पदे तदीयेऽप्यजनि क्रमेण ॥ ४० ॥
दोषोदयोदीततमःप्रपञ्च—व्यापादनव्यापृतिदीक्षितेन ।
श्रीसर्वदेवेन पदं तदीय—मदीपि दीपेन यथा निकेतम् ॥ ४१ ॥

इति द्वितीयसर्वदेवसूरिः ।

श्रीमद्यशोभद्रगणावनीन्द्रः, श्रीनेमिचन्द्रव्रतिपुङ्गवश्च ।
तत्पट्टमाकन्दमुभौ भजेते, शुकोऽन्यपुष्टश्च यथा विहङ्गौ ॥ ४२ ॥
तयोः पदे श्रीमुनिचन्द्रसूरि—रभूत्ततो निर्मितनैकशास्त्रः ।
शास्त्रे न कुत्रापि तदीयबुद्धि—श्चस्खाल वीरुत्स्व समीरणस्य ॥ ४३ ॥
भूपीठखण्डानिव चक्रवर्ती, यतीन्द्रवन् षड्विकृतीर्जहौ यः ।
कदापि काये न दधन्ममत्वं, पपौ पुनर्यः सकृदारनालम् ॥ ४४ ॥
निर्जीयते स्म क्वचनापि नायं, कृतोपसर्गैरपि देववर्गैः ।
इतीव नाम्ना भुवि विश्रुतेन, जज्ञेऽस्य पट्टेऽजितदेवसूरिः ॥ ४५ ॥
जगत्पुनानः सुमनःस्रवन्ती—रयो जटाजूटमिवेन्दुमौलेः ।
अमुष्य पट्टं विजयादिसिंहो—ऽध्यासांबभूवाथ तपस्विसिंहः ॥ ४६ ॥
सोमप्रभः श्रीमणिरत्नसूरी, अमुष्य पट्टं नयतः स्म लक्ष्मीम् ।
इक्ष्वाकुवंशं भरतश्च बाहु—बलिस्तनूजाविव नाभिसूनोः ॥ ४७ ॥
श्रीमज्जगच्चन्द्र इदंपदश्री—ललामलीलायितमाततान ।

१ गतिरिव.


॥२२६॥

येनौज्झि शैथिल्यपथस्तटाको, घनाविद्धो मानसवासिनेव ॥ ४८ ॥
द्वात्रिंशदाशावसनैरभेद्यो, वादं सृजन् हीरकवद्यदासीत् ।
अघाटभूपेन स हीरलाद्यो, नाम्ना जगच्चन्द्र इति न्यगादि ॥ ४९ ॥
आचाम्लकैर्द्वादशहायनान्ते, तपेत्यवापद्बिरुदं मुनीन्दुः ।
महाह्वैर्वैरिविनिर्नयान्ते, भत्तैव भूमेर्जितकाशिसंज्ञाम् ॥ ५० ॥
अस्मात्ततः प्रादुरभूत्तपाख्या, नेत्रादिवात्रेर्द्विजराजलेखा ।
अदीपि यस्माच्च मुमुक्षुलक्ष्म्या, वसन्तमासादिव भानुभासा ॥ ५१ ॥
इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ चतुर्विंशे स्तम्भे सप्तपञ्चाशदधिकत्रिशततमं व्याख्यानम् ३५७ ॥

## अष्टपञ्चाशदधिकत्रिशततमं व्याख्यानम् ३५८ ॥

अथ तपाविरुदप्राप्त्यनन्तरं संजातगुरुपट्टपङ्क्तिर्लिख्यते—

देवेन्द्रकर्णाभरणीभवद्भि-र्यशोभिरुद्भासितविष्टपेन ।
देवेन्द्रदेवेन बभेऽस्य पट्टे, विष्णोर्यथा वक्षसि कौस्तुभेन ॥ १ ॥

अयं श्रीदेवेन्द्रसूरिः कर्मग्रन्थादिकर्ता ।

निजाङ्गनोजीतयदीयकीर्तिं, शुश्रूषुरक्षिस्र(श्र)वसामृतुक्षाः ।
चक्षुःसहस्रे रसिकः किमाधा—रपट्टे स तस्याजनि धर्मघोषः ॥ २ ॥
यस्योपदेशान्नृपमन्त्रिपृथ्वी—धरश्चतुर्भिः सहितामशीतिम् ।
ज्ञातीरिवोद्धर्तुमिदंमिताः स्वा, व्यधापयत्तीर्थकृतां विहारान् ॥ ३ ॥
यस्माद्विदीपे चरणस्य लक्ष्मी—र्ज्योत्स्नेव चान्द्री शरदोऽनुपङ्गात् ।
सोमप्रभाख्यो जनदृक्चकोरी—सोमप्रभः सूरिरभूत्पदेऽस्य ॥ ४ ॥
तेनापि सोमतिलकाभिधसूरिरात्म—पट्टे न्यवेशि वशिलब्धिमलसल्ललामम् ।
वादेषु येन परवादिकदम्बकस्या—नध्यायता प्रतिपदेव मुखे न्यवासि ॥ ५ ॥
संस्थापितो निजपदे गुरुणाऽथ तेन, श्रीदेवसुन्दरगुरुः सुरसुन्दरश्रीः ।
अह्नो मुखेन तिमिरेण तमस्विनीव, येन व्यपास्यत समं मदनेन माया ॥ ६ ॥
घूकैरर्कमिव द्विषद्भिरुदये हन्तुं परैः प्रेषितं, कश्चिच्चन्द्ररुचा प्रमादविमुखं स्वापेऽपि दृष्ट्वा प्रभुम् ।
शाम्यन्तं गदिताखिलव्यतिकरं संबोध्य योऽदीक्षयत्, स श्रीमानथ सोमसुन्दरगुरुर्भेजे तदीयं पदम् ॥७॥
पट्टश्रियाऽस्य मुनिसुन्दरसूरिशक्रे, संप्राप्तया कुवलयप्रतिबोधदक्षे ।
कान्त्येव पद्मसुहृदः शरदिन्दुबिम्बे, प्रीतिः परा व्यरचि लोचनयोर्जनानाम् ॥ ८ ॥

संतिकरमित्यस्य कारकोऽयम् ।

सूरेस्ततोऽजायत रत्नशेखरः, श्रीपुण्डरीको वृषभध्वजादिव ।

वाग्मीतिनाम्ना द्विजपुङ्गवेन, न्यगादि यो बालसरस्वतीति ॥ ९ ॥

श्राद्धविधिसूत्रवृत्त्या–द्यनेकसद्ग्रन्थनिर्मितोपदिष्टः । लक्ष्मीसागरसूरि–स्तत्पदमण्डनमतिगरिष्ठः ॥ १० ॥

आसीत्तदीयपट्टे, गुरुर्गुणी सुमतिसाधुसूरीन्द्रः । श्रीहेमविमलसूरि—स्तदीयपट्टे गुरुः समभूत् ॥ ११ ॥

अथ दुःषमोत्थदोषात्, प्रमादवशचेतसो ममत्वभृतः । अभवन्मुनयः प्रायः, स्वाचारचरणशैथिल्याः ॥१२॥

इतश्च—

श्रीहेमविमलसूरि–र्दूरीकृतकल्मषः ससूरिगुणम् । ज्ञात्वा योग्यं तूर्णं, धर्मस्याभ्युदयसंसिद्ध्यै ॥ १३ ॥

सौभाग्यभाग्यपूर्णं, संवेगतरङ्गरङ्गनीरनिधिम् । आनन्दविमलसूरिं, स्वपट्टे स्थापयामास ॥ १४ ॥

श्रीविक्रमनृपकाला–द्भुजेर्गजशरशशि(१५८२)मिते वर्षे । चक्रुश्चरणोद्धरणं, शरणं संवेगवेगवताम् ॥१५॥

निर्ममः स्वशरीरेऽपि, तपस्तेपे सुदुस्तपम् । अथ तच्छ्रूयतां किञ्चि–दालोच्य स्वकिल्बिषम् ॥ १६ ॥

अर्हदादिपदध्यायी, विंशतिस्थानकं तपः । निर्विकारश्चकारैष, चतुःशतचतुर्थकैः ॥ १७ ॥

चक्रे पुनस्तपस्त—द्वरिष्ठषष्ठैश्चतुःशतप्रमितैः । विंशतिषष्ठानि ततो, विहरञ्जिनपान् समाश्रित्य ॥१८॥

तीर्थाधिपवीरविभोः, षष्ठानि नवेक्षणाङ्कि २२९ मितानि ।

पाक्षिकमुखेषु पर्वसु, षष्ठानि बहूनि चान्यानि ॥ १९ ॥ युग्मम् ॥

द्वादशानि प्रभुः पञ्च, चक्रे प्रथमकर्मणः । तानि पञ्चान्तरायस्य, नवैव दशमानि तु ॥ २० ॥
दर्शनावरणस्यापि, मोहनीयस्य कर्मणः । अष्टाविंशतिसङ्ख्यानि, विशिष्टाष्टमकानि च ॥ २१ ॥

अष्टमदशमान्येवं, वेद्ये गोत्रे तथाऽयुषि बहूनि ।
कृतवान् भगवाञ्शान्तो, न च जज्ञे कर्मणस्तु तपः ॥ २२ ॥
ततश्च विहितानशनः, श्रीमानानन्दविमलसूरीन्द्रः ।
समवाप नाकसौख्यं;-चेतसि निहितैश्चतुःशरणैः ॥ २३ ॥
आसँस्तदीयपट्टे, प्रभवः श्रीविजयदानसूरीन्द्राः ।
सर्वत्र विजयवन्तो, नयवन्तः समयवन्तश्च ॥ २४ ॥

अथ हीरगुरोर्वर्णनमाह—

अभूत्पट्टे तस्यास्खलितविजयो हीरविजयो, गुरुर्वृन्दारौघप्रथितमहिमाऽत्रापि समये ।
सुरत्राणो बुद्धो ह्यकबरनृपो यस्य वचसा, घृणाध्यानं ध्यायन् व्यतनुत महीमार्हतमयीम् ॥ २५ ॥

विजयसेनमुमुक्षुपुरन्दरः, पदममुष्य ततः समभूषयत् ।
उदयभूमिभृतः शिखरं शर—द्विशददीप्तिरिवाम्बरकेतनः ॥ २६ ॥

विजयतिलकः सूरिः पट्टं तदीयमदीदिपत्, दिनकर इवाकाशं स्तोमं त्यजँस्तमसां जवात् ।
कृतजनमनःपद्मोल्लासः कुतर्कहिमापहः, प्रचलितमहादोषः प्रास्तोदयः सुदिनः श्रियाम् ॥ २७ ॥

तदनु विजयपूर्वानन्दसूरिः पदेऽत्र, शशिकरनिकरश्वेतार्थवादप्रसारः ।
प्रथितविजयपद्मक्ष्मापतिष्विन्द्रभूतेः, प्रतिनिधिरतिदक्षो हीरसूरेर्विनेयः ॥ २८ ॥

विजयराजगुरुर्महतीं द्युतिं, निजगणेऽधिकबोधिनिधिर्दधौ ।
व्रतमहाम्बुधिवर्धितचिद्विधिः तदनु शासनसद्मसुदीपधिः ॥ २९ ॥

विजयमानमुनीशर[1]भूत्ततः, त्रिभुवनेश्वरचिन्तनलालसः ।
समकुचत्रपया हृदि यद्गिरां, मधुरिमाधरिता किमु गोस्तनी ॥ ३० ॥

विजयऋद्धिगणेशो[2] बभूव त-- द्गुरुपदे जनतां नयतां नयन् ।
समयवाग्विधिजल्पनपेशलः, प्रथममागमदर्शक[3] मादृशान् ॥ ३१ ॥

सौभाग्यसूरिर्विजयाङ्कितो यः, पट्टे तदीये गुरुराज आसीत् ।
यस्य प्रभावाद्गुणरत्नपात्रं, स्याद्वादतत्त्वं सविधं समेति ॥ ३२ ॥

सौभाग्यसूरिशिष्येण, श्रीलक्ष्मीसूरिणा मुदा । लिखिता विजयेनेयं, गुर्वाली सौख्यदा सदा ॥ ३३ ॥

सतीर्थ्यो गुणवान् धीरः, श्रीप्रेमविजयाभिधः ।
जयति मद्गुरोः शिष्यः, तदर्थं विहितोद्यमः (तदर्थमयमुद्यमः) ॥ ३४ ॥

---

१ मुनीशः अभूत्, अत्र विसर्गस्य रेफश्चिन्त्यः. २ अत्र विसर्गलोपश्चिन्त्यः. ३ विसर्गलोपश्चिन्त्यः.

कुमारः प्राह—

जीवितं कुशशिखास्थमिवाम्भः, पांसुलेव तरला कमलाऽपि।
ऐक्षवाग्रमिव यौवत(न)मेतत्, प्रेक्षणक्षण इव स्वजनोऽपि ॥ १ ॥
यक्ष्मिष्यति ममार्जकभावो-ऽलङ्करिष्यति तनुं च युवश्रीः।
वार्धकं पुनरमात्यमिव स्वं, भूषयिष्यति क इत्यवगच्छेत् ॥ २ ॥

इत्याद्यनेकपरस्परोक्तिभिः श्रान्ता भगिन्याद्या दीक्षादेशं ददुः। ततः सं० १५९६ वर्षे कार्तिककृष्णद्वितीयायां हीरकुमारो दीक्षां ललौ। हीरहर्ष इति नाम दत्तं। गुरुपार्श्वे पठन् स्वसमयज्ञो जातः। परदेशभाषापरशास्त्रज्ञातुकामो दक्षिणदेशं प्रति ययौ। तद्देशे श्रीमाणिक्यनाम्नो नाभेयोऽस्ति। श्रीअन्तरिक्षपार्श्वदेवो वर्तते। यतः—

अपि पार्श्वजिनोऽन्तरिक्षका—भिध उच्चैःस्थितिकैतवादिह।
किमु लम्भयितुं महोदयं, भविनां भूवलयात् प्रचेलिवान् ॥ १ ॥

तथा च—

करहेटकपार्श्वनायको, दिशि यत्रास्ति पुनः प्रभाववान्।

---

१ युवतीनां समूहः इक्षुसंबन्ध्यग्रमिव नीरसः इत्यर्थः. २ आत्मानं, यथा वृद्धावस्था मन्त्रिणं भूषयति तथा.

न जहाति कदापि यत्पदं, किमु तस्यैव समीहया फणी ॥ १ ॥
विभवैः सह माधवादयः प्रतिवर्षं यमुपेत्य भेजिरे ।
किमिदं गदितुं तनूमतां, मरुतामप्ययमेव देवता ॥ २ ॥
इह जीवत आदिमप्रभो—रपि सोपारकनामपत्तने ।
प्रतिमा प्रतिभासते सतां, वृषकोषः प्रकटः किमार्षभेः ॥ ३ ॥

तद्देशे देवगिरिदङ्गे विप्रपार्श्वे तर्कशास्त्रादिकं पठित्वा गुरुसमीपमाययौ । गुरुणा वाचकपदं दत्तं । ततः श्रीसूरिमन्त्रदेवताज्ञया सूरिपदं दत्तं सं० १६१० वर्षे पौषशुक्लपञ्चमीदिने । ततः श्रीगुरुः पृथ्व्यां विहरति स्म ।

इतश्चाकबरसभायामनेकजातिसंकुलायां निजनिजधर्मवर्णनं प्रसृतं । तन्मध्ये एकेन विदुषा पुरुषेण श्रीहीरगुरोर्वर्णनं कृतम्—

अस्माभिरीशितरहश्यत दर्शनेषु, सर्वेषु शेखर इवाखिलधार्मिकाणाम् ।
एकः स हीरविजयाभिधसूरिराजः, क्ष्मापालपङ्क्तिषु भवानिव भूमिपीठे ॥ १ ॥

इत्यादिसभ्यजनवर्णितसूरिगुणश्रवणानन्तरं दत्तविज्ञप्तिस्फुरमानकरौ द्वौ दूतौ ग्वाटदेशस्थगन्धारव-

---

१ कृष्णप्रमुखाः सर्वे देवाः. २ ऋषभदेवप्रतिमायाः. ३ हे ईशितः.

न्दिरेऽकब्बरः प्राहिणोत् । तौ दूतौ सङ्घसेवितपादाम्बुजानां श्रीगुरूणां पाणिपद्मे तत्स्फुरमानं ददतुः । तदा श्राद्धैर्विज्ञप्तिः कृता—

प्रदेशीव केशिव्रतिक्षोणिशक्रै-रसौ बोधनीयो नृपः पूज्यपादैः ।
महान्तो हि विश्वोपकृत्यै यतन्ते, घनाः किं न सर्वं जगज्जीवयन्ति ॥ १ ॥
प्रणिघ्नन् वने व्याधवन्नैकसत्त्वा—नसत्त्वीकृताशेषविद्वेषिवर्गः ।
ततो हेमचन्द्रेण चौलुक्यचन्द्रमा—निवासौ त्वयाऽकब्बरो बोधनीयः ॥ २ ॥

ततः श्रीगुरुर्विहारं कुर्वन् राजद्रङ्गसमीपं समागात् । श्रीसाहिबखानेन द्रङ्गाधिपेन बहादरभक्त्या स्वराजधाम्नि समानीय गुरोः पुरो हयगजरथमणिशिबिकादयो ढौकिताः, तदनु स व्यजिज्ञपत्—"हे स्वामिन्! अकब्बरसाहिवाक्यतोऽहं ढौकयामि, त्वं गृहाण । यतः—

साहिश्रीमदकब्बरावनिभुजेत्यादिष्टमास्ते मम, द्युम्नस्यन्दनवाजिवारणमुखं संपूर्य तत्कामितम् ।
श्रीसूरीश्वरहीरहीरविजयं संप्रापयेस्त्वं मया, न्यासं स्वीयमिवाञ्छियस्व तदिदं विश्राणयमानं मया ॥१॥"

सूरिः स्माह—"वयमकिञ्चना नित्यमनुपानत्पादचारिण एवार्हाः," ततः सूरिर्विहरन् अर्बुदाचलमाययौ । यतः—

वैमलीयवसतिं प्रतीशिता, दुग्धसिन्धुवयसीमिवैक्षत ।
श्वेतदन्तितुरगान्वितां सुधा—शालिनीं जिनपवित्रितास्त्ररराम् ॥ १ ॥

ततो वस्तुपालवसतेश्चैत्यं ननाम । यतः—

तं रैवतोर्वीधरवत्पवित्री—चिकीर्षयेवार्बुदमभ्युपेतम् ।
निरीक्ष्य तस्मिन्नयनाभिरामं, ननाम शैवेयजिनं यतीन्द्रः ॥ १ ॥
चौलुक्यचैत्यं विधृतामृतश्री, धर्मप्रपास्थानमिवैष मार्गे ।
नत्वा मुनीन्द्रोऽचलदुर्गमध्ये, चतुर्मुखे(खं) नाभिसुतं व्यनंसीत् ॥ २ ॥

ततो राणपुरे नलिनीगुल्माकारं धरणासाहेन कारितं चैत्यं ननाम । यतः—

चातुर्गतीयार्त्तिमहान्धकूपो—द्दिधीर्षया शेषशरीरभाजाम् ।
मूर्त्तीश्चतस्रः कलयन्निवास्मिन्, मुनीन्दुनाऽदर्शि युगादिदेवः ॥ १ ॥

ततो मेरुतानगरे श्रीफलवर्धिपार्श्वदेवं प्रणेमिवान्, श्रूयते हि तद्बिम्बपार्श्वेऽपरा कापि जिनप्रतिमा स्थातुं न शक्यते, अतश्चैकाक्येव तिष्ठति । यतः—

एकोऽहमेव त्रिजगज्जनानां, पिपर्मि कामानपरानपेक्षः ।
इति स्मयावेशवशादिवान्तः, परानपास्य स्थित एक एव ॥ १ ॥

तथा च फलवर्धिपार्श्वनाथद्वारि कपाटौ न तिष्ठतः, कदाचित्कश्चिदानीय योजयति तदा प्रभाते प्रासादात्क्रोशद्वयोपरि पतितौ दृश्येते न द्वारि स्थितौ इति । तत्र श्रीजिनं नत्वा श्रीसूरिः क्रमेण फतेपुरसमीपे आययौ । तत्र थानसिंहः साहिसेवकस्तथाऽमीपालोऽपि साहेः प्रतिदिनं नालिकेरढौ-

कनकृत्, (ताभ्यां) तथा भानुमुखसङ्घमुख्यैः सार्द्धः सूरेरागमनमज्ञाप्यत। ततो नृपाज्ञां प्राप्य श्रीसङ्घः प्रौढैर्महोत्सवैः फतेपुरस्य (रात्) साहिराजधान्याः शाखापुरं प्रापयन् (सूरिं)। ततः श्रीसाहेर्गुरुणा शेखे (खे)ण सह प्रथमं सूरिर्धर्मगोष्ठीं व्यतनोत्। तज्जतमानससंशयं दूरीकृत्य श्रीभूपसमीपमेत्य बहुमानादरपूर्वमनेकप्रश्नोत्तरान् विधाय यमनियमजिनतीर्थादिस्वरूपं प्रकाश्य श्रीदयाधर्मवासितं भूपमानसं विहितवान्। ततो भूपः श्रीचित्रशालिकामध्ये श्रीगुरुं निनाय। अथ भूपः सोपानत्रिकेणैव ऊर्ध्वभूमिमाश्रित्य गुरुमाह—"हे व्रतीश्वर! राज्ञामुपवेशनोचितं दुलीचकाख्यमस्मत्सज्जाभूमेराच्छादनं क्रमाम्बुजैः पवित्रीकुरु।

> गुरुर्जगादेति कदापि कीटिका, भवेदधोऽस्मिन्न पदं दधे ततः।
> नृपोऽन्यधादत्र न कश्चनासुमान्, भवेत्सुराणामिव मन्दिरे नरः॥ १॥
> गुरुर्जगावाचरणं तथाऽप्यदः, पदं निजाद्यैव ददे परत्र नो।
> यतः स्वकीयाचरणं मुमुक्षुणा, प्रयत्नतो रक्ष्यममर्त्यरत्नवत्॥ २॥

ततो दुलीचकं करे गृहीत्वा ऊर्ध्वमुत्पाटयति तावन्नृपेण स्वदृष्ट्या पिपीलिका दृष्टाः। जातविस्मयः स गुरुं श्लाघते स्म। तत्र विधिनोपविश्य निःस्पृहो धर्मरहस्यं प्राह। तत आगरानगरे चतुर्मासकं कृत्वा श्रीचिन्तामणिपार्श्वेशप्रतिमाप्रतिष्ठापनं चकार। यतः—

१ भाषायां 'गलीचो.'

मणिं सुराणां तनुमत्समीहित—प्रदित्सयेव त्रिदिवादुपागतम् ।
स तत्र चिन्तामणिपार्श्वतीर्थपं, महामहेन प्रतितस्थिवान् प्रभुः ॥ १ ॥

पुनः फतेपुरागमने साहेर्मिलनं च । साहिदत्ताश्वादिवस्त्वनुपादाने सूरेः प्रत्युत्तरं वचो नृपस्य, यतः—

शशंस सूरिं कमिता ततः क्षितेः, किमप्युपादाय कृतार्थ्यतामहम् ।
न यत्करः पात्रकरोपरि स्म भूत्, स मोघजन्मा विपिनप्रसूनवत् ॥ १ ॥

इति दानाय पुनः पुनराग्रहपरं भूपं प्रति गुरुः पक्षिमोचनं ययाचे, ततो नृपेण पञ्जरेभ्यः पक्षिणो मोचिताः, पर्युषणाद्वादशदिनामारिप्रदानस्फुरमानार्पणं कृतम्, साहिना कारिते द्वादशक्रोशप्रमाणेऽद्द-ग्गोचरपारे डामराख्यमहातटाके मीनादिवधो निषिद्धः, पुनः श्रीगुरुं प्राह—

प्राग्वत्कदाचिन्मृगयां न जीव—हिंसां विधास्ये न पुनर्भवद्वत् ।
सर्वेऽपि सत्त्वाः सुखिनो वसन्तु, स्वैरं रमन्तां च चरन्तु मद्वत् ॥ १ ॥

मृगयामोचनजीजीयाकरशत्रुञ्जयाङ्किरमोचनादिपुण्यक्रियामनेकधा कारयित्वा श्रीगुरुरन्यत्र विजहारेति ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ त्रयोविंशे स्तम्भे
एकोनषष्ठ्यधिकत्रिशततमं व्याख्यानम् ३५९ ॥



## षष्ठ्यधिकत्रिशततमं व्याख्यानम् ३६० ॥

अथाग्रे किञ्चित् श्रीसूरिसंबन्धमाह—

जगद्गुरुरिदं राज्ञा, बिरुदं प्रददे तदा । तदहन्नन्यदेशेषु, विजहार गुरुः क्रमात् ॥ १ ॥

स्पष्टः । अत्रार्थसमर्थनार्थमियं भावना—श्रीगुरुर्विहरन् मथुरापुर्यामागात्, यतः—

समहं मथुरापुर्यां, यात्रां पार्श्वसुपार्श्वयोः । प्रभुः परीतः पौरौघै—श्चारणैरिवाकरोत् ॥ १ ॥

जम्बूप्रभवमुख्यानां, मुनीनामिह स प्रभुः । ससप्तविंशतिं पञ्च—शतीं स्तूपान् प्रणेमिवान् ॥ २ ॥

ततो गोपालशैले नाभेयं नतवान्, यतः—

द्वापञ्चाशद्गजमित—वृषभप्रतिमां स सिद्धशैल इव ।
प्रभुरपरा अपि तस्मिन्, मूर्त्तीर्जैनीरनंसीत्सः ॥ १ ॥

ततः—

वरकाणकमागत्य, पुरं सूरिपुरन्दरः । वरकाणकपार्श्वेशं, साक्षात्पार्श्वमिवानमत् ॥ १ ॥

ततः क्रमेण सिद्धाचलदर्शनं स्तवनं विधाय अजयपुर एत्य च सङ्घलोकानां पुरस्तात् श्रीअजयपार्श्वनाथचरित्रं किञ्चिदाह, तद्यथा—

कश्चित्सागरेभ्यो व्यापारं कर्तुमब्धिमध्याध्वना प्रास्थित । दैवात् जलविजलदोत्पातौ तत्रोत्पन्नौ ।

तदा कल्पान्तकाल इव स्वपोतलोकानां संहारं प्रेक्षितुमक्षमः प्राग्मर्तुकामो यावज्जलधौ झम्पां प्रदत्ते तावत्पद्मावती देवीमां वाणीं वदति स्म, यतः—

"मध्येऽम्बुधेरस्ति समस्तदुःख–पाथोधिमन्थावनिभृत्प्रभावम् ।
निधानमम्भोनिधिमेखलाया, इवान्तरे पार्श्वजिनेन्द्रबिम्बम् ॥ १ ॥

हे धनपते ! नाविकलोकैर्जलधिसलिलात्कर्षयित्वा संपूज्य च यानपात्रे स्थापितं सत् त्वदीयं विघ्नं हरिष्यति । पुनर्हे इभ्य ! स्वर्द्रुमपर्णैर्निर्मितां मञ्जूषां नोद्घाटयेः । तादृशीं तां द्वीपबन्दिरे त्वं नयेः । तत्र दिग्यात्रार्थं समेतस्याजयनाम्न उर्वीशितुरर्पयेः, अस्या मूर्त्तेः स्नात्रजलसिञ्चनान्नृपस्य सप्तोत्तरशतरोगा यास्यन्ति" । इति पद्मावतीवाक्यश्रवणाज्जनैर्नीरमध्यात्तां पेटामानाय्य स्वपोते स्थापितवान्, ततः सर्वोपद्रवशान्तिर्बभूव । यतः—

ध्यातोऽधुनाऽप्येष पयोधिमध्ये, प्रयाति वाते प्रतिकूलभावम् ।
निर्विघ्नयन् पोत इवाङ्गभाजः, प्रभुः सुखं लम्भयति प्रतीरम् ॥ १ ॥

तत इभ्यस्तां पेटां वृत्तं निवेद्य नृपाभ्यर्णे मुमोच । नृपो विनयेन बिम्बं प्रकटीकृत्याजयाख्यं पुरं निवास्य महच्चैत्यं विधाप्य तत्र बिम्बं संस्थाप्य तदभिषेकजलस्पर्शान्निर्गदो बभूव । पूर्वमजयपार्श्वनाथ इति नाम प्रसृतम्, अधुना तु अजारग्रामः, तद्ग्रामनाम्नाऽजारपार्श्वनाथ इति प्रसिद्धिः । विस्तरस्त्वेतद्व्यतिकरः शत्रुञ्जयमाहात्म्यादवसेयः ।

अथ सूरेर्दीक्षादिनादारभ्य यत्किञ्चित्तपो विहितं तदुच्यते—

सूरीन्दुरेकाशनकं न याव—ज्जीवं जहौ न्यायमिव क्षितीन्द्रः ।
पश्चापि चासौ विकृतीरहासी—द्दुणान् स्मरस्येव पराबुभूषुः ॥ १ ॥
द्रव्याणि वह्न्जावसरे व्रतीन्द्रः, सदाददे द्वादश नाधिकानि ।
किं जावनाः पोषयितुं विशिष्य, जवाब्धिपारप्रतिलम्भयित्रीः ॥ २ ॥

स्वपापालोचपदे सूरिः त्रिशतीमुपोषणानां व्यतानीत्, सपादां द्विशतीं षष्ठानकरोत्, चतुर्विंशति-त्रिकध्यातुमना अष्टमानां द्वासप्ततिं निर्मिमीते स्म, पुनराचाम्लसहस्रयुग्मं चक्रे, पुनर्विंशत्याऽऽचाम्लैर्विंशतिस्थानकान्यातनुते स्म, पुनर्द्विसहस्रनिर्विकृतीश्चक्रे । पुनः स एकदत्तिः एकस्मिन् वारके पात्रे यत्रानवच्छिन्नं पानीयान्नादिकं पतेत्सा एकदत्तिरुच्यते, यस्मिंश्चैकमेव सिक्थं भुज्यते नान्यत् तदेकसिक्थं, तत्प्रमुखानि तीव्राणि तपांसि चक्रे । पुनः सहस्रत्रयोत्तरपट्शतानि उपवासान् चकार । पुनः प्रथममुपवासस्तत एकभक्तं तत आचाम्लं पुनरुपोषणम्, एवं त्रयोदश मासान् यावद्विजयदानगुरोस्तपो विदधे । पुनर्द्वाविंशति मासान् यावद्योगवाहनैः कृत्वा तीव्रतपांसि कृतवान् । पुनर्मासत्रयं यावत्सूरिमन्त्रं विधिनाऽऽरराध । पुनश्चतुःकोटिमितान् स्वाध्यायान् गणयति स्म । पञ्चाशदर्हत्प्रतिमाप्रतिष्ठा

१ आहारकरणसमये.

अनुतिष्ठति स्म । इत्यादिबहुविधधर्मकृत्यानि विधायोन्नताख्ये पुरे सं० १६५२ भाद्रपदसितैकादशी-
तिथौ महामन्त्रं स्मरन् देवभूमिं प्रापेति ।

सूरिस्ततः संश्रयति स्म शुक्ल—ध्यानं दधानः स सुधाशसौधम् ।
काङ्क्षन्महानन्दपुरे प्रयातुं, प्राक्तस्य मार्गस्य दिदृक्षयेव ॥ १ ॥

इत्यब्ददिनपरिमितोपदेशसङ्ग्रहाख्यायामुपदेशप्रासादग्रन्थवृत्तौ पञ्चदशभिरसा-
त्रिश्चतुर्विंशतिशततमः स्तम्भः संपूर्णः, मूलतः
त्रिशत्युत्तरषष्टितमः संवन्धः ३६० ॥

## त्रिशत्युत्तरैकषष्टितमः संबन्धः ३६१ ॥

अथ प्रासादादिवर्णनमाह—

श्रीसिद्धाचलप्रासादं, सोपानादिस्फुरत्प्रभम् । कुम्भशृङ्गध्वजायुक्त—मार्हन्त्यं तं स्तवीम्यहम् ॥१॥

स्पष्टः । अत्रेयं भावना–सिद्धाचलसदृशो भूभृन्नास्ति । यतः—

तावल्लीलाविलासं कलयति मलयो विन्ध्यशैलोऽपि तावत्, धत्ते मत्तेभगर्वं तुहिनधरणिभृत्तावदेवाभिरामः ।
तावन्मेरुर्महत्त्वं वहति हरगिरिर्गाहते तावदाज्ञां, यावत्तीर्थाधिराजो न तु नयनपुटैः पीयते पर्वतेन्द्रः ॥ १ ॥

तत्र गिरिवरे प्रासादः पूर्वं भरतकारितोऽनुत्तरमहिमान्वितः, यतः—

तमीश इव तारकैर्ग्रहपतिर्ग्रहौघैरिवा–सुरेश्वर इवासुरैरिव सुरैः सुरेशः पुनः ।
नरेन्द्र इव मानवैर्वृषभकेतनार्हद्गृहं, गृहैर्लघुभिरर्हतां स्फुरति सर्वतोऽलङ्कृतम् ॥ १ ॥

स प्रासादः कीदृशः ? सोपानादिभिर्दीप्तिमान्, आदिशब्दात्तोरणाङ्कितः, यतः—

जिनेन्द्रसदनाग्रतोऽद्भुतदनल्पशिल्पोल्लसत्सुवर्णमणितोरणं शिवसुधाब्धिजाकार्मणम् ।
निरङ्कमपवर्गपूःप्रथमसाधनप्रक्रमे, जिनावनिविभौजसः किमिह मुक्तिगेहे गिरौ ॥ १ ॥

मण्डपालङ्कृतं च, यतः—

अनन्यशिवकन्यकां मनसि धर्मभूमीभृता, प्रदातुमिह काङ्क्षतोचितवराय कस्मैचन ।
स्वयंवरणमण्डपो मणिसुवर्णचित्रश्रियाश्रितः किमु विधापितः स्फुरति यन्महामण्डपः ॥ १ ॥

तथा प्रासादस्तम्भाः सुष्ठु वर्ण्याः सन्ति, यतः—

हरिर्य इह सेवकस्तव जिनेन्द्र सोऽस्मद्रिपुन्विधापय मिथस्ततस्त्वदमुना समं सौहृदम् ।
इतीव गदितुं वृषध्वजजिनायस्तम्भकोपधेरखिलभूभृतः प्रभुमुपेत्य शीलन्त्यमी ॥ १ ॥

पुनः कीदृशं तं शिखरं ? यतः—

युगादिजिनमन्दिरे शिखरमम्बराडम्बरं, विडम्बयति चण्डरुक्किरणमण्डलं वैभवैः ।
पुनर्निजसपक्षतामिव समीहमानो जिनं, भजभ्रमरभूधरो भुवनकामितस्वस्तरुम् ॥ १ ॥

धनादि-जगदीहितं प्रभवितास्मि दातुं पुनः, शिवादिकमलाकरं प्रणय मां प्रभो त्वामिव ।
इतीव जगदीश्वरं गदितुमुत्सुकीभावुकः, समेत्य सुमनोनिपो भजति चैत्यशृङ्गे स्थितः ॥ १ ॥

पुनस्तं ध्वजाढ्यम्, यतः—

विभाव्य भुवनत्रये स्वविभवाङ्ककारव्रजान्, विजेतुमनसाऽमुना किमु जिनेशितुः सद्मना ।
सपत्ननिवहस्मयाम्बुनिधिमाथमन्थाचलं, शिरःशिखरसंस्फुरन्निविकदण्डरत्नं दधे ॥ १ ॥

विजित्वरविभूतिभिः प्रतिपदं परिस्पर्धिनो, विजित्य जिनसद्मना जगति वैजयन्तादिकान् ।
द्विषद्विजयबोधिकाध्रियत मूर्ध्नि मन्येऽमुना, विहारशिखरे मरुत्तरलवैजयन्ती व्यभात् ॥ १ ॥

पुनस्तं कीदृशं ? सार्हतं गर्भागारस्थितम्, यतः—

अनेकनरनिर्जरोरगपुरन्दरोपासितं, सदःसदनमुन्नये विमलशैलभूमीभुजः ।
वृषाङ्कजिनवासवौकसि विचित्रतौर्यत्रिकप्रपञ्चपटुमण्डपे श्रियमुवाह गर्भालयः ॥ १ ॥

युगादिसमये यथा भुवनमुद्धृतं संसृते-स्तथैव पुनरुद्धराम्यहमवद्यकाले कलौ ।
विचिन्त्य किमिदं हृदा वृषभकेतुरत्रात्मनावतीर्य कुरुते स्थितिं स्थिरतयात्ममूर्त्तिच्छलात् ॥ १ ॥

जयामृतविभूतिभाग्घन इवातिधीरध्वनिर्निरञ्जनतयोदितो जलजवद्विशुद्धाशयः ।
सुधारस इव प्रभो सकलजन्तुजीवातुको, भवाब्धवभृतोऽम्बुधेर्जगति पोतवत्तारयन् ॥ १ ॥

अथोपदेशप्रासादे दिङ्मात्रशेषप्रासादावयवभाववर्णनमाह—

अत्रोपदेशप्रासादे, अष्टौ बुद्धिगुणाः स्तुताः । सोपानसदृशा ज्ञेयाः, शास्त्रशीर्षप्रदर्शकाः ॥ १ ॥
विकथावर्जनं शश्वत्, सप्तभेदं च वर्णनम् । द्वारं तदेव विज्ञेयं, प्रवेशने हितावहम् ॥ २ ॥
अनुयोगाश्चतुर्भेदा—स्तदाख्यानं हि तोरणम् । विचित्ररचनायुक्तं, ध्यातव्यं शास्त्रसद्मनि ॥ ३ ॥
द्विद्विभेदैर्विभक्तानि, द्वादशधा व्रतान्यथ । चतुर्विंशतिकानि स्यु—स्तेऽत्र स्तम्भा उदाहृताः ॥४॥
मनोवाक्काययोगानां, शुद्धिर्या त्विह गद्यते । स एव मण्डपो धार्यः, असत्प्रवृत्तिवारकः ॥ ५ ॥
गवाक्षादीनि वस्तूनि, युज्यन्ते यानि मन्दिरे । नातिचारव्रतान्येव, ज्ञेयानि शास्त्रपाठकैः ॥ ६ ॥
सप्तशतनयासक्तं, स्याद्वादद्योतकं वचः । तदेव शिखरं चात्र, निर्मलं द्युतिमन्महत् ॥ ७ ॥
रत्नत्रयस्तवारम्भः, कुम्भः, संदर्शितो महान् । अनन्ताव्ययसंपत्ति–शिवस्तुतिर्ध्वजा स्मृता ॥ ८ ॥

शुद्धाशये गर्भगृहे प्रविष्ट—श्चिद्रूपमूर्त्तिः स्फुटशंप्रदोऽस्तु ।
स्वामः स्वयंभूर्भुवनाधिनाथः, सौभाग्यलक्ष्मीप्सितदोऽन्वहं सः ॥ ९ ॥
शक्राश्चतुःषष्टिरथेह विद्या—देव्यस्तथा षोडश शासनेशाः ।
द्विधाचतुर्विंशतिदेवताश्च, रक्षन्तु प्रासादममुं सुभद्रम् ॥ १० ॥

श्रीशान्तीशनमस्कार—स्तदाद्यं मङ्गलं मतम् । सहस्रशिखरेशानां, वन्दनं तद्द्वितीयकम् ॥ ११ ॥
श्रीशासनसुरध्यानं, तदेवान्तिममङ्गलम् । श्रोतॄणां पाठकानां च, श्रेयः कुर्वन्तु नित्यशः ॥ १२ ॥

इत्युपदेशप्रासादे प्रासादाङ्गवर्णनरूपः त्रिशत्युत्तरैकषष्टितमः संबन्धः ३६१

## अथ प्रशस्तिः

अनन्तकल्याणनिकेतनं तं, नमामि चिन्तामणिपार्श्वशम्भुम् ।
यस्य प्रभावाच्चुन्नसाध्यसौध—मध्यास्त निर्विघ्नमसौ प्रयत्नः ॥ १ ॥

सूरिमन्त्रसुरादेशः, तन्मन्त्राराधनोद्यमात् । स्तम्भतीर्थे च संजातो, येषां तेषां स्मराम्यहम् ॥ २ ॥
श्रीमद्विजयसौभाग्य—सूरयो गुणभूरयः । ऐक्य(एक)कोटिनमस्कार–ध्यायका गुरवः स्तुताः ॥ ३ ॥
श्रीविजयादिलक्ष्मीसू—रिणा तद्विनेयेन हि । वर्णन्यासीकृतो ग्रन्थो, दृष्टाक्षरानुसारतः ॥ ४ ॥

इत्युपदेशप्रासादस्याब्दाहर्मितोपदेशसङ्ग्रहा वृत्तिरियं लिखिता प्रेमादिविजयपठनकृते ।

गुणगतिवसुशशि १८४३ वर्षे, कार्तिकमासे समुज्ज्वले पक्षे ।
गुरुपूर्णायां समजनि, सफलो यत्नः सुपञ्चम्याम् ॥ ५ ॥

यावत्तिष्ठति मेरु–र्यावज्जिनशासनं जगन्मध्ये । यावज्ज्योतिश्चक्रं, तिष्ठति सुरवाहिनी यावत् ॥ ६ ॥
ग्रन्थस्यास्य विजयतां, वृत्तिः श्रीज्ञानसंज्ञवा तावत् । पुरगुणमानसमराल–विद्वद्भिर्वाच्यमानाऽसौ ॥७॥

यदनाभोगात् किञ्चि—द्बुद्धेर्वैकल्यदोषतः किञ्चित् ।
किञ्चिदौत्सुक्येन च, स्मृतिविरहदोषतः किञ्चित् ॥ ८ ॥
अत्रोत्सूत्रं शास्त्रे, रभसाऽऽख्यातं मयाऽखिलं क्षमताम् ।

विद्वज्जनवर्गस्त–त्क्षमानिधिर्जनयितेव सुते ॥ ९ ॥
दृष्टान्तशास्त्रादिविरुद्धमत्र, यत्किञ्चिदुक्तं मतिमान्द्ययोगात् ।
ईर्ष्यादि हित्वा मयि शुद्धचित्ताः, कारुण्यमाधाय विशोधयन्तु ॥ १० ॥
एतद्ग्रन्थलिखनप्रचिन्तनात् सुकृतान्निरन्तरं भूयात् । श्रीजिनधर्मप्राप्तिः श्रोतुश्चोक्तुः पठितुश्च ॥ ११ ॥
सर्वकल्याणकारणं, सर्वश्रेयस्कसाधनम् । प्रशस्यपुण्यकृत्यानां, जयत्यार्हतशासनम् ॥ १२ ॥
॥ इत्युपदेशप्रासादसंबन्धः संपूर्णः ॥

॥ समाप्तोऽयं चतुर्थो विभागः ॥

**समाप्तोऽयं उपदेशप्रासादग्रन्थः**